शाकुन्तला—( सरोषमिव । ) अणसूए, गमिस्सं अहं । अनसूये, गमिष्याम्यहम् ।

अनसूया—किंणिमित्तं । किंनिमित्तम् ।

शाकुन्तला—इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवेदइस्सं । इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि ।

अनसूया—सहि, ण जुत्तं अकिदसक्कारं अदिधिविसेसं विसज्जिअ सच्छन्ददो गमणं । सखि, न युक्तमकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् ।

( शकुन्तला न किंचिदुक्त्वा प्रस्थितैव )

राजा—( ग्रहीतुमिच्छन्निगृह्यात्मानम् । आत्मगतम् । ) अहो चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । अहं हि

अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ २९ ॥

प्रियंवदा—( शकुन्तलां निरुध्य । ) हला, ण दे जुत्तं गन्तुं । हला, न ते युक्तं गन्तुम् ।

शाकुन्तला—( सभ्रूभङ्गम् ) किं णिमित्तं । किंनिमित्तम् ।

प्रियंवदा—रुक्खसेअणे दुवे धारेसि मे । एहि दाव । अत्ताणं मोचिअ तदो गमिस्ससि । ( इति बलादेनां निवर्तयति ) वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि ।

राजा—भद्रे, वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये । तथा ह्यस्याः

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।

gem capable of being touched. (28)

ŚAKUNTALĀ (*Feigning anger*). Anasūyā, I am going.

ANASŪYĀ. What for?

ŚAKUNTALĀ. I am going to tell the venerable Gautamī how impertinently Priyaṁvadā has been prattling.

ANASŪYĀ. It is not proper, my friend, for you to leave at will, before the rites of hospitality are done to an honoured guest.

(*Śakuntalā has already started without saying anything.*)

KING (*Wishing to detain her, then checking himself, aside*). Ah! the state of a lover's mind is an exact reflection of bodily movement; for

Thinking of following the hermit's daughter, all at once I have been held back from advancing by decorum; although not moving from my place it seems as if I had gone and turned back again. (29)

PRIYAṀVADĀ (*Detaining Śakuntalā*). Dear, it is not proper for you to leave.

ŚAKUNTALĀ (*Knitting her eyebrows*). Why not?

PRIYAṀVADĀ. You owe me the watering of two trees. Come then, you will pay your debt and then you can leave.

(*She forces her to turn back.*)

KING. Good lady, it is only by watering trees that the lady, I imagine, is wearied. For,

Her shoulders droop, and the palms of her hands are excessively reddened by lifting up the watering-jar; even now her breathing which is heavier than usual causes a heaving of her breasts; on her face a collection of the drops of sweat has broken out, impeding (the

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥ ३० ।

तदहमेनामनृणां करोमि । ( इत्यङ्गुलीययं दातुमिच्छति । )

( उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः । )

राजा—अलमस्मानन्यथा संभाव्य । राज्ञः परिग्रहोऽयमिति राजपुरुषं मामवगच्छथ ।

प्रियंवदा—तेण हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीविओअं । अज्जस्स वअणेण अणिरिणा दाणिं एसा । ( किंचिद्विहस्य । ) हला सउन्दले, मोइदासि अणुअम्पिणा अज्जेण, अधवा महाराएण । गच्छ दाणिं । तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगम् । आर्यस्य वचनेनानृणेदानीमेषा । हला शकुन्तले, मोचितास्यनुकम्पिनार्येण, अथवा महाराजेन । गच्छेदानीम् ।

शकुन्तला—( आत्मगतम् । ) जइ अत्तणो पहविस्सं । ( प्रकाशम् । ) का तुमं विसज्जिदव्वस्स रुन्धिदव्वस्स वा । यद्यात्मनः प्रभविष्यामि । का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ।

राजा—( शकुन्तलां विलोक्य, आत्मगतम् । ) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात् । अथवा लब्धावकाशा मे प्रार्थना । कुतः ।

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यभिमुखं मयि भाषमाणे ।
कामं न तिष्ठति मदाननसंमुखीयं
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ ३१ ॥

( नेपथ्ये । )

भो भोस्तपस्विनः, संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

play of) the Śirīsa flower in her ear; and the braid getting loose, her dishevelled hair are held together with one hand. (30)

So I will pay back her debt. (*Desires to give a ring.*)

(*Both reading the letters of the name on the seal look at each other.*)

KING. Do not take me to be different (from what I am); this is a present from the king; so, know me to be the king's officer.

PRIYAṀVADĀ. Then indeed this ring does not deserve to be separated from your finger. Your word has already remitted her debt. (*Smiling a little*). Well, Śakuntalā, you are set free by the kind gentleman—or rather by the king himself. So you can go.

ŚAKUNTALĀ (*To herself*). If I have power over myself! (*Aloud*). Who are you to send me away or hold me back?

KING (*Looking at Śakuntalā; to himself*). Is it possible that she feels towards me as I do towards her? Or rather there is ground for hope. For

Although she mingles not her speech with mine, yet when I speak she turns her ear directly opposite to me. Granted that she does not stand with her face turned towards mine, nevertheless, her eyes for the most part are not turned to any other object. (31)

(*Behind the scenes*). Ye hermits, keep close at hand to defend the creatures in the pious grove. For they say king Duṣyanta is diverting himself with the chase in the neighbourhood.

तुरगखुरहतस्तथा हि रेणु-
विटपविषक्तजलार्द्रवल्कलेषु।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥ ३२ ॥

अपि च।

तीव्राघातप्रतिहततरुः स्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसंजातपाशः।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥ ३३ ॥

(सर्वाः कर्णं दत्वा किंचिदिव संभ्रान्ताः।)

राजा—(आत्मगतम्।) अहो धिक्। पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति। भवतु। प्रतिगमिष्यामस्तावत्।

सख्यौ—अज्ज, इमिणा आरण्णअवुत्तन्तेण पज्जाउलम्ह। अणुजाणाहि णो उडअगमणस्स। आर्य, अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः। अनुजानीहि न उटजगमनाय।

राजा—(ससंभ्रमम्।) गच्छन्तु भवत्यः। वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे।

(सर्वे उत्तिष्ठन्ति।)

सख्यौ—अज्ज, असंभाविदअदिहिसक्कारं भूओ वि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुं। आर्य, असंभावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम्।

राजा—मा मैवम्। दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि।

शकुन्तला—अणसूए अहिणवकुससूईए परिक्खदं मे चलणं। कुरवअसाहापरिलग्गं च वक्कलं। दाव परिपालेध मं जाव णं मोआवेमि।

The dust raised by the hoofs of his horses, red as the evening twilight, falls like a locust-swarm on the trees of the hermitage having bark-garments, moist with water, suspended on the boughs. (32)

Moreover,

An elephant, alarmed at the appearance of a car, enters the pious grove, scaring the herd of deer, with fetters formed by the clinging of Vratati coils dragged along by his feet; having one of his tusks fixed in a tree-trunk, struck by a cruel blow, a very interruption incarnate of our penance. (33).

(*All listen and are a little bewildered.*)

KING (*To himself*). Alas! my officers are disturbing the holy grove in their search for me. Well I must go back.

THE TWO FRIENDS. Noble sir, this alarm of the wild (elephant) has greatly frightened us. Give us leave to return to the cottage.

KING (*excitedly*). Yes, you go; and it shall be my care that no disturbance happens in your hermitage.

(*All rise.*)

THE TWO FRIENDS. Noble sir, we are ashamed to request that you will give us the pleasure of seeing you once again, since you have not now been received with the hospitality due to a guest.

KING. Nay, not so; I feel honoured by the mere sight of you.

ŚAKUNTALĀ. Anasūyā, my foot is cut by the point of a fresh Kuśa-blade; and my bark-dress is caught on a Kurabaka twig. Wait for me while I loosen it.

अनसूये, अभिनवकुशसूच्या परिक्षतं मे चरणम्। कुरबकशाखापरिलग्नं च वल्कलम्। तावत् परिपालयतं मां यावदेतन्मोचयामि।

( इति राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता। )

राजा—मन्दौत्सुक्योऽस्मि नगरगमनं प्रति। यावदनुयात्रिकान्समेत्य नातिदूरे तपोवनस्य निवेशयेयम्। न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम्। मम हि

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥ ३४॥

( इति निष्क्रान्ताः सर्वे। )

इति प्रथमोऽङ्कः।

*(She casts a glance at the king alone and delaying under pretexts goes out with the two friends.)*

KING. I am not very eager now to return to the city. Meanwhile I will join my followers and encamp at no great distance from the holy grove. I cannot, in truth, divert my mind from occupying itself with (thoughts about) Śakuntalā ;
for my

Body moves onward, but my heart, (as if) unrelated (with the former) runs back, like the silken cloth of a banner borne against the wind. (34).

*(Exeunt Omnes.)*

Here Ends Act One.

# द्वितीयोऽङ्कः ।

( ततः प्रविशति विषण्णो विदूषकः । )

विदूषकः—( निःश्वस्य । ) भो दिट्ठं । एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णो म्हि । अअं मिओ अअं वराहो अअं सद्दूलो त्ति मज्झण्णे वि गिम्हविरलपाअवच्छाआसु वणराईसु आहिण्डीअदि अडवीदो अडविं । पत्तसंकरकसाआइं कडुआइं गिरिणईजलाइं पीअन्ति । अणिअदवेलं सुल्लमंसभूइट्ठो आहारो अण्हीअदि । तुरगाणुधावणकण्डिदसंधिणो रत्तिम्मि वि णिकामं सइदव्वं णत्थि । तदो महन्ते एव्व पच्चूसे दासीएपुत्तेहिं सउणिलुद्धएहिं वणग्गहणकोलाहलेण पडिबोधिदोम्हि । एत्तिएण दाणिं पि पीडा ण णिक्कमदि । तदो गण्डस्स उवरि पिण्डिआ संवुत्ता । हिओ किल अम्हेसु ओहीणेसु तत्तहोदो मिआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउन्दला णाम मम अधण्णदाए दंसिदा । संपदं णअरगमणस्स मणं कहं वि ण करेदि । अज्ज वि से तं एव्व चिन्तअन्तस्स अच्छीसु पभादं आसि । का गदी । जाव णं किदाचारपरिक्कमं पेक्खामि । ( इति परिक्रम्यावलोक्य च । ) एसो बाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं परिवुदो इदो एव्व आअच्छदि पिअवअस्सो । होदु । अङ्गभङ्गविअलो विअ भविअ चिट्ठिस्सं । जइ एव्वं वि णाम विस्समं लहेअं । ( इति दण्डकाष्ठमवलम्ब्य स्थितः ) भो दृष्टम् । एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि । अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजीष्वाहिण्ड्यतेऽटवीतोऽटवीम् । पत्रसंकरकषायाणि कटूनि गिरिनदीजलानि पीयन्ते । अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते । तुरगानुधावनकण्डितसंधे रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याः पुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि । इयतेदानीमपि पीडा न निष्क्रामति । ततो गण्डस्योपरि पिण्डिका संवृत्ता । ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका

## ACT II.

(*Then Enter Vidūṣaka dejected.*)

VIDŪṢAKA (*Sighing*). Oh my fate! I am tired of being friends with this king who is so addicted to the chase. 'Here's a deer,' 'There's a boar,' 'Yonder's a tiger,' thus, even at mid-day, we wander about from forest to forest, amid rows of woods with summer-thinned tree-shades. We drink hot, stinking waters of mountain-torrents, astringent from the mixture of leaves. At irregular hours, we get our meal (consisting) chiefly of meat roasted on spits. And even in the night, I cannot have enough sleep, as my joints are all dislocated by riding on horseback (after the chase). Then at the very earliest dawn, the sons of slave-girls—the fowlers, wake me up with the din of taking the forest. And yet even with all this, my troubles do not end; (for) then there is a (new) pimple growing on the old boil. For, indeed, yesterday, while we were left behind, his Majesty had entered the grounds of the religious domicile, when as my ill-luck would have it, a hermit's daughter named Śakuntalā was presented to his view. And now he has not even a thought of going back to the city. Even to-day, while he was thinking only of her, the (light of) dawn broke upon his eyes. What help! Well, I will see him when he will have performed his usual toilet. (*Walking round and observing*). Ah, here comes my dear friend in this very direction, surrounded by Yavana-girls holding bows in their hands, and wearing garlands of wild-flowers; well, then, I will stand as if crippled by paralysis of my limbs, if even thus I may know (some) respite. (*Stands leaning on a staff.*)

शकुन्तला नाम ममाधन्यतया दर्शिता । सांप्रतं नगरगमनस्य मनः कथमपि न करोति । अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत् । का गतिः । यावत्तं कृताचारपरिक्रमं पश्यामि । एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमाला-धारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः । भवतु । अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रमं लभेय ।

(ततः प्रविशति यथानिर्दिष्टपरिवारो राजा ।)

राजा—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥

(स्मितं कृत्वा ।) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थ-यिता विडम्ब्यते । तद्यथा

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति ॥ २ ॥

विदूषकः—(तथा स्थित एव ।) भो वअस्स, ण मे हत्थपाआ पसरन्ति । ता वाआमेत्तएण जीआवइस्सं । भो वयस्य, न मे हस्त-पादं प्रसरति । तद्वाङ्मात्रेण जापयिष्यामि ।

राजा—कुतोऽयं गात्रोपघातः ।

विदूषकः—कुदो किल सअं अच्छीइं आउलीकरिअ अस्सु-कारणं पुच्छसि । कुतः किल स्वयमक्षिण्याकुलीकृत्याश्रुकारणं पृच्छसि ।

राजा—न खल्ववगच्छामि । भिन्नार्थमभिधीयताम् ।

विदूषकः—भो वअस्स, जं वेदसो खुज्जलीलं विडम्बेदि तं किं अत्तणो पहावेण । णं णईवेअस्स । वयस्य, यद्वेतसः कुब्जलीलां विडम्बयति, तत्किमात्मनः प्रभावेण । ननु नदीवेगस्य ।

(*Enter king with attendants as described.*)

KING. True, my darling is not easily attainable; yet my heart assumes confidence from observing the manner in which she seems affected. Even though our love has not hitherto prospered, yet our mutual longing causes delight. (1)

(*Smiling*). Thus is the lover beguiled, who judges of the state of his beloved's feeling by his own desires. It is thus

The tender look she cast, even while she directed her eyes elsewhere; her slow movement caused by the heaviness of her hips, as if for grace's sake; the angry words she spoke to her friend who detained her saying 'Do not go;'—all this was, no doubt, on my account! Ah! how does a lover discover his own (everywhere)! (2)

VIDŪṢAKA (*Still in the same position*). O friend, my hands are incapable of movement; therefore, by words merely I will wish you victory.

KING. Whence this palsy of limbs?

VIDŪṢAKA. How, indeed, having yourself troubled my eyes, you ask what makes them weep?

KING. Indeed, I know not what you mean; speak intelligibly.

VIDŪṢAKA. Well, my friend, when the reed imitates the character of the Kubja plant, is it by its own act, or by the force of the stream?

राजा—नदीवेगस्तत्र कारणम् ।

विदूषकः—मम वि भवं । ममापि भवान् ।

राजा—कथमिव ।

विदूषकः—एव्वं राअकज्जाणि उज्झिअ एदारिसे आउलप्पदेसे वणचरवुत्तिणा तुए होदव्वं । जं सच्चं पच्चहं सावदाणुसरणेहिं संखोहिअसंधिबन्धाणं मम गत्ताणं अणीसो म्हि संवुत्तो । ता पसादइस्सं विसज्जिदुं मं एक्काहं वि दाव विस्समिदुं । एवं राजकार्याण्युज्झित्वैतादृश आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम् । यत्सत्यं प्रत्यहं श्वापदानुसरणैः संक्षोभितसंधिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसादयिष्यामि विसर्जितुं मामेकाहमपि तावद्विश्रमितुम् ।

राजा—(स्वगतम् ।) अयं चैवमाह । ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः । कुतः ।

न नमयितुमधिज्यमस्मि शक्तो
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः ॥ ३ ॥

विदूषकः—(राज्ञो मुखं विलोक्य ।) अत्तभवं किं वि हिअए करिअ मन्तेदि । अरण्णे मए रुदिअं आसि । अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितमासीत् ।

राजा—(सस्मितम् ।) किमन्यत् । अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदूषकः—चिरं जीअ । (इति गन्तुमिच्छति ।) चिरं जीव ।

राजा—वयस्य, तिष्ठ । सावशेषं मे वचः ।

विदूषकः—आणवेदु भवं । आज्ञापयतु भवान् ।

राजा—विश्रान्तेन भवता ममाप्यनायासे कर्मणि सहायेन भवितव्यम् ।

विदूषकः—किं मोदअखण्डिआए । तेण हि अअं सुगहीदो खणो । किं मोदकखण्डिकायाम् । तेन ह्ययं सुगृहीतः क्षणः ।

King. The force of the stream is the cause of it.

Vidūṣaka. So are you, of my (troubles).

King. How indeed?

Vidūṣaka. That you should leave the affairs of your empire, and live like a forester in a wild and unfrequented region like this! So that, truth to say, I am become no longer master of my own limbs whose joints are all shaken up by my daily running after wild animals. I, therefore, entreat you to favour me with your permission to repose but a single day.

King (*To himself*). He says this; and I, too, when I think of Kaṇva's daughter, have little relish for hunting. For

> I am not able to bend this strung bow, with the arrow fixed upon it, against the fawns, who, abiding with my darling, have taught her those beautiful glances! (3)

Vidūṣaka (*Looking at the king's face*). You have something in your mind and have been deliberating. Mine is a cry in the wilderness.

King (*Smilingly*). What else? I ought not to disregard a friend's advice; and so I stand here.

Vidūṣaka. May you live long! (*Desires to leave.*)

King. Stay, friend, I have not done.

Vidūṣaka. Let the king command.

King. When you have taken repose, I, too, shall want your assistance in another business, that will cause you no fatigue.

Vidūṣaka. Eating a few sweetmeats? Well, then, I accept the engagement.

राजा—यत्र वक्ष्यामि । कः कोऽत्र भोः ।

( प्रविश्य । )

दौवारिकः—[ प्रणम्य । ] आणवेदु भट्टा । आज्ञापयतु भर्ता ।

राजा—रैवतक, सेनापतिस्तावदाहूयताम् ।

दौवारिकः—तह । ( इति निष्क्रम्य सेनापतिना सह पुनः प्रविश्य । ) एसो अण्णावअणुक्कण्ठो भट्टा इदो दिण्णदिट्ठी एव्व चिट्ठदि । उवसप्पदु अज्जो । तथा । एष आज्ञावचनोत्कण्ठो भर्ततो दत्तदृष्टिरेव तिष्ठति । उपसर्पत्वार्यः ।

सेनापतिः—( राजानमवलोक्य । ) दृष्टदोषापि स्वामिनि मृगया केवलं गुण एव संवृत्ता । तथा हि देवः

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु क्लेशलेशैरभिन्नम् ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥

( उपेत्य । ) जयतु स्वामी । गृहीतश्वापदमरण्यम् । किमिति स्थीयते ।

राजा—मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माठव्येन ।

सेनापतिः—( जनान्तिकम् । ) सखे, स्थिरप्रतिबन्धो भव । अहं तावत्स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये । ( प्रकाशम् । ) प्रलपत्येष वैधेयः । ननु प्रभुरेव निदर्शनम् ।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।

KING. I will tell you where. Hola! Who is there?

(*Entering*) DOOR-KEEPER. Let my sovereign command me.

KING. Raivataka, bid the General attend.

DOOR-KEEPER. I obey—(*He goes out and returns with the General*). There is his Majesty eager to give (some) command, looking in this very direction; sir, you will draw near.

GENERAL (*Looking at the king*). Though reckoned a vice, hunting has proved only an advantage in our King. Thus his Majesty

Like a mountain-roving elephant possesses a body, whose forepart is hardened by the ceaseless friction of the bow-string, which is capable of enduring the sun's rays, and is not affected by the slightest fatigue; though reduced in bulk yet is not marked (as such) by reason of its muscular development, and is all life and vitality. (4)

(*Approaching*). May our monarch ever be victorious. The forest has its beasts of prey tracked; why then delay?

KING. My ardour has been all damped by Māṭhavya who has been preaching against hunting.

GENERAL (*Aside*). Friend, be firm in your opposition. I will humour the king for a while. (*Aloud*). This fool talks nonsense. Why, our king himself is an example. Consider, your Majesty;

The (hunter's) body, with the waist attenuated by the removal of fat becomes light and fit

उत्कर्षः स च धन्विना यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ५ ॥

विदूषकः—( सरोषम् ) अवेहि रे उच्छाहहेतुअ । अत्तभवं पकिदिं आपण्णो । तुमं दाव अडवीदो अडवीं आहिण्डन्तो णरणासिआलोलुवस्स जिण्णरिच्छस्स कस्स वि मुहे पडिस्ससि । अपेहि रे उत्साहहेतुक । अत्रभवान्प्रकृतिमापन्नः । त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णऋक्षस्य कस्यापि मुखे पतिष्यसि ।

राजा—भद्र सेनापते, आश्रमसंनिकृष्टे स्थिताः स्मः । अतस्ते वचो नाभिनन्दामि । अद्य तावत्

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विश्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६ ॥

सेनापतिः—यत्प्रभविष्णवे रोचते ।

राजा—तेन हि निवर्तय पूर्वगतान्वनग्राहिणः । यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः । पश्य ।

शमप्रधानेषु तपोधनेषु
गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजोऽभिभवाद्वमन्ति ॥ ७ ॥

for exertion; besides, the spirit of even the beasts is observed to be affected with various emotions, through fear and anger; and that is the glory of the archers, when their arrows hit the mark as it flies; falsely indeed do they call hunting a vice; no recreation, surely, can be compared with it. (5)

VIDŪṢAKA (*Angrily*). Away, you inciter. His Majesty has come to his senses; but you chasing from forest to forest, will surely fall into the jaws of some old bear greedy after a man's nose!

KING. Good General, we are staying in the vicinity of a hermitage. I cannot, therefore, approve your words. So for to-day,

Let the buffaloes plunge into the waters of tanks struck repeatedly with their horns; let the deer herding together underneath the shade chew the cud ; let herds of boar, undisturbed, bruise the Mustā grass in the pool; and let this my bow, take repose with a slackened string. (6)

GENERAL. As it pleases your Majesty.

KING. Well, then recall the forest-beaters that have already left; and forbid my soldiers to vex this hallowed grove. Remember,

Holy men, pre-eminent in the virtue of quietism, conceal within their bosom a scorching flame, which, like sun-crystals which are grateful to the touch, they emit when assailed by some foreign lustre. (7)

सेनापतिः—यदाज्ञापयति स्वामी ।

विदूषकः—गच्छ भो दासीएपुत्त । धंसदु दे उच्छाहवुत्तन्तो
गच्छ भो दास्याःपुत्र । ध्वंसतां त उत्साहवृत्तान्तः ।

( निष्क्रान्तः सेनापतिः । )

राजा—( परिजनं विलोक्य । ) अपनयन्तु भवत्यो मृगयावेषम् । रैवतक, त्वमपि स्वं नियोगमशून्यं कुरु ।

परिजनः—जं देवो आणवेदि । ( इति निष्क्रान्तः । ) यद्देव आज्ञापयति ।

विदूषकः—किदं भवदा णिम्मच्छिअं । संपदं एदस्सिं पादवच्छाआए विरइदलदाविदाणदंसणीआए आसणे णिसीददु भवं जाव अहं वि सुहासीणो होमि । कृतं भवता निर्मक्षिकम् । सांप्रतमेतस्यां पादपच्छायायां विरचितलतावितानदर्शनीयायामासने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि ।

राजा—गच्छाग्रतः ।

विदूषकः—एदु भवं । एतु भवान् ।

( इत्युभौ परिक्रम्योपविष्टौ । )

राजा—माठव्य, अनवाप्तचक्षुःफलोऽसि । येन त्वया दर्शनीयं न दृष्टम् ।

विदूषकः—णं भवं अग्गदो मे वट्टदि । ननु भवानग्रतो मे वर्तते ।

राजा—सर्वः कान्तमात्मीयं पश्यति । तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

विदूषकः—( स्वगतम् ) होदु । से अवसरं ण दाइस्सं । ( प्रकाशम् ) भो वअस्स, ते तावसकण्णआ अब्भत्थणीआ दीसदि । भवतु । अस्यावसरं न दास्ये । भो वयस्य, ते तापसकन्यकाभ्यर्थनीया दृश्यते ।

राजा—सखे, न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते ।

GENERAL. As your Majesty commands.

VIDŪṢAKA. Get away, you son of a slave-girl! You have talked in vain about exertion (in the chase.)

(*Exit General.*)

KING (*Looking to his attendants*). Put off your hunting apparel; and thou, Raivataka, return to thy post of duty.

ATTENDANTS. As our lord bids. (*Exit.*)

VIDŪṢAKA. So you have now cleared the stage. Now be seated on this stone-slab, over which the trees spread their beautiful, canopy of shade; so that I, too, will sit at mine ease.

KING. Lead the way.

VIDŪṢAKA. Come along, sir.

(*They walk about and sit down.*)

KING. Māthavya, you have not obtained the fruit of your eyes, since you have not beheld the fairest of all objects.

VIDŪṢAKA. Why, you are there in front of me.

KING. Every one thinks his own as beautiful; but I am speaking in reference to that same Śakuntalā, who is the ornament of the hermitage.

VIDŪṢAKA (*Aside*). Well, I will give him no chance. (*Aloud*). Well, my friend, it appears she is a hermit's daughter whom you love.

KING. Friend, the thoughts of Puru's descendants will never dwell on any forbidden object.

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ ८ ॥

विदूषकः—( विहस्य )—जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिणीए अहिलासो भवे, तह इत्थिआरदणपरिभाविणो भवदो इअं अब्भत्थणा । यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना ।

राजा—न तावदेनां पश्यसि येनैमवादीः ।

विदूषकः—तं क्खु रमणिज्जं जं भवदो वि विम्हअं उप्पादेदि । तत्खलु रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति ।

राजा—वयस्य, किं बहुना ।

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

विदूषकः—जइ एव्वं पच्चादेसो दाणिं रूववदीणं । यद्येवं प्रत्यादेश इदानीं रूपवतीनाम् ।

राजा—इदं च मे मनसि वर्तते ।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ १० ॥

Sprung from a nymph of heaven, so it is said, this sage's child was found by him when she deserted her; like a Navamallikā flower loosened and flung upon the Sun-plant. (8)

VIDŪṢAKA (*Laughing*). This desire of yours, who scorn the bright gems of women in your palace, is like the fancy of a man who has lost his relish for dates, and longs for the (sour) tamarind.

KING. You have not seen her; and, therefore, you speak thus.

VIDŪṢAKA. That indeed must be charming, which excites even your admiration.

KING. Friend, what need is there of many words?

Was she delineated in a picture and then endowed with life? Or was she moulded in the Creator's mind from an assemblage (selection) of all lovely forms? When I meditate on the power of the creator, and on her lineaments, she appears to me like a matchless creation of the loveliest of women. (9)

VIDŪṢAKA. If that is so, she must render all other handsome women contemptible.

KING. This, moreover, is in my thought:

This immaculate beauty is like a flower not yet smelt, a delicate shoot not torn by the nails; an unperforated diamond; or fresh honey whose sweetness is yet untasted; or the full reward of meritorious deeds. I know not whom Destiny will approach as the enjoyer here (of this form). (10)

विदूषकः—तेण हि लहु परित्ताअदु णं भवं । मा कस्स वि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे पडिस्सदि । (तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कण-शीर्षस्य हस्ते पतिष्यति ।)

राजा—परवती खलु तत्रभवती । न च संनिहितोऽत्र गुरुजनः ।

विदूषकः—अध भवन्तं अन्तरेण कीदिसो से दिट्ठिराओ । (अथ भवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः ।)

राजा—निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि तु

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥ ११ ॥

विदूषकः—णं क्खु दिट्ठमेत्तस्स तुह अङ्कं आरोहदि । (ननु खलु दृष्टमात्रस्य तवाङ्कमारोहति ।)

राजा—मिथःप्रस्थाने पुनः शालीनतयापि काममाविष्कृतो भावस्तत्रभवत्या । तथा हि ।

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

विदूषकः—तेण हि गहीदपाधेओ होहि । किदं तुए उववणं तवोवणं त्ति पेक्खामि । (तेन हि गृहीतपाथेयो भव । कृतं त्वयोपवनं तपो-वनमिति पश्यामि ।)

VIDŪṢAKA. Let your Highness make haste, then, to rescue her, lest she should fall into the hands of some hermit whose head shines with the oil of Ingudi.

KING. She is not her own mistress; and her father is not here.

VIDŪṢAKA. Well, what kind of feeling did her eyes betray towards your Honour?

KING. The daughters in a hermit's family are naturally (so) reserved; yet,

> She averted her eyes, when I stood facing her and she smiled (as it were) from some other cause (than love); hence love, whose course was checked by modesty was neither fully displayed (by her) nor yet wholly concealed. (11)

VIDŪṢAKA. Surely you did not expect her to climb into your lap the moment she saw you!

KING. But, at our mutual parting, she did betray her feeling towards me, though with modesty.

> For when the slim (girl) had proceeded but a few steps, she stopped all of a sudden, saying, "My foot is hurt by the points of the Kuśa grass;" and then she turned back her face (towards me), whilst (pretending to be occupied with) disentangling her bark-dress from the branches of the shrubs in which it had not really been caught. (12)

VIDŪṢAKA. Well, then, provide yourself with a stock of provender; you have made a pleasure-garden of the penance-grove, I find.

राजा—सखे, तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनापदेशेन सकृदप्याश्रमे वसामः ।

विदूषकः—को अवरो अवदेसो । णं तुमं राआ । णीवारच्छट्ठभाअं अम्हाणं उपहरन्तु त्ति । कोऽपरोऽपदेशः । ननु त्वं राजा । नीवारषष्ठभागमस्माकमुपहरन्त्विति ।

राजा—मूर्ख, अन्यद्भागधेयमेतेषां रक्षणे निपतति, यद्रत्नराशीनपि विहायाभिनन्द्यम् । पश्य ।

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥

(नेपथ्ये ।)

हन्त, सिद्धार्थौ स्वः ।

राजा—( कर्णं दत्त्वा । ) अये, धीरप्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् ।

( प्रविश्य । )

दौवारिकः—जेदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा । जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ ।

राजा—तेन ह्यविलम्बितं प्रवेशय तौ ।

दौवारिकः—एसो पवेसेमि । ( इति निष्क्रम्य ऋषिकुमाराभ्यां सह प्रविश्य । ) इदो इदो भवन्ता । एष प्रवेशयामि । इत इतो भवन्तौ ।

( उभौ राजानं विलोकयतः । )

प्रथमः—अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः । अथवोपपन्नमेतदृषिभ्यो नातिभिन्ने राजनि । कुतः ।

KING. Friend, a few hermits have recognized me; find out, therefore, some pretext for our entering into that religious domicile once again.

VIDŪṢAKA. What (need of any) other pretext? Are you not the king? (You can enter saying) "Bring us our sixth part of your grain."

KING. Fool, these hermits pay quite a different tribute, which is welcomed more than heaps of jewels; see,

The wealth of princes, collected from the (four) classes (of their subjects) is perishable; but these hermits give us a sixth part of (the fruits of their) piety which is imperishable. (13)

(*Behind the scenes.*)

O joy! We have now attained the object of our desire.

KING (*Listening*). Oh! These must be hermits (to judge) by their grave and (yet) calm voices.

(*Entering*) DOOR-KEEPER. May the king be victorious! Here are two hermit-boys arrived at the door.

KING. Well, then, introduce them without delay.

DOOR-KEEPER. Well, I will bring them. (*He goes out and then returns with the young hermits.*) This way, sir, this way.

(*Both look at the king.*)

FIRST. Oh! A majestic presence, and yet what confidence it inspires! Or this is quite proper in a king who is very little inferior to a sage. For

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १४ ॥

द्वितीयः—गौतम, अयं स बलभित्सखो दुष्यन्तः ।

प्रथमः—अथ किम् ।

द्वितीयः—तेन हि

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरसमितयो बद्धवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १५ ॥

उभौ—( उपगम्य । ) विजयस्व राजन् ।

राजा—( आसनादुत्थाय । ) अभिवादये भवन्तौ ।

उभौ—स्वस्ति भवते ।

( इति फलान्युपहरतः । )

राजा—( सप्रणामं परिगृह्य । ) आज्ञापयितुमिच्छामि ।

उभौ—विदितो भवानाश्रमसदामिहस्थः । तेन भवन्तं प्रार्थयन्ते ।

राजा—किमाज्ञापयन्ति ।

उभौ—तत्रभवतः कण्वस्य महर्षेरसांनिध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

He, too, now abides in that stage of life which is open to the enjoyment of everyone; and through his exertions for (our) safety he has been accumulating the merit of penance from day to day; and the sacred title of Muni preceded by the (word) Rāja of this king, too, who has conquered his passions, frequently ascends to heaven, being chanted by pairs of bards. (14)

SECOND. Gautama, so this is Duṣyanta, the friend of Indra.

FIRST. Yes, it is.

SECOND. Then, indeed,

It is not wonderful that he whose arm is long as the bar of a city (gate) alone protects the whole earth bounded by the dark (green) ocean. For the Gods, rooted in their enmity with the demons, rely for victory in battles on his braced bow and Indra's thunder-bolt. (15)

BOTH (*Advancing*). O king, be victorious!

KING (*Rising from his seat*). I salute you.

BOTH. Blessings on you! (*They offer fruit.*)

KING (*Receiving it with a bow*). I desire (to know) your command.

BOTH. Your Highness is known by the dwellers of the hermitage to be staying here; and they, therefore, implore your Highness—

KING. What is their command?

BOTH. In the absence of his Reverence, the great sage Kaṇva, some evil demons are disturbing our sacrificial

राजा—अनुगृहीतोऽस्मि।

विदूषकः—(अपवार्य।) एसा दाणिं अणुऊला दे अब्भत्थणा। एषेदानीमनुकूला तेऽभ्यर्थना।

राजा—(स्मितं कृत्वा।) रैवतक, मद्वचनादुच्यतां सारथिः सबाणासनं रथमुपस्थापयेति।

दौवारिकः—जं देवो आणवेदि। (इति निष्क्रान्तः।) यद्देव आज्ञापयति।

उभौ—(सहर्षम्।)

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः॥१६॥

राजा—(सप्रमाणम्।) गच्छतां पुरौ भवन्तौ। अहमप्यनुपदमागत एव।

उभौ—विजयस्व। (इति निष्क्रान्तौ।)

राजा—माठव्य, अप्यस्ति शकुन्तलादर्शने कुतूहलम्।

विदूषकः—पढमं सपरीवाहं आसि। दाणिं रक्खसवुत्तन्तेण बिन्दूवि णावसेसिदो। प्रथमं सपरीवाहमासीत् इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः।

राजा—मा भैषीः। ननु मत्समीपे वर्तिष्यसे।

विदूषकः—एस रक्खसादो रक्खिदो म्हि। एष राक्षसाद्रक्षितोऽस्मि।

(प्रविश्य।)

दौवारिकः—सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि। एस उण णअरादो देवीणं आणत्तिहरओ करभओ आअदो। सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते। एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः।

राजा—(सादरम्।) किमम्बाभिः प्रेषितः।

दौवारिकः—अह इं। अथ किम्।

राजा—ननु प्रवेश्यताम्।

rites. Deign, therefore, accompanied by your charioteer to be master of the hermitage, for a few nights.

KING. I am highly favoured.

VIDŪṢAKA (*Aside*). Here is now a request favourable to you!

KING (*Smiling*). Raivataka, say to the charioteer in my name, "Bring my car and my bow."

DOOR-KEEPER. As your Majesty commands. (*Exit.*)

BOTH. (*With joy*).

This well becomes you, who emulate your ancestors; truly the descendants of Puru are the officiating priests in the sacrifices of delivering from fear the distressed. (16)

KING (*Bowing*). Go first, sirs; I too will follow instantly.

BOTH. Be ever victorious. (*Exeunt.*)

KING. Māṭhavya, have you any curiosity to see Śakuntalā?

VIDŪṢAKA. At first it was full to overflowing; but now by this talk of the demons, not even a drop is left.

KING. Oh, fear nothing: you will be with me.

VIDŪṢAKA. I am protected from the demons.

(*Entering*) DOOR-KEEPER. The car is ready, and awaits my Lord's advance to victory; but here is Karabhaka, just arrived from the city, bearing a message from the Queen-mother.

KING. (*Respectfully*). What, sent by my mother?

DOOR-KEEPER. Yes.

KING. Well, bring him to me.

दौवारिकः—तह । ( इति निष्क्रम्य करभकेण सह प्रविश्य । ) एसो भट्टा । उवसप्प । तथा । एष भर्ता । उपसर्प ।

करभकः—जेदु भट्टा । देवी आणवेदि । आआमिणि चउत्थदिअहे पुत्तपिण्डपालणो णाम उववासो भविस्सदि । तहिं दीहाउणा अवस्सं संभाविदव्वा त्ति । जयतु भर्ता । देव्याज्ञापयति । आगामिनि चतुर्थदिवसे पुत्रपिण्डपालनो नाम उपवासो भविष्यति । तत्र दीर्घायुषावश्यं संभावनीयेति ।

राजा—इतस्तपस्विकार्यम् । इतो गुरुजनाज्ञा । द्वयमनतिक्रमणीयम् । किमत्र प्रतिविधेयम् ।

विदूषकः—तिसङ्कु विअ अन्तराले चिट्ठ । त्रिशङ्कुरिवान्तराले तिष्ठ ।

राजा—सत्यमाकुलीभूतोऽस्मि ।

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ १७ ॥

( विचिन्त्य । ) सखे, त्वमम्बया पुत्र इति प्रतिगृहीतः । अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति ।

विदूषकः—णं क्खु मं रक्खोभीरुअं गणेसि । ननु खलु मां रक्षोभीरुकं गणयसि ।

राजा—( सस्मितम् ) कथमेतद्भवति संभाव्यते ।

विदूषकः—जह राआणुएण गन्तव्वं तह गच्छामि । यथा राजानुजेन गन्तव्यं तथा गच्छामि ।

राजा—ननु तपोवनोपरोधः परिहरणीय इति सर्वाननुयात्रिकांस्त्वयैव सह प्रस्थापयामि ।

DOOR-KEEPER. Yes. (*Goes out and returns with Karabhaka.*) Here is his Majesty. Advance.

KARABHAKA. Victory to your Majesty. The royal mother sends this command: On the fourth day from to-day, falls the fast named "Putra-pinda-pālana;" and on that occasion the long-lived one ought not fail to honour us with his presence.

KING. On one hand is a commission from holy hermits; on the other, a command from my revered parent: neither may be neglected; what is the remedy?

VIDŪSAKA. Stay suspended (between them both) like Triṣanku.

KING. In truth I am (greatly) perplexed.

My mind is distracted by the difference of the two places where the two duties have to be performed, as the stream of a river is split in two by rocks lying before it. (17)

(*Musing*). You have been treated by the Queen-mother as a son. Do you, therefore, return from hence and tell her how my mind is intent on this commission of the hermits, and have the goodness to perform yourself the offices of a son.

VIDŪṢAKA. But you will not really suppose that I was afraid of the demons.

KING (*Smilingly*). How is this possible in your Honour?

VIDŪṢAKA. But I would go, as befits a younger brother of the king.

KING. Surely, I will dispatch my whole train to attend you, for the pious grove must not be disturbed.

विदूषकः—तेण हि जुवराओ म्हि दाणिं संवुत्तो। तेन हि युवराजोऽस्मीदानीं संवृत्तः।

राजा—( आत्मगतम् । ) चपलोऽयं बटुः। कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत्। भवतु। एनमेवं वक्ष्ये। ( विदूषकं हस्ते गृहीत्वा। प्रकाशम् । ) वयस्य, ऋषिगौरवादाश्रमं गच्छामि। न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः। पश्य।

क्व वयं क्व परोक्षमन्मथो
मृगशावैः सममेधितो जनः।
परिहासविजल्पितं सखे
परमार्थेन न गृह्यतां वचः॥ १८॥

( इति निष्क्रान्ताः सर्वे । )

इति द्वितीयोऽङ्कः।

VIDŪṢAKA (*Proudly*). Then indeed I am the young prince.

KING. (*To himself*). The fellow is a chatterbox. He might disclose my present pursuit to the ladies in the palace. Good, then; I will say this to him. (*He takes Vidūṣaka by the hand. Aloud*). Friend, I shall enter the hermitage (only) through respect for the sages. Do not think that I have any real inclination for the hermit-girl Śakuntalā. Just think :

Where are we, and where a person bred with the fawns, and a stranger to love! O friend! let not the light words spoken in jest be taken in earnest. (18)

VIDŪṢAKA. Yes, to be sure.

(*All go out.*)

End of act II.

# तृतीयोऽङ्कः ।

( ततः प्रविशति कुशानादाय यजमानशिष्यः । )

शिष्यः—अहो, महानुभावः पार्थिवो दुष्यन्तः । प्रविष्टमात्र एवाश्रमं तत्रभवति राजनि निरुपप्लवानि नः कर्माणि संवृत्तानि ।

का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।
हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥ १ ॥

यावदिमान्वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य उपनयामि ( परिक्रम्यावलोक्य च । आकाशे । ) प्रियंवदे, कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते । ( श्रुतिमभिनीय । ) किं ब्रवीषि । आतपलङ्घनाद्बलवदस्वस्था शकुन्तला । तस्याः शरीरनिर्वापणायेति । तर्हि त्वरितं गम्यताम् । सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि । ( इति निष्क्रान्तः । )

विष्कम्भकः ।

( ततः प्रविशति कामयमानावस्थो राजा । )

राजा—( निःश्वस्य । )

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ॥ २ ॥

# ACT III.

(*Then enter the sacrificer's pupil bearing Kuśa-grass.*)

PUPIL. How great is the power of king Duṣyanta! Since his Highness had no sooner entered the hermitage than we could continue our holy rites undisturbed.

> Why talk of aiming the shaft? For by the mere sound of the bow-string from afar, as if by the angry murmur of his bow, he disperses (at once) our obstacles. (1)

Now, then, I shall deliver to the priests this Kuśa-grass to be scattered round the altar. (*Moving about and observing; in the air*). Ah! Priyaṁvadā, for whom are you carrying this Uśīra ointment and these lotus-leaves with stalks? (*Acting as if he has heard*). What say you? "That Śakuntalā is extremely disordered from injury caused by the Sun's heat, and these are for cooling her body." Well, then, go quickly; for she is the very life-breath of the venerable Kaṇva, the head of our society. I, too, will send to Gautamī for her some healing water consecrated in the sacrificial rites.

(*Exit.*)

Here ends the prelude.

(*Enter Duṣyanta, expressing the distraction of a lover.*)

KING. (*With a sigh*).

> I know the power of penance: and I am further aware that the maiden is not her own mistress; and yet my heart can no more turn back from her, than water can from a slope. (2)

भगवन्कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः । कुतः ।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
  र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
  स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ३ ॥

( मदनबाधां निरूप्य । सासूयम् । ) भगवन्मन्मथ । कुतस्ते कुसुमायुधस्य शरतैक्ष्ण्यमेतत् । ( स्मृत्वा । ) आं ज्ञातम् ।

अद्यापि नूनं हरकोपवह्नि-
  स्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।
त्वमन्यथा मन्मथ मद्विधानां
भस्मावशेषः कथमेवमुष्णः ॥ ४ ॥

अथवा—

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ ५ ॥

( सखेदं परिक्रम्य । ) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि । ( निःश्वस्य । ) किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विष्यामि । ( सूर्यमवलोक्य । ) इमामुग्रातपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि ।

O divine flower-armed god, by you and by the Moon, though each of you seems worthy of confidence, the whole company of lovers is (cruelly) deceived. For

Your having flowery shafts and the Moon's having cool beams—both these are observed to be untrue for such as me. For the Moon sheds fire (on them) with her dewy rays; and you make your flowery-darts hard as adamant. (3)

(*Acting as if he is afflicted by love; angrily*). Whence this sharpness of yours who are flower-armed? (*Remembering*). Ah, I know.

Verily the fire of Hara's wrath even now burns in you like the submarine fire in the ocean; how else could you, O agitator of the soul, who were consumed to ashes, be so scorching to such as me? (4)

Nevertheless,

This God, who bears a fish on his banner, and who is incessantly giving pain to my mind, will give me real delight, if he strikes me because of her whose eyes are large and bewitching. (5)

(*Moving about in anguish*).

Where indeed can I recreate my afflicted soul, being permitted by those who took part (in the sacrifice) at the conclusion of the rite? (*Sighing*). What else, indeed, can bring me relief but a sight of my beloved? So I will find her out. (*Looking at the sun.*) Śakuntalā and her friends are probably passing this intensely hot noon on the creeper-wreathed banks of the Mālinī. So I will advance thither.

(परिक्रम्य स्पर्शं रूपयित्वा ।) अहो प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ६ ॥

(परिक्रम्यावलोक्य च ।) अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे संनिहितया तया भवितव्यम् । तथा हि । (अधो विलोक्य ।)

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ७ ॥

यावद्विटपान्तरेणावलोकयामि । ( परिक्रम्य तथा कृत्वा सहर्षम् । ) अये, लब्धं नेत्रनिर्वाणम् । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते । भवतु । श्रोष्याम्यासां विश्रम्भकथितानि । ( इति विलोकयन्स्थितः । )

( ततः प्रविशति यथोक्तव्यापारा सहसखीभ्यां शकुन्तला । )

सख्यौ—( उपवीज्य सस्नेहम् । ) हला सउन्दले, अवि सुहेदि दे णलिणीपत्तवादो । हला शकुन्तले, अपि सुखयति ते नलिनीपत्रवातः ।

शकुन्तला—किं वीअअन्ति मं सहीओ । किं वीजयतो मां सख्यौ ।

( सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः । )

राजा—बलवदस्वस्थशरीरा शकुन्तला दृश्यते । ( सवितर्कम् । ) तत्किमयमातपदोषः स्यात् । उत यथा मे मनसि वर्तते । ( साभिलाषं निर्वर्ण्य । ) अथवा कृतं संदेहेन ।

(*Moving about and gesticulating that he feels touch*).

Ah! this is a pleasant spot, with the fresh breeze blowing!

It is possible to embrace closely, with my limbs which are inflamed by the bodiless god, the breeze fragrant with the lotuses and wafting the spray from the waves of the Mālinī. (6)

(*Moving about and observing*). She must be somewhere in this bower of creepers encircled by reeds. For, (*looking down*).

On the white sand at its door is discerned a fresh line of footsteps, raised in front, and depressed behind by the weight of her hips. (7)

So I will look through the branches. (*Walking and doing so, with joy*). Ah! my eyes have been fully gratified. The darling of my thoughts, reposing on a flat stone-slab strewn with flowers, is attended by her two friends. Well, I will hear what they say to each other in all confidence. (*He stands gazing.*)

(*Enter Śakuntalā as described with her two friends.*)

FRIENDS (*Fanning affectionately*). Dear Śakuntalā, is the breeze from the lotus leaves refreshing to you?

ŚAKUNTALĀ. What? Are my friends fanning me?

(*The two friends look sorrowfully at one another.*)

KING. Śakuntalā appears to be seriously indisposed. (*Guessing*). Is it the fault of the heat, or is it what my heart suggests? (*Looking longingly*). Or, I need have no doubt.

स्तनन्यस्तोशीरं शिथिलितमृणालैकवलयं
प्रियायाः साबाधं किमपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ८ ॥

प्रियंवदा—( जनान्तिकम् ) अणसूए, तस्स राएसिणो पढमदंसणादो आरहिअ पज्जुस्सुआ विअ सउन्दला । किंणु क्खु से तण्णिमित्तो अअं आतङ्को भवे । अनसूये तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत् ।

अनसूया—सहि, ममवि ईदिसी आसङ्का हिअअस्स । होदु । पुच्छिस्सं दाव णं । ( प्रकाशम् ) सहि, पुच्छिदव्वासि किंपि । बलवं क्खु दे संदावो । सखि, ममापीदृश्याशङ्का हृदयस्य । भवतु । प्रक्ष्यामि तावदेनाम् । सखि, प्रष्टव्यासि किमपि । बलवान्खलु ते संतापः ।

शकुन्तला—( पूर्वार्धेन शयनादुत्थाय । ) हला, किं वत्तुकामासि । हला, किं वक्तुकामासि ।

अनसूया—हला सउन्दले, अणब्भन्तरा क्खु अम्हे मदणगदस्स वुत्तन्तस्स । किंदु जादिसी इतिहासणिबन्धेसु कामअमाणाणं अवत्था सुणीअदि तादिसीं दे पेक्खामि । कहेहि किंणिमित्तं दे संदावो । विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स । हला शकुन्तले, अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु यादृशीतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते तादृशीं तव पश्यामि । कथय किंनिमित्तं ते संतापः । विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य ।

राजा—अनसूयामप्यनुगतो मदीयस्तर्कः ।

शकुन्तला—( आत्मगतम् । ) बलिओ क्खु मे अहिणिवेसो । दाणिं वि सहसा एदाणं ण सक्कणोमि णिवेदिदुं । बलवान्खलु मेऽभिनिवेशः इदानीमपि सहसैतयोर्न शक्नोमि निवेदयितुम् ।

प्रियंवदा—सहि सउन्दले, सुट्ठु एसा भणादि । किं अत्तणो आतङ्कं उवेक्खसि । अणुदिअहं क्खु परिहीअसि अङ्गेहिं । केवलं लावण्णमई छाआ तुमं ण मुञ्चदि । सखि शकुन्तले, सुष्ठ्वेषा भणति ।

The Uśīra salve has been applied to her bosom, and her only bracelet of lotus-stalks is hanging loose: thus this form of my beloved (thus) disordered is yet exquisitely beautiful. True it is that love and the influence of summer inflame (us) equally: still the disorder brought about by the hot weather does not affect maidens in such a charming manner. (8)

PRIYAṀVADĀ (*Aside*). Anasūyā, Śakuntalā appears to have been greatly affected since she first saw the pious monarch. May it be that this her malady is due to him?

ANASŪYĀ. Friend, the same suspicion has risen in my mind. Well, I will just ask her. (*Aloud*). My dear, I must ask you something. You are, indeed, greatly troubled.

ŚAKUNTALĀ (*Rising from her bed with the upper half.*) My dear, what would you ask?

ANASŪYĀ. Śakuntalā, dear, we are indeed perfectly ignorant about matters relating to love. But I suspect your case to be like that of love-sick persons described in legendary tales. Tell us what causes your illness. For without knowing the exact nature of a disorder, there can be no application of the remedy.

KING. Anasūyā too has guessed my thoughts.

ŚAKUNTALĀ (*To herself*). Great indeed is my attachment; even now I am unable to disclose it to them all at once.

PRIYAṀVADĀ. She speaks the truth, dear Śakuntalā. Why do you neglect your malady? Your

किमात्मन आतङ्कमुपेक्षसे। अनुदिवसं खलु परिहीयसेऽङ्गैः। केवलं लावण्यमयी छाया त्वां न मुञ्चति।

राजा—अवितथमाह प्रियंवदा। तथा हि।

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी॥ ९॥

शकुन्तला—सहि, कस्स वा अण्णस्स कहइस्सं। आआसइत्तिआ दाणिं वो भविस्सं। सखि, कस्य वान्यस्य कथयिष्यामि। आयासयित्रीदानीं वां भविष्यामि।

उभे—अदो एव्व क्खु णिब्बन्धो। सिणिद्धजणसंविभत्तं हि दुक्खं सज्झवेदणं होदि। अत एव खलु निर्बन्धः। स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति।

राजा—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम्।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि॥ १०॥

शकुन्तला—सहि, जदो पहुदि मम दंसणपहं आअदो सो तवोवणरक्खिदा राएसी, (इत्यर्धोक्तेन लज्जां नाटयति।) सखि, यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः—

उभे—कधेदु पिअसही। कथयतु प्रियसखी।

शकुन्तला—तदो आरहिअ तग्गदेण अहिलासेण एतदवत्थम्हि संवुत्ता। तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता।

राजा—(सहर्षम्।) श्रुतं श्रोतव्यम्।

limbs are wasting away every day, though your exquisite beauty has not forsaken you.

KING. Priyaṁvadā speaks the truth. For indeed

Her face has its cheeks excessively emaciated, her bosom has lost the firmness of its breasts; her waist is more slender (than before); her shoulders are very much drooping; her complexion is wan; thus tormented by love, she appears both deplorable and charming, like the Mādhavī creeper when touched by the wind that dries up its leaves. (9)

ŚAKUNTALĀ. Friend, to whom else shall I relate? But I shall now be the occasion of your sorrow.

BOTH. For that very reason are we (so) importunate. For grief shared with affectionate friends becomes bearable pain.

KING.

Being questioned by the persons who share her sorrows as well as joys, she cannot fail to disclose the cause of her malady now hidden in her breast. Although she turned round again and again and looked upon me with longing, nevertheless, at the present moment I am filled with nervous fear to hear her (answer). (10)

ŚAKUNTALĀ. Friend, from the very instant the pious king who guards our hallowed forest met my eye— (*She breaks off and looks abashed.*)

BOTH. Speak on, beloved friend.

ŚAKUNTALĀ. From that instant, my love for him has reduced me to this plight.

KING. (*With joy*). I have heard what is worth hearing.

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ ११ ॥

शकुन्तला—तं जइ वो अणुमदं ता तह वट्टह जह तस्स राएसिणो अणुकम्पणिज्जा होमि । अण्णहा अवस्सं सिञ्चध मे तिलोदअं । तद्यदि वामनुमतं तदा तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथावश्यं सिञ्चतं मे तिलोदकम् ।

राजा—संशयच्छेदि वचनम् ।

प्रियंवदा—( जनान्तिकम् । ) अणसूये, दूरगअवम्महा अक्खमा इअं कालहरणस्स । जस्सिं बद्धभावा एसा सो ललामभूदो पोरवाणं । ता जुत्तं से अहिलासो अहिणन्दिदुं । अनसूये, दूरगतमन्मथाक्षमेयं कालहरणस्य । यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् ।

अनसूया—तह जह भणासि । तथा यथा भणसि ।

प्रियंवदा—( प्रकाशम् । ) सहि, दिट्ठिआ अणुरूवो दे अहिणिवेसो । साअरं उज्झिअ कहिं वा महाणई ओदरइ । को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लविदं सहेदि । सखि, दिष्ट्यानुरूपस्तेऽभिनिवेशः । सागरमुज्झित्वा कुत्र वा महानद्यवतरति । क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते ।

राजा—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते ।

अनसूया—को उण उवाओ भवे जेण अविलम्बिअं णिहुअं अ सहीए मणोरहं संपादेम्ह । कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः ।

प्रियंवदा—णिहुअंत्ति चिन्तणिज्जं भवे । सिग्घंत्ति सुअरं । निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम् ।

अनसूया—कहं विअ । कथमिव ।

प्रियंवदा—णं सो राएसी इमस्सिं सिणिद्धदिट्ठीए सूइदाहिलासो इमाइं दिअहाइं पजाअरकिसो लक्खीअदि । ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान्प्रजागरकृशो लक्ष्यते ।

It was, indeed, love that caused my fever, and it is love alone that (now) allays it; as, at the end of summer, a day, grown black with clouds, relieves the living world from the heat which itself had caused. (11)

ŚAKUNTALĀ. Then if you approve (of it) so contrive that the good king takes pity on me. Otherwise most certainly (you will) sprinkle for me water with sesasum-seed.

KING. Her words end all doubt.

PRIYAṀVADĀ (*Aside*). Anasūyā, she is far gone in love and cannot endure any delay. He on whom she has fixed her affection is the ornament of the Pauravas; it is, therefore, proper that her love finds our approval.

ANASŪYĀ. Just as you say.

PRIYAṀVADĀ (*Aloud*). My dear, fortunately your affection is placed on one worthy of yourself. Or rather where could a great river flow if not into the sea? What other tree except the Mango can support the Atimukta creeper with new sprouts?

KING. What wonder if the two Viśākhā stars follow the crescent-moon?

ANASŪYĀ. But by what expedient can we accomplish the desire of our friend quickly and secretly?

PRIYAṀVADĀ. Your "secretly" will have to be thought about; the "quickly" is not hard.

ANASŪYĀ. How do you mean?

PRIYAṀVADĀ. Why, the good king who has shown himself to be enamoured of her by his tender glances has been observed, during these days, to be wasting through sleeplessness.

राजा—सत्यमित्थंभूत एवास्मि । तथाहि ।

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः ।
अनभिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १२ ॥

प्रियंवदा—( विचिन्त्य । ) हला, मअणलेहो से करीअदु । इमं देवदासेसावदेसेण सुमणोगोविदं करिअ से हत्थअं पावइस्सं । हला, मदनलेखोऽस्य क्रियताम् । इमं देवताशेषापदेशेन सुमनोगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि ।

अनसूया—रोअइ मे सुउमारो पओओ । किं वा सउन्दला भणादि । रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति ।

शकुन्तला—सहीणिओओवि विकप्पीअदि । सखीनियोगोऽपि विकल्प्यते ।

प्रियंवदा—तेण हि अत्तणो उवण्णासपुव्वं चिन्तेहि दाव किंपि ललिअपदबन्धणं । तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावत् किमपि ललितपदबन्धनम् ।

शकुन्तला—हला, चिन्तेमि अहं । अवहीरणभीरुअं पुणो वेवइ मे हिअअं । हला, चिन्तयाम्यहम् । अवधीरणभीरु पुनर्वेपते मे हृदयम् ।

राजा—( सहर्षम् । )

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ १३ ॥

सख्यौ—अत्तगुणावमाणिणि, को दाणिं सरीरणिव्वावइत्तिअं सारदिअं जोसिणिं पडन्तेण वारेदि । आत्मगुणावमानिनि, क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ।

King. True it is that I have become just so. For

This golden bracelet, which has its gems sullied by tears which are hot from internal pain, and nightly flow from the corner of my eye that rests upon my arm, slipping every now and then from the wrist without touching the scars made by the friction of the bow-string, is constantly being pushed back by me. (12)

Priyaṁvadā (*Reflecting*). Well, she should write him a love-letter. And I will hide it in flowers and deliver it into his hands under the pretext of their being the remains of an offering presented to some deity.

Anasūyā. A pretty plan and I like it ; but what says Śakuntalā to this ?

Śakuntalā. What ? How may I doubt my friend's injunction ?

Priyaṁvadā. Well, then, think of some pretty composition in verse beginning with an allusion to yourself.

Śakuntalā. Friend, I will think out ; but then my heart flutters for fear he will despise me.

King (*With joy*).

Here stands the man eager for union with you from whom, O timid one, you are apprehensive of a refusal. The seeker may or may not find fortune ; but could fortune, seeking, fail to find ? (13)

Friends. O scorner of your own merits, who now would ward off with the edge of his garments the moonlight of autumn which can allay the fever of his body ?

शकुन्तला—( सस्मितम् । ) णिओइदा दाणिं म्हि । ( इत्युपविश्य चिन्तयति । ) नियोजितेदानीमस्मि ।

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १४ ॥

शकुन्तला—हला, चिन्तिदं मए गीदवत्थु । ण क्खु सण्णिहिदाणि उण लेहणसाहणाणि । हला, चिन्तितं मया गीतवस्तु । न खलु संनिहितानि पुनर्लेखनसाधनानि ।

प्रियंवदा—इमस्सिं सुओदरसुउमारे णलिणीपत्ते णहेहिं णिक्खित्तवण्णं करेहि । एतस्मिञ्छुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु ।

शकुन्तला—( यथोक्तं रूपयित्वा । ) हला, सुणुह दाणिं संगदत्थं ण वेत्ति । हला शृणुतमिदानीं संगतार्थं न वेति ।

उभे—अवहिद म्ह । अवहिते स्वः ।

शकुन्तला—( वाचयति । )

तुज्झ ण आणे हिअअं मम उण कामो दिवावि रत्तिंपि ।
णिग्घिण तवेइ बलिअं तुइ वुत्तमणोरहाइं अङ्गाइं ॥ १५ ॥

तव न जाने हृदयं मम पुनः कामो दिवापि रात्रावपि ।
निर्घृण तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥

राजा—( सहसोपसृत्य । )

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ १६ ॥

सख्यौ—( सहर्षम् । ) साअदं अविलम्बिणो मणोरहस्स । स्वागतमविलम्बिनो मनोरथस्य ।

ŚAKUNTALĀ (*Smilingly*). So now I have been directed.

(*She sits up and meditates.*)

KING. It is only proper that I should gaze at my darling with eyes that forget to wink ! For

> As she is composing words (for her song), her face, with one creeper-like eye-brow lifted, reveals her passion for me by her thrilling cheeks. (14)

ŚAKUNTALĀ. Well, I have thought out a little song. But we haven't any writing-materials.

PRIYAṀVADĀ. Here on this lotus-leaf smooth as a parrot's breast, do you engrave the letters with your nails.

ŚAKUNTALĀ (*Acting as said*). Friends, listen (and say) if it makes sense.

BOTH. We are attentive.

ŚAKUNTALĀ (*Reads*).

> Thy heart I know not : but Love, O cruel one, fiercely inflames both by day and by night my limbs, whose desires are centred on thee. (15)

KING (*Hastily Advancing*).

> Thee, O slender maid, Love only inflames incessantly, but me he quite consumes : for the day does not cause the lotus to fade so much as it does the Moon. (16)

FRIENDS (*With joy*). Welcome to (the object of your) desire which presents itself without delay.

( शकुन्तलाभ्युत्थातुमिच्छति )

राजा—अलमलमायासेन ।

सन्दष्टकुसुमशयनान्याशुक्लान्तबिसभङ्गसुरभीणि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ १७ ॥

अनसूया—इदो सिलातलेक्कदेसं अलंकरेदु वअस्सो । इतः शिलातलैकदेशमलंकरोतु वयस्यः ।

( राजोपविशति । शकुन्तला सलज्जा तिष्ठति । )

प्रियंवदा—दुवेणं पि वो अण्णोण्णाणुराओ पच्चक्खो । सहीसिणेहो मं पुणरुत्तवादिणीं करेदि । द्वयोरपि युवयोरन्योन्यानुरागः प्रत्यक्षः । सखीस्नेहो मां पुनरुक्तवादिनीं करोति ।

राजा—भद्रे, नैतत्परिहार्यम् । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

प्रियंवदा—आवण्णस्स विसअणिवासिणो जणस्स अत्तिहरेण रण्णा होदव्वं त्ति एसो वो धम्मो । आपन्नस्य विषयनिवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः ।

राजा— नास्मात्परम् ।

प्रियंवदा—तेण हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थन्तरं भअवदा मअणेण आरोविदा । ता अरुहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं । तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितं तस्या अवलम्बितुम् ।

राजा—भद्रे, साधारणोऽयं प्रणयः । सर्वथानुगृहीतोऽस्मि ।

शकुन्तला—( प्रियंवदामवलोक्य । ) हला, किं अन्तेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण । हला, किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ।

(*Śakuntalā expresses an inclination to rise.*)

KING. Give yourself no pain.

Your limbs, which closely press the couch of flowers, and bear the fragrance of pieces of lotus-stalks which have quickly faded, being grievously inflamed, must not be fatigued by ceremony. (*Lit.* do not deserve to perform the customary salutation). (17)

ANASŪYĀ. Let our friend favour a part of this stone-slab here (by sitting upon it).

(*The king sits; Śakuntalā feels bashful.*)

PRIYAṀVADĀ. Your mutual love is (quite) evident. But affection for my friend prompts me to speak something superfluous.

KING. Excellent damsel, that ought not to be suppressed. For to leave unsaid what was intended to be said produces subsequent regret.

PRIYAṀVADĀ. A king ought to remove the sufferings of the distressed people living in his kingdom—such is your duty.

KING. No other than this.

PRIYAṀVADĀ. Then (understand that) this our dear friend has been brought to this altered condition by the divinity Love on your account. It is, therefore, proper that you favour her and preserve her life.

KING. Excellent damsel, our passion is reciprocal. I feel favoured in every way.

ŚAKUNTALĀ (*Looking at Priyaṁvadā*). Why should you detain the pious king who must be afflicted by separation from his royal-consorts?

राजा—

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे
मदनबाणहतोऽस्मि हतः पुनः ॥ १८ ॥

अनसूया—वअस्स, बहुवल्लहा राआणो सुणीअन्ति । जह णो पिअसही बन्धुअणसोअणिज्जा ण होई तह णिव्वत्तेहि । वयस्य, बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय ।

राजा—भद्रे, किं बहुना ।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्रवसना चोर्वी सखी च युवयोरियम् ॥ १९ ॥

उभे—णिव्वुद म्ह । निर्वृते स्वः ।

प्रियंवदा—( सदृष्टिक्षेपम् । ) अणसूए, जह एसो इदोदिण्णदिट्ठी उस्सुओ मिअपोदओ मादरं अण्णेसदि । एहि । संजोएम णं । ( इत्युभे प्रस्थिते । ) अनसूये, यथैष इतोदत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि । संयोजयाव एनम् ।

शकुन्तला—हला, असरण म्हि । अण्णदरा वो आअच्छदु । हला, अशरणास्मि । अन्यतरा युवयोरागच्छतु ।

उभे—पुहवीए जो सरणं सो तुह समीवे वट्टइ । ( इति निष्क्रान्ते । ) पृथिव्या यः शरणं स तव समीपे वर्तते ।

शकुन्तला—कहं गदाओ एव्व । कथं गते एव ।

राजा—अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।

KING.

Thou, with bewitching eyes, that art near my heart, if this heart of mine, which is devoted to no other, thou judgest to be otherwise, then I who was slain by Love's arrow, am slain once again! (18).

ANASŪYĀ. Friend, kings are said to have many favourite consorts. You must, therefore, act in such a way that our dear friend may not become a cause of grief to her kinsmen.

KING. Good damsel, what need is there of many words?

Let there be ever so many wives of mine, there will be but two chief glories of my race— the sea-clad Earth, and this friend of yours. (19)

BOTH. We are content.

PRIYAṀVADĀ (*Casting a glance*). Anasūyā, there is the eager young antelope turning his eyes in this direction and seeking his mother; so come, let us help him to join his mother.

(*Both start.*)

ŚAKUNTALĀ. Dear, I am in such a helpless state. Let one of you come back.

BOTH. The protector of the Earth is with you! (*Exeunt.*)

ŚAKUNTALĀ. How! they are already gone!

KING. Do not be anxious. Is not this person, your adorer, near you?

किं शीतलैः क्लमविनोदिभिरार्द्रवातान्
संचारयामि नलिनीदलतालवृन्तैः ।
अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ २० ॥

शकुन्तला—ण माणणीएसु अत्ताणं अवराहइस्सं । ( इत्युत्थाय गन्तुमिच्छति । ) न माननीयेष्वात्मानमपराधयिष्ये ।

राजा—सुन्दरि, अपरिनिर्वाणो दिवसः । इयं च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥ २१ ॥

( इति बलादेनां निवर्तयति । )

शकुन्तला—पोरव, रक्ख अविणअं । मअणसंतत्तावि ण हु अत्तणो पहवामि । पौरव, रक्षाविनयम् । मदनसंतप्तापि न खल्वात्मनः प्रभवामि ।

राजा—भीरु, अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्रभवान्नात्र दोषं ग्रहीष्यति कुलपतिः । अपि च ।

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ २२ ॥

शकुन्तला—मुञ्च दाव मं । भूओ वि सहीजणं अणुमाणइस्सं । मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्ये ।

राजा—भवतु । मोक्ष्यामि ।

शकुन्तला—कदा । कदा ।

> Shall I set in motion moist breezes by means of fans of cool lotus-leaves to dissipate your languor, or shall I, O round-thighed (maiden), lay those feet red as lotuses in my lap and press them so as to relieve your pain? (20)

ŚAKUNTALĀ. I will not offend against those whom I am bound to respect.

(*Rises up and desires to leave.*)

KING. The day is not yet cool, beautiful one, and such is your condition.

> Leaving the couch of flowers where lotus-leaves formed the covering of your bosom, how will you go in the sun, with your limbs rendered so languid by suffering? (21)

(*He forcibly draws her back.*)

ŚAKUNTALĀ. O descendant of Puru, keep within the bounds of modesty. For although I am inflamed by Love, yet I have not the power of disposing of myself.

KING. Timid one, do not fear your elders. For the revered Father of your society, who knows the law, will not take exception to it when he sees it. Moreover

> Many daughters of royal sages are heard to have been married by the ceremony called Gāndharva, and (even) their fathers have approved them. (22)

ŚAKUNTALĀ. Leave me awhile; I will again take counsel with my friends.

KING. Yes, I will leave you.

ŚAKUNTALĀ. When?

राजा—

अपरिक्षतकोमलस्य याव-
त्कुसुमस्येव नवस्य षट्पदेन।
अधरस्य पिपासता मया ते
सदयं सुन्दरि गृह्यते रसोऽस्य ॥ २३ ॥

( इति मुखमस्याः समुन्नमयितुमिच्छति। शकुन्तला परिहरति नाट्येन। )

( नेपथ्ये। )

चक्कवाकवहुए, आमन्तेहि सहअरं। उवट्ठिदा रअणी। चक्रवाकवधूः आमन्त्रयस्व सहचरम्। उपस्थिता रजनी।

शकुन्तला—( ससंभ्रमम्। ) पोरव, असंसअं मम सरीरवुत्तन्तोवलम्भस्स अज्जा गोदमी इदो एव्व आअच्छदि। जाव विडवन्तरिदो होहि। पौरव, असंशयं मम शरीरवृत्तान्तोपलम्भायार्या गौतमीत एवागच्छति। यावद्विटपान्तरितो भव।

राजा—तथा। ( इत्यात्मानमावृत्य तिष्ठति। )

( ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च। )

सख्यौ—इदो इदो अज्जा गोतमी। इत इत आर्या गौतमी।

गौतमी—( शकुन्तलामुपेत्य। ) जादे, अवि लहुसंदावाइं दे अङ्गाइं। जाते, अपि लघुसंतापानि तेऽङ्गानि।

शकुन्तला—अज्जे, अत्थि मे विसेसो। आर्ये, अस्ति मे विशेषः।

गौतमी—इमिणा दब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि। ( शिरसि शकुन्तलामभ्युक्ष्य ) वच्छे, परिणदो दिअहो। एहि। उडजं एव्व गच्छम्ह। अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति। वत्से, परिणतो दिवसः। एहि। उटजमेव गच्छामः।

( इति प्रस्थिताः। )

शकुन्तला—( आत्मगतम्। ) हिअअ, पढमं एव्व सुहोवणदे मणोरहे कादरभावं ण मुञ्चसि। साणुसअविहडिअस्स कहं दे संपदं संदावो। ( पदान्तरे स्थित्वा। प्रकाशम्। ) लदावलअ संदा-

KING.

When the nectar of your lower lip, O fair one, is gently stolen by me thirsting (for it), as by the bee the honey of the fresh and untouched flower. (23)

(*Desires to raise her face. Śakuntalā gesticulates as if she repels him. Behind the Scenes*)

O female Cakrawāka, bid farewell to thy mate: (for) the night approaches.

ŚAKUNTALĀ (*Hurriedly*). Paurava, surely this is mother Gautamī come to inquire after my health. Hide yourself, therefore, behind the branches.

KING. I will do so. (*Remains in hiding; enter Gautami with a vessel in her hand, and friends.*)

FRIENDS. This way, venerable Gautamī, this way.

GAUTAMĪ (*Approaching Śakuntalā*). Child, is the fever of your body a little abated?

ŚAKUNTALĀ. Venerable mother, there is a change for the better in me.

GAUTAMĪ. With this water mixed with Kuśa-grass, your body will assuredly be relieved of pain. (*Sprinkling water on Śakuntalā's head*) Child, the day is departing; come let us both go to the cottage.

(*They start*).

ŚAKUNTALĀ (*To herself*). O my heart, even before, when the object of your desire came of itself so readily, you did not find courage (to accept it); why then this anguish now when separated and (consequently) filled with repentence? (*Taking a step and standing still; aloud*), O bower of creepers that removed my suffering,

वहारअ, आमन्तेमि तुमं भूओ वि परिभोअस्स। ( इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः। ) हृदय, प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि। सानुशयविघटितस्य कथं ते सांप्रतं संतापः। लतावलय संतापहारक, आमंत्रये त्वां भूयोऽपि परिभोगाय।

राजा—( पूर्वस्थानमुपेत्य। सनिःश्वासम्। ) अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः। मया हि

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु॥ २४॥

क्व नु खलु संप्रति गच्छामि। अथवा। इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहुर्तं स्थास्यामि। ( सर्वतोऽवलोक्य )

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्रान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि॥ २५॥

( आकाशे। )

राजन्,

सायंतने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रकीर्णाः।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानाम्॥ २६॥

राजा—अयमयमागच्छामि। ( इति निष्क्रान्तः। )

इति तृतीयोऽङ्कः।

I bid you farewell (hoping) to be once more happy (under your shade). (*Śakuntalā departs in pain, with others.*

THE KING. (*Returning to the former spot; heaving a sigh*). How the accomplishment of one's wishes is beset with obstacles!

For the face of that (maiden) with soft eye-lashes, which had the lower lip repeatedly covered by her fingers, which looked beautiful as it stammered words of denial and which was turned on one side, was somehow raised by me but not kissed! (24)

Where, indeed, shall I go now? Or rather, I will remain for a little while in this bower of creepers where my beloved lay, but which is now deserted by her.

(*Looking all around*).

Here lies on the stone-slab her flowery couch crushed by her form; here is the faded love-missive committed to the lotus-leaf with her nails; and here the bracelet of lotus-stalk dropped down from her arm—as I fix my eyes on these (objects) I have no power to tear myself away from this reedy bower, even though deserted by her. (25)

(*In the air*). O king!

As the evening sacrifice is commenced, the shadows of the flesh-eating demons, brown as evening clouds, and scattered around the blazing altar, are flitting about and creating terror in a variety of ways. (26)

KING. Here I am coming. (*Exit.*)

End of Act III.

# चतुर्थोऽङ्कः ।

( ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ । )

**अनसूया**—**हला पिअंवदे, जइ वि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा सउन्दला अणुरूवभत्तुगामिणी संवुत्तेत्ति णिव्वुदं मे हिअअं, तह वि एत्तिअं चिन्तणिज्जं ।** हला प्रियंवदे, यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तलानुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाप्येतावच्चिन्तनीयम् ।

**प्रियंवदा**—**कहं विअ ।** कथमिव ।

**अनसूया**—**अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदोगदं वुत्तन्तं सुमरदि वा ण वेत्ति ।** अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति ।

**प्रियंवदा**—**वीसद्धा होहि । ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । किंदु तादो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति ।** विस्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । किंतु तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।

**अनसूया**—**जह अहं देक्खामि, तह तस्स अणुमदं भवे ।** यथाहं पश्यामि, तथा तस्यानुमतं भवेत् ।

**प्रियंवदा**—**कहं विअ ।** कथमिव ।

**अनसूया**—**गुणवदे कण्णआ पडिवादणिज्जेत्ति अअं दाव पढमो संकप्पो । तं जइ देव्वं एव्व संपादेदि, णं अप्पआसेण किदत्थो गुरुअणो ।** गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः । तं यदि दैवमेव संपादयति नन्वप्रयासेन कृतार्थो गुरुजनः ।

**प्रियंवदा**—( पुष्पभाजनं विलोक्य । ) **सहि, अवइदाइं बलिकम्मपज्जत्ताइं कुसुमाइं ।** सखि, अवचितानि बलिकर्मपर्याप्तानि कुसुमानि ।

## ACT IV

(*Then enter the two friends, acting the gathering of flowers.*)

ANASŪYĀ. O my Priyaṁvadā, although my heart is comforted by the thought that Śakuntalā has her nuptials celebrated according to the Gāndharva form and has now been united to a husband worthy of her, yet there is still some cause for uneasiness.

PRIYAṀVADĀ. How do you mean?

ANASŪYĀ. Whether the pious king, who is dismissed to-day by the hermits at the completion of the sacrifice, will remember things here, when after entering his capital he will be surrounded by his ladies in the recesses of the palace.

PRIYAṀVADĀ. You need have no anxiety (about that). Such distinguished forms as these can never be opposed to virtue. But I cannot tell now what reply the father will make when he shall have heard what has passed.

ANASŪYĀ. As I see it, he will approve.

PRIYAṀVADĀ. Why do you think so?

ANASŪYĀ. One can desire nothing better than that one's daughter is married to a virtuous husband; and if fate brings this about of itself, then indeed the father has his desire accomplished without effort.

PRIYAṀVADĀ (*Looking at the flower-basket*). My friend, we have gathered flowers enough for the offering.

**अनसूया—णं पिअसहीए सउन्दलाए सोहग्गदेवआ अच्चणीआ ।** ननु प्रियसख्याः शकुन्तलायाः सौभाग्यदेवतार्चनीया ।

**प्रियंवदा—जुज्जदि ।** युज्यते ।

( इति तदेव कर्मारभेते । )

( नेपथ्ये । )

**अयमहं भोः ।**

**अनसूया—**( कर्णं दत्त्वा । ) **सहि, अदिधीणं विअ णिवेदिदं ।** सखि, अतिथीनामिव निवेदितम् ।

**प्रियंवदा—णं उडजसंणिहिदा सउन्दला ।** ( आत्मगतम् । ) **अज्ज उण हिअएण असंणिहिदा ।** ननूटजसंनिहिता शकुन्तला । अद्य पुनर्हृदये-नासंनिहिता ।

**अनसूया—होदु । अलं एत्तिएहिं कुसुमेहिं ।** भवतु । अल-मेतावद्भिः कुसुमैः ।

( इति प्रस्थिते । )

( नेपथ्ये । )

**आः अतिथिपरिभाविनी,**

**विचिन्तयन्ती यमनन्यमानसा**
**तपोधनं वेत्सि न मामुपस्थितम् ।**
**स्मरिष्यति त्वां न स बोधितोऽपि स-**
**न्कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥**

**प्रियंवदा—हद्धी हद्धी । अप्पिअं एव्व संवुत्तं । कस्सिं पि पूआरुहे अवरद्धा सुण्णहिअआ सउन्दला ।** ( पुरोऽवलोक्य । ) **ण हु जस्सिं कस्सिं पि । एसो दुव्वासो सुलहकोवो महेसी । तह सविअ वेअवलुप्फुल्लाए दुव्वाराए गईए पडिणिवुत्तो । को अण्णो हुदवहादो दहिदुं पहविस्सदि ।** हा धिक् हा धिक् । अप्रियमेव संवृत्तम् । कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला । न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा शप्त्वा वेगबलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभविष्यति ।

ANASŪYĀ. But surely the deity that watches over the fortune of our dear friend Śakuntalā will have to be honoured (by us).

PRIYAṀVADĀ. Very well. (*They act doing the same.*)

(*Behind the scenes*)

It is I—Hola!

ANASŪYĀ (*Listening*). My dear, it sounds like some guest announcing himself.

PRIYAṀVADĀ. Well, Śakuntalā is near the cottage. (*To herself*). But not near with her heart to day.

ANASŪYĀ. Well, these flowers will do.

(*They start away.*)

(*Behind the scenes*). Ah, thou that art disrespectful to a guest,

He on whom thou art meditating with a mind that is regardless of everything else, while thou perceivest not me, rich in penance, to have arrived, will not remember thee, though reminded, like a drunken man the words previously spoken. (1)

PRIYAṀVADĀ. Alas! alas! a very unpleasant thing has indeed occurred. Sakuntalā has, through absence of mind, offended some one deserving reverence. (*Looking ahead*). Not, indeed, any ordinary person! This is the great sage Durvāsas, so quick-tempered. After uttering such an imprecation he is striding away with a step bounding and irresistible through its impetuosity. Who besides fire has power to consume?

**अनसूया—गच्छ। पादेसु पणमिअ णिवत्तेहि णं, जाव अहं अग्घोदअं उवकप्पेमि।** गच्छ। पादयोः प्रणम्य निवर्तयैनं, यावदहमर्घोदकमुपकल्पयामि।

**प्रियंवदा—तह।** ( इति निष्क्रान्ता। ) तथा।

**अनसूया**—( पदान्तरे स्खलितं निरूप्य। ) **अम्मो! आवेअक्खलिदाए गईए पब्भट्ठं मे अग्गहत्थादो पुप्फभाअणं।** ( इति पुष्पोच्चयं रूपयति। ) अहो! आवेगस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात्पुष्पभाजनम्।

( प्रविश्य। )

**प्रियंवदा—सहि, पकिदिवक्को सो कस्स अणुणअं पडिगेण्हदि। किं पि उण साणुक्कोसो किदो।** सखि, प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति। किमपि पुनः सानुक्रोशः कृतः।

**अनसूया**—( सस्मितम्। ) **तस्सिं बहु एदं पि। कहेहि।** तस्मिन्बह्वेतदपि। कथय।

**प्रियंवदा—जदा णिवत्तिदुं ण इच्छदि तदा विण्णविदो मए। भअवं, पढमं त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदुजणस्स भअवदा एक्को अवराहो मरिसिदव्वोत्ति।** यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया। भगवन्, प्रथम इति प्रेक्ष्याविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति।

**अनसूया—तदो तदो।** ततस्ततः।

**प्रियंवदा—तदो मे वअणं अण्णहाभविदुं णारिहदि। किंदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदि त्ति मन्तअन्तो सअं अन्तरिहिदो।** ततो मे वचनमन्यथाभवितुं नार्हति। किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयन्स्वयमन्तर्हितः।

ANASŪYĀ. Go, fall at his feet, and bring him back, whilst I prepare a propitiatory offering and water.

PRIYAṀVADĀ. I will. (*Exit.*)

ANASŪYĀ (*Showing that she stumbles at the next step*). As I stumbled in my excitement, the flower-baskets fell out from my hands.

(*She acts the gathering up of the flowers.*)

(*Entering*) PRIYAṀVADĀ. Whose entreaties would this ill-tempered person accept? However, I softened him a little.

ANASŪYĀ (*Smiling*). Even that is a good deal for him : tell me.

PRIYAṀVADĀ. When he would not return, I prayed to him : "Holy sir, considering it is the first time, this one offence of the daughter, who did not recognize the potency of penance, should be forgiven her by your reverence."

ANASŪYĀ. And then—

PRIYAṀVADĀ. And then saying, "My word must not be recalled : but the curse shall be lifted at the sight of the ornament (given her) for a token," he vanished from sight.

अनसूया—सक्कं दाणिं अस्ससिदुं । अत्थि तेण राएसिणा संपत्थिदेण सणामहेअङ्किअं अङ्गुलीअअं सुमरणीअंत्ति सअं पिणद्धं । तस्सिं साहीणोवाआ सउन्दला भविस्सदि । शक्यमिदानीमाश्वसितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति ।

प्रियंवदा—सहि, एहि । देवकज्जं दाव णिव्वत्तेम्ह । सखि, एहि । देवकार्यं तावन्निर्वर्तयावः ।

( इति परिक्रामतः । )

प्रियंवदा—( विलोक्य । )अणसूए, पेक्ख दाव । वामहत्थोवहिदवअणा आलिहिदा विअ पिअसही । भत्तुगदाए चिन्ताए अत्ताणं पि ण एसा विभावेदि । किं उण आअन्तुअं । अनसूये, पश्य तावत् । वामहस्तोपहितवदनालिखितेव प्रियसखी । भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति । किं पुनरागन्तुकम् ।

अनसूया—पिअंवदे, दुवेणं एव्व णं णो मुहे एसो वुत्तन्तो चिट्ठदु । रक्खिदव्वा क्खु पकिदिपेलवा पिअसही । प्रियंवदे, द्वयोरेव ननु नौ मुख एव वृत्तान्तस्तिष्ठतु । रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी ।

प्रियंवदा—को णाम उण्होदएण णोमालिअं सिञ्चेदि । को नामोष्णोदकेन नवमालिकां सिञ्चति ।

( इत्युभे निष्क्रान्ते । )

विष्कम्भः ।

( ततः प्रविशति सुप्तोत्थितः शिष्यः । )

शिष्यः—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन । प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति । ( परिक्रम्यावलोक्य च । ) हन्त प्रभातम् । तथा हि

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतारुणपुरःसर एकतोऽर्कः ।

ANASŪYĀ. We can now feel confident : at his departure the good king himself put a ring, engraved with his own name, (on her finger) as a souvenir. In that Śakuntalā will be possessed of a remedy in her own power.

PRIYAṀVADĀ. Come, dear, let us worship the gods.

(*They walk about.*)

PRIYAṀVADĀ (*Gazing*). See, my Anasūyā, there is the dear girl, with her face resting on her left hand, looking like a painted picture. With her mind so intent on her husband, she is not conscious of even her own self, much less of a stranger.

ANASŪYĀ. Priyaṁvadā, let this incident remain in the mouth of us two only ; we must spare the dear girl, who is naturally (so) delicate.

PRIYAṀVADĀ. Who would sprinkle the jasmine with boiling water ?

(*Both go out.*)

End of the introductory scene.

(*Then enter a pupil of Kaṇva, just risen from sleep*).

PUPIL. I am bidden by the venerable Kāśyapa, who is returned from his pilgrimage, to find out what time it is. I will go into the open air and see how much of the night remains. (*Walking about and observing.*) See ! It is the break of day. For

On one side, the lord of herbs is sinking to the summit of the western mount, while on the other the Sun heralded by Aruṇa has just become visible. By the contemporaneous rise

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ १ ॥

अपि च ।

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ २ ॥

अनसूया—( प्रविश्यापटीक्षेपेण । )—एवं णाम विसअपरम्मुहस्स वि जणस्स ण एदं ण विदिअं जधा तेण रण्णा सउन्दलाए अणज्जं आअरिदं । एवं नाम विषयपराङ्मुखस्यापि जनस्य नैतन्न विदितं यथा तेन राज्ञा शकुन्तलायामनार्यमाचरितम् ।

शिष्यः—यावदुपस्थितां होमवेलां गुरवे निवेदयामि । ( इति निष्क्रान्तः । )

अनसूया—पडिबुद्धा वि किं करिस्सं । ण मे उइदेसु वि णिअकरणिज्जेसु हत्थपाआ पसरन्ति । कामो दाणिं सकामो होदु । जेण असच्चसंधे जणे सुद्धहिअआ सही पदं कारिदा । अहवा दुव्वाससावो एसो विआरेदि । अण्णहा कहं सो राएसी तारिसाणि मन्तिअ एत्तिअस्स कालस्स लेहमेत्तं पि ण विसज्जेदि । ता इदो अहिण्णाणं अङ्गुलीअअं से विसज्जेम । दुक्खसीले तवस्सिजणे को अब्भत्थीअदु । णं सहीगामी दोसो त्ति ववसिदा वि ण पारेमि पवासपडिणिउत्तस्स तादकस्सवस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदिदुं । इत्थंगए अम्हेहिं किं करणिज्जं । प्रतिबुद्धापि किं करिष्ये । न मे उचितेष्वपि निजकार्येषु हस्तपादं प्रसरति । काम इदानीं सकामो भवतु । येनासत्यसंधे जने शुद्धहृदया सखी पदं कारिता । अथवा दुर्वासःशाप एष विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावत्कालस्य लेखमात्रमपि न विसर्जयति । तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसर्जयावः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् । ननु सखीगामी दोष इति

and fall of these twin lights of heaven, people are as it were instructed regarding the vicissitudes of their life. (1)

And again,

When the Moon is hidden, the same night-lotus no longer pleases the eye, its beauty being now only a matter of remembrance. Surely the sorrows of a tender girl produced by the absence of the loved one are beyond all measure very hard to bear. (2)

ANASŪYĀ (*Entering with a hurried toss of the curtain*). However withdrawn from all worldly concerns this person (I) may be, yet it is not unknown to her that Śakuntalā has been treated shamefully by the king.

PUPIL. I will just tell the preceptor that the hour of sacrifice is come. (*Exit*)

ANASŪYĀ. Although wide-awake, what shall I do? My hands and feet move not readily to the usual occupations of the morning. Let Love now enjoy his triumph, who persuaded the pure-minded girl to repose confidence in that perfidious man. Or does the imprecation of Durvāsas cause the change? How else could the good king say such (sweet) things and then not send so much as a letter for such a (long) time? Therefore, we must send him from here the ring he has left as a token. And who, among the ascetics inured to hardship, should be implored? And because the blame lies with my friend, I cannot, although I have made up my mind, summon up courage to tell father Kāśyapa who has returned from his pilgrimage that Śakuntalā

व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम्। इत्थंगतेऽस्माभिः किं करणीयम्।

**प्रियंवदा**—( प्रविश्य सहर्षम्। ) **सहि, तुवर तुवर सउन्दलाए पत्थाणकोदुअं णिव्वत्तिदुं।** सखि, त्वरस्व त्वरस्व शकुन्तलायाः निर्वर्तयितुम्।

**अनसूया**—**सहि, कहं एदं।** सखि, कथमेतत्।

**प्रियंवदा**—**सुणाहि दाणिं। सुहसइदपुच्छिआ सउन्दलासआसं गदम्हि। तदो जाव एणं लज्जावणदमुहिं परिस्सजिअ सअं तादकस्सवेण एव्वं अहिणन्दिदं। दिट्ठिआ धूमाउलिददिट्ठिणो वि जअमाणस्स पाअए एव्व आहुदी पडिदा। वच्छे, सुसिस्सपरिदिण्णा विज्जा विअ असोअणिज्जा संवुत्ता। अज्ज एव्व इसिरक्खिदं तुमं भत्तुणो सआसं विसज्जेमि त्ति।** शृणु इदानीम्। सुखशयितपृच्छिका शकुन्तलासकाशं गतास्मि। ततो यावदेनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकाश्यपेनैवमभिनन्दितम्। दिष्टया धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता। वत्से, सुशिष्यपरिदत्ता विद्येवाशोचनीया संवृत्ता। अद्यैव ऋषिरक्षितां त्वां भर्तुः सकाशं विसर्जयामीति।

**अनसूया**—**अह केण सूइदो तादकस्सवस्स वुत्तन्तो।** अथ केन सूचितस्तातकाश्यपस्य वृत्तान्तः।

**प्रियंवदा**—**अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोमईए वाणिआए।** अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाण्या।

**अनसूया**—( सविस्मयं ) **कहेहि।** कथय।

**प्रियंवदा**—( संस्कृतमाश्रित्य। )

**दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः।**
**अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव॥ ३॥**

**अनसूया**—( प्रियंवदामाश्लिष्य। ) **सहि, पिअं मे। किंदु अज्ज एव्व सउन्दला णीअदि त्ति उक्कण्ठासाधारणं परितोसं अणुहोमि।** सखि, प्रियं मे। किंत्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि।

is married to Duṣyanta and is pregnant. What shall we do then under the circumstances?

PRIYAṀVADĀ (*Entering; with joy*). Hasten, my dear, hasten to perform the festive solemnities at Śakuntalā's departure.

ANASŪYĀ. How is this, my dear?

PRIYAṀVADĀ. Hear me. I just went to Śakuntalā to inquire if she had slept well. And then father Kāśyapa having of his own accord embraced her, while she hung her head in shame, congratulated her thus: "O joy! the offering of the sacrificer fell straight into the fire, albeit his sight was impeded by the smoke. My child, like knowledge imparted to an excellent pupil, thou art not to be sorrowed for. This very day I will send thee to thy husband escorted by hermits."

ANASŪYĀ. But who told father Kāśyapa what had passed?

PRIYAṀVADĀ. An incorporeal metrical speech, when he had entered the fire-sanctuary.

ANASŪYĀ (*Astonished*). Tell me.

PRIYAṀVADĀ. (*Speaking in Sanskrit*).

Know, Brāhmaṇa, that your daughter bears, for earth's prosperity, the glorious seed implanted by Duṣyanta, as the Śamī tree is pregnant with fire. (3)

ANASŪYĀ (*Hugging Priyaṁvadā*). I am so glad, my dear; and yet my joy is mingled with sorrow when I think that Śakuntalā is going to be taken away only to-day.

**प्रियंवदा—सहि, अम्हे दाव उक्कण्ठं विणोदइस्सामो । सा तवस्सिणी णिव्वुदा होदु ।** सखि, आवां तावदुत्कण्ठां विनोदयिष्याव: । सा तपस्विनी निर्वृता भवतु ।

**अनसूया—तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएरसमुग्गए एतण्णिमित्तं एव्व कालन्तरक्खमा णिक्खित्ता मए केसरमालिआ । ता इमं हत्थसंणिहिदं करेहि । जाव अहंपि से मिअलोअणं तित्थमित्तिअं दुव्वाकिसलआणित्ति मङ्गलसमालम्भणाणि विरएमि ।** तेन ह्येतस्मिंश्चूतशाखावलम्बिते नारिकेलसमुद्गक एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तदिमां हस्तसंनिहितां कुरु । यावदहमपि तस्यै मृगरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि ।

**प्रियंवदा—तह करीअदु ।** तथा क्रियताम् ।

( अनसूया निष्क्रान्ता । प्रियंवदा नाट्येन सुमनसो गृह्णाति । )

( नेपथ्ये । )

**गौतमि, आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय ।**

**प्रियंवदा—**( कर्णं दत्त्वा । ) **अणसूए, तुवर तुवर । एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दावीअन्ति ।** अनसूये, त्वरस्व त्वरस्व । एते खलु हस्तिनापुरगामिन ऋषय शब्दाय्यन्ते ।

( प्रविश्य समालम्भनहस्ता । )

**अनसूया—सहि, एहि । गच्छम्ह ।** सखि, एहि । गच्छाव: ।

( इति परिक्रामतः । )

**प्रियंवदा—**( विलोक्य । ) **एसा सुज्जोदय एव्व सिहामज्जिदा पडिच्छिदणीवारहत्थाहिं सोत्थिवाअणआहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ । उवसप्पम्ह णं ।** एषा सूर्योदय एव शिखामज्जिता प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एताम् ।

( इत्युपसर्पतः । )

PRIYAṀVADĀ. Well, my dear, we will dissipate all anxiety. Only let the poor-girl be made happy.

ANASŪYĀ. Well, then, in this cocoa-nut casket, hanging on the branch of the mango-tree I have put a Keśara-garland which is capable of keeping fresh for a time, with this very object. Therefore take it in your hand: while I prepare for her auspicious decorations such as yellow orpiment, holy earth and Durvā sprouts.

PRIYAṀVADĀ. Be it so done.

(*Exit Anasūyā. Priyaṁvadā acts the gathering of flowers. Behind the Scenes.*)

Gautamī, bid the worthy Śārṇgarava and others escort Śakuntalā.

PRIYAṀVADĀ (*Listening*). Hurry, Anasūyā, hurry. They are calling the hermits who are to go to Hastināpura.

(*Entering, with the decorations in her hand*).

Anasūyā Come, dear, let us go. (*They walk round.*)

PRIYAṀVADĀ (*Observing*). There stands our Śakuntalā, after bathing overhead at earliest sunrise, while the hermit-women, who are congratulating her. have the hallowed grains in their hands, and are invoking blessings on her. Let us advance to her. (*They advance.*)

**द्वितीयः**—न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीं

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ४ ॥

**प्रियंवदा**—हला, इमाए अब्भुववत्तीए सूइआ दे भत्तुणो गेहे अणुहोदव्वा राअलच्छित्ति । हला, अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरीति ।

( शकुन्तला व्रीडां रूपयति । )

**प्रथमः**—गौतम, एह्येहि । अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ।

**द्वितीयः**—तथा ।

( इति निष्क्रान्तौ । )

**सख्यौ**—अए, अणुवजुत्तभूसणो अअं जणो । चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेम्ह । अये, अनुपयुक्तभूषणोऽयं जनः । चित्रकर्मपरिचयेनाङ्गेषु ते आभरणविनियोगं कुर्वः ।

**शकुन्तला**—जाणे वो णेउणं । जाने वां नैपुणम् ।

( उभे नाट्येनालंकुरुतः । )

( ततः प्रविशति स्नानोत्तीर्णः काश्यपः । )

**काश्यपः**—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ॥ ५ ॥

SECOND. Not, indeed. Listen. The venerable (sage) gave us his order "Bring hither flowers for Śakuntalā from the trees." And then

> by a certain tree was exhibited an auspicious silken garment white as the moon; another distilled the lac-dye so excellent to stain her feet; and from others were presented ornaments by fairy-hands extending as far as the wrist that rivalled the first sproutings of delicate leaves of those trees. (4)

PRIYAṀVADĀ. This favour is a presage of the royal fortune which you are to enjoy in your husband's home.

(*Śakuntalā looks bashful.*)

FIRST. Come, my Gautama, come. We shall tell father Kāśyapa (who must have) returned from bathing, of the service done by the trees.

SECOND. All right (*Exeunt.*)

FRIENDS. My dear, we are never used to ornaments; but our acquaintance with the art of painting will help us to adjust these ornaments on your limbs.

ŚAKUNTALĀ. I know how clever you are. (*Both act adorning her.*)

(*Enter Kāśyapa returning after bathing.*)

> This day will Śakuntalā depart: at such (a thought) my heart is smitten with anguish; my voice is choked by suppressing the flow of tears; and my senses paralysed by anxious thought. If such, through affection, is the affliction even of me a hermit, O with what pangs must they who are fathers of families be afflicted at the first parting with their daughters? (5)

( इति परिक्रामति )

सख्यौ—हला सउन्दले अवसिदमण्डणासि । परिधेहि संपदं खोमजुअलं । हला शकुन्तले, अवसितमण्डनासि । परिधत्स्व सांप्रतं ।

( शकुन्तलोत्थाय परिधत्ते । )

गौतमी—जादे, एसो दे आणन्दपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्जस्स । जाते, एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व ।

शकुन्तला—( सव्रीडम् । ) ताद, वन्दामि । तात वन्दे ।

काश्यपः—वत्से,

ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ६ ॥

गौतमी—भअवं, वरो क्खु एसो ण आसिसा । भगवन्, वरः खल्वेषो नाशीः ।

काश्यपः—वत्से, इतः सद्योहुताग्नीन्प्रदक्षिणीकुरुष्व ।

[ सर्वे परिक्रामन्ति । ]

काश्यपः—( ऋक्छन्दसाशास्ते । )

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु ॥ ७ ॥

प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् । ) क्व ते शार्ङ्गरवमिश्राः ।

( प्रविश्य । )

शिष्यः—भगवन्, इमे स्मः ।

काश्यपः—भगिन्यास्ते मार्गमादेशय ।

(*Walks about.*)

FRIENDS. Dear Śakuntalā, your decoration is completed. Now put on the pair of silken garments.

(*Śakuntalā rises and puts them on.*)

GAUTAMĪ. My child, here comes your father, whose eyes overflow with tears of joy, as if (already) embracing you. Just, therefore, do him the customary reverence.

ŚAKUNTALĀ (*Bashfully*). Father, I salute you.

KĀŚYAPA. My child,

> Mayest thou be cherished by thy husband, as Śarmiṣṭhā was cherished by Yayāti. And mayest thou bear a son, as she did Puru, who shall be the sovereign of the world. (6)

GAUTAMĪ. Holy sir, this is indeed a boon, not a mere benediction.

KĀŚYAPA. My child, this way go round the fires in which the offerings have just been thrown.

(*All walk about.*)

KĀŚYAPA. (*Pronounces a blessing in the metre of the Ṛgveda*).

> Let these sacrificial fires, whose places are fixed round the altar, fed with holy wood, having the Darbha grass strewn around their margins, removing sin by the perfume of the oblations, purify thee. (7)

Now set out (on thy journey.) (*Looking round*). Where are Śārṅgarava and others?

(*Entering*) PUPIL. Holy sire, here we are.

KĀŚYAPA. Show thy sister her way.

शार्ङ्गरवः—इत इतो भवती ।

( सर्वे परिक्रामन्ति । )

काश्यपः—भो भोः संनिहितास्तपोवनतरवः,

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ८ ॥

( कोकिलरवं सूचयित्वा )

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरीदृशम् ॥ ९ ॥

( आकाशे । )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ १० ॥

( सर्वे सविस्मयमाकर्णयन्ति । )

गौतमी—जादे, णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं । पणम भअवदीणं । जाते, ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । प्रणम भगवतीभ्यः ।

शकुन्तला—( सप्रणामं परिक्रम्य । जनान्तिकम् । ) हला पिअंवदे, णं अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खेण मे चलणा पुरदो पवट्टन्ति । हला प्रियंवदे, नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते ।

ŚĀRNGARAVA. This way, this way, lady.

(*They all walk about.*)

KĀŚYAPA. Ye neighbouring trees of the pious grove !

She who would not drink water first, before you were watered ; she who cropped not through affection for you one of your fresh leaves, though she is so fond of ornaments : she whose chief delight was in the season of the first appearance of your bloom ; even that same Śakuntalā is going to the palace of her wedded lord. Let all give their consent. (8)

(*Acting as if he heard the note of a Koil.*)

Śakuntalā is given leave to depart by the trees, the companions of her forest—life; since a song to this effect, a sweet Koil-song was employed as an answer by them. (9)

(*In the air*)

May her path, pleasant at intervals with lakes that are green with lotus-beds, where the heat of the sun's rays is mitigated by shady-trees, where the dust is soft as the pollen from the lotuses, be cheered by gentle and pleasant breezes and be (altogether) prosperous. (10)

(*All listen with wonderment.*)

GAUTAMĪ. Child, the deities of the holy forest, who are dear to thee as thy own kinsfolk, have given thee leave to depart. Pay reverence to the holy ones.

ŚAKUNTALĀ (*She walks round bowing ; aside*). Priyaṁvadā, dear, long as I may to see my husband, yet in leaving this hermitage, my feet can hardly move forward.

**प्रियंवदा**—ण केवलं तवोवणविरहकादरा सही एव्व । तुए उवट्ठिदविओअस्स तवोवणस्स वि दाव समवत्था दीसइ । न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते ।

उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा मोरा ।
ओसरिअपण्डुपत्ता मुअन्ति अस्सू विअ लदाओ ॥ ११ ॥

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥

**शकुन्तला**—( स्मृत्वा । ) ताद, लदाबहिणिअं वणजोसिणिं दाव आमन्तइस्सं । तात, लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ।

**काश्यपः**—अवैमि ते तस्यां सोदर्यस्नेहम् । इयं तावद्दक्षिणेन ।

**शकुन्तला**—( लतामुपेत्य । ) वणजोसिणी, चूदसंगता वि मं पच्चालिङ्ग इदोगदाहिं साहाबाहाहिं । अज्जप्पहुदि दूरपरिवत्तिणी दे खु भविस्सं । वनज्योत्स्ने, चूतसंगतापि मां प्रत्यालिङ्गेतोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरपरिवर्तिनी ते खलु भविष्यामि ।

**काश्यपः**—

संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ १२ ॥

इतः पन्थानं प्रतिपद्यस्व ।

**शकुन्तला**—( सख्यौ प्रति । ) हला, एसा दुवेणं वो हत्थे णिक्खेवो । हला, एषा द्वयोर्युवयोर्हस्ते निक्षेपः ।

**सख्यौ**—अअं जणो कस्स हत्थे समप्पिदो । ( इति बाष्पं विहरतः । ) अयं जनः कस्य हस्ते समर्पितः ।

PRIYAṀVADĀ. My friend is not the only one to feel distressed at this separation from the pious grove. One may observe the same condition even of the grove now when the time of your departure approaches.

> The deer let fall the morsels of Darbha-grass,
> the peacocks stop their dancing, and the cree-
> pers, whose pale leaves fall (to the ground),
> appear to shed tears. (11)

ŚAKUNTALĀ (*Remembering*). Father, I will just say good-bye to Vanajyotsnā, my sister among the creepers.

KĀŚYAPA. I know thou lovest her as thy sister. Here she is now to the right.

ŚAKUNTALĀ (*Approaching the creeper*). O Vanajyotsnā, although wedded to the mango-tree, yet embrace me, too, with your arms, these branches, which are turned in this direction. I shall be far away from you after this day.

KĀŚYAPA.

> Thy merits have gained thee a husband equal
> to thyself, who had already been originally de-
> termined upon by me for thee ; this Navamā-
> likā has resorted to the mango-tree, so that
> now my solicitude for thee and for her is at
> an end. (12)

From here, proceed on thy journey.

ŚAKUNTALĀ (*To her friends*). Friends, this (creeper) is a deposit in your hands.

FRIENDS. (But) into whose hands shall we be left? (*they shed tears.*)

काश्यपः—अनसूये, अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

( सर्वे परिक्रामन्ति । )

शकुन्तला—ताद, एसा उडजपज्जन्तचारिणी गब्भमन्थरा मिअवहू जदा अणघप्पसवा होइ तदा मे कंपि पिअणिवेदइत्तअं विसज्जइस्सह । तात एषोटजपर्यंतचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ ।

काश्यपः—नेदं विस्मरिष्यामः ।

शकुन्तला—( गतिभङ्गं रूपयित्वा । ) को णु क्खु एसो णिवसणे मे सज्जइ । ( इति परावर्तते । ) को नु खल्वेष निवसने मे सज्जते ।

काश्यपः—वत्से,

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १३ ॥

शकुन्तला—वच्छ, किं सहवासपरिच्चाइणिं मं अणुसरसि । अचिरप्पसूदाए जणणीए विणा वड्ढिदो एव्व । दाणिं पि मए विरहिदं तुमं तादो चिन्तइस्सदि । णिवत्तेहि दाव । ( इति रुदती प्रस्थिता । ) वत्स, किं सहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् ।

काश्यपः—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विरतानुबन्धम् ।

KĀŚYAPA. Anasūyā, enough of weeping! It is you, surely, who must cheer Śakuntalā.

(*All walk round.*)

ŚAKUNTALĀ. Father, when yon female antelope grazing about near the hut, who now moves slowly from the weight of her young, shall be safely delivered of it, then you will send me some one to announce the happy event.

KĀŚYAPA. I shall not forget it.

ŚAKUNTALĀ (*Showing her movement is obstructed.*) Ah! who is it that clings to my dress?

(*She turns round.*)

KĀŚYAPA. My darling,

It is thy adopted child, the (little) fawn whose mouth, when the sharp points of Kuśa grass wounded it, was sprinkled by thee with the healing oil of Ingudī, who has been tenderly reared by thee with handfuls of Śyāmāka grains; and who now will not leave thy footsteps. (13)

ŚAKUNTALĀ. My child, why should you follow me who must leave your company? You were indeed brought up by me when bereft of your mother shortly after she was delivered of you; now also, when separated from me, will father attend you with anxious care; go back then. (*She walks on weeping.*)

KĀŚYAPA.

Be firm and check the rising tears, that obstruct the free action of thy eyes, with their upturned eyelashes. For here on this path

अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १४ ॥

शार्ङ्गरवः—भगवन्, ओदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरम्। अत्र संदिश्य प्रतिगन्तुमर्हसि।

काश्यपः—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः।

( सर्वे परिक्रम्य स्थिताः। )

काश्यपः—( आत्मगतम्। ) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम्। ( इति चिन्तयति। )

शकुन्तला—( जनान्तिकम्। ) हला, पेक्ख। णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमि त्ति। हला, पश्य नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारौति दुष्करमहं करोमीति।

अनसूया—सहि, मा एव्वं मन्तेहि। सखि, मैवं मन्त्रयस्व।

एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं।
गरुअं पि विरहदुक्खं आसाबन्धो सहावेदि ॥ १५ ॥

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥

काश्यपः—शार्ङ्गरव, इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

शार्ङ्गरवः—आज्ञापयतु भवान्।

काश्यपः—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।

where the undulations of ground are not discernible, they footsteps must needs be unequal. (14)

ŚĀRṄGARAVA. It is a sacred rule, holy father, that one should accompany a loved person as far as the water's brink. Give us your message here, and be pleased to return.

KĀŚYAPA. Let us, then rest in the shade of this Kṣīra-tree.

(*All walk around and stop.*)

KĀŚYAPA (*To himself*). What message should be sent by me that would be most appropriate for the noble Duṣyanta? (*He reflects.*)

ŚAKUNTALĀ (*Aside*). Look, friend, the female Cakravāka, not perceiving her dear mate when only hidden behind lotus-leaves is crying in her anguish 'How hard is my lot!'

ANASŪYĀ. Friend, do not say so.

Even she, without her beloved, passes away the night made too long by grief. The bond of hope makes the pain of severence, however keen, supportable. (15)

KĀŚYAPA. Śārṅgarava, when you present Śakuntalā to the king, address him thus in my name.

ŚĀRṄGARAVA. Give your commands, holy father.

KĀŚYAPA.

Having well considered us as rich in devotion, thy own exalted birth and the free flow of affection of this (girl) towards thee, which arose in her without any interference of her kindred,

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १६ ॥

शार्ङ्गरवः—गृहीतः संदेशः ।

काश्यपः—वत्से, त्वमिदानीमनुशासनीयासि । वनौकसोऽपि सन्तो लौकिकज्ञा वयम् ।

शार्ङ्गरवः—न खलु धीमतां कश्चिदविषयो नाम ।

काश्यपः—सा त्वमितः पतिकुलं प्राप्य

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ १७ ॥

कथं वा गौतमी मन्यते ।

गौतमी—एत्तिओ बहूजणस्स उवदेसो । जादे, एदं क्खु सव्वं ओधारेहि । एतावान्वधूजनस्योपदेशः । जाते, एतत्खलु सर्वमवधारय ।

काश्यपः—वत्से, परिष्वजस्व मां सखीजनं च ।

शकुन्तला—ताद, इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति । तात, इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ।

look on her among thy wives with the same respect (kindness) which they experience: more than that depends upon the will of heaven, and should, not indeed, be demanded by the bride's kinsfolk. (16)

ŚĀRṄGARAVA. I have (well) comprehended your message.

KĀŚYAPA. My child, I must now give thee my advice. Though I live in the forest, yet well do I know the ways of the world.

ŚĀRṄGARAVA. Nothing, indeed, to the wise is out of reach.

KĀŚYAPA. When thou wilt have gone from here to thy husband's home,

Pay respectful attention to thy elders; treat thy rivals as thy dear friends; should thy husband wrong thee, let not thy resentment lead thee to disobedience. Be ever courteous towards thy servants; not puffed with pride in thy fortune. By such behaviour, young women become honoured wives; but perverse wives are the bane of a family. (17)

But what does Gautamī say?

GAUTAMĪ. This is the advice to be given to a young bride. My child, be sure to remember it all.

KĀŚYAPA. Come, my child, embrace me and thy friends.

ŚAKUNTALĀ. O my father, must my friends turn back from here?

**काश्यपः**—इमे अपि प्रदेये। न युक्तमनयोस्तत्र गन्तुम्। त्वया सह गौतमी यास्यति।

**शकुन्तला**—( पितरमाश्लिष्य। ) कहं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलअतडुम्मूलिआ चन्दणलदा विअ देसन्तरे जीविअं धारइस्सं। कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये।

**काश्यपः**—वत्से, किमेवं कातरासि।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि॥ १८॥

( शकुन्तला पितुः पादयोः पतति। )

**काश्यपः**—यदिच्छामि ते तदस्तु।

**शकुन्तला**—( सख्यावुपेत्य। ) हला, दुवे वि मं समं एव्व परिस्सजह। हला, द्वे अपि मां सममेव परिष्वजेथाम्।

**सख्यौ**—( तथा कृत्वा। ) सहि, जइ णाम सो राआ पच्चहिण्णाणमन्थरो भवे तदो से इमं अत्तणामहेअङ्किअं अङ्गुलीअअं दंसेहि। सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय।

**शकुन्तला**—इमिणा संदेहेण वो आकम्पिदम्हि। अनेन संदेहेन वामाकम्पितास्मि।

**सख्यौ**—मा भाआहि। अदिसिणेहो पावसङ्की। मा भैषीः। अतिस्नेहः पापशङ्की।

KĀŚYAPA. These, too, are to be given away in marriage. It would not be proper for them to go there, but Gautamī will accompany thee.

ŚAKUNTALĀ (*Embracing her father*). Removed from the lap of my father, like a young sandal tree, rent from the slopes of the Malaya, how shall I exist in a strange soil?

KĀŚYAPA. My child, why shouldst thou be so anxious?

When thou shalt be occupying the honoured position of the consort of a nobly-born husband; engrossed every moment in his affairs important through his greatness; and when before long thou wilt have given birth to a child that will purify (his race) as the East brings forth the Sun, then wilt thou think but lightly of this affliction caused by severence from me. (18)

(*Śakuntalā falls at the feet of her father.*)

KĀŚYAPA. My darling, mayest thou have all that I desire for thee!

ŚAKUNTALĀ (*Advancing to her friends*). Come friends; embrace me, both of you together.

FRIENDS (*So doing*). Friend, should the king be slow to recognize you, show him this ring on which his own name is engraved.

ŚAKUNTALĀ. My heart flutters at the apprehension which you have raised.

FRIENDS. Do not be afraid. Excessive love is apt to suspect evil.

**शार्ङ्गरवः**—युगान्तरमारूढः सविता। त्वरतामत्रभवती।

**शकुन्तला**—( आश्रमाभिमुखी स्थित्वा। ) ताद, कदा णु भूओ तवोवणं पेक्खिस्सं। तात, कदा नु भूयस्तपोवनं प्रेक्षिष्ये।

**काश्यपः**—श्रूयताम्।

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तमप्रतिरथं तनयं निवेश्य।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन्॥ १९॥

**गौतमी**—जादे, परिहीअदि गमणवेला। णिवत्तेहि पिदरं। अहवा चिरेण वि पुणो पुणो एसा एव्वं मन्तइस्सदि। णिवत्तदु भवं। जाते, परिहीयते गमनवेला। निवर्तय पितरम्। अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते। निवर्ततां भवान्।

**काश्यपः**—वत्से, उपरुध्यते तपोऽनुष्ठानम्।

**शकुन्तला**—( भूयः पितरमाश्लिष्य। ) तवच्चरणपीडिदं तादसरीरं। ता मा अदिमेत्तं मम किदे उक्कण्ठिदुम्। तपश्चरणपीडितं तातशरीरम्। तन्मातिमात्रं मम कृत उत्कण्ठितुम्।

**काश्यपः**—( सनिःश्वासम्। )

शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम्।
उटजद्वारविरूढं नीवारबलिं विलोकयतः॥ २०॥

गच्छ। शिवास्ते पन्थानः सन्तु।

( निष्क्रान्ता शकुन्तला सहयायिनश्च। )

**सख्यौ**—( शकुन्तलां विलोक्य। ) हद्धी हद्धी। अन्तरिहिदा सउन्दला वणराईए। हा धिक्, हा धिक्। अन्तर्हिता शकुन्तला वनराज्या।

ŚĀRṄGARAVA. The Sun has ascended to another quarter of the heavens. Let the worthy lady hasten.

ŚAKUNTALĀ (*Turning her face towards the hermitage*). Father, when shall I behold this pious grove again?

KĀŚYAPA. Listen.

> When thou shalt long have been a co-wife of the Earth bounded by the four cardinal-points, and settled in marriage in Duṣyanta's son by thee, a matchless warrior; then with thy husband who shall have transferred the burden of family-cares to him, thou shalt again set foot in this peaceful hermitage. (19)

GAUTAMĪ. My child, the (proper) hour of our journey is slipping by. Suffer thy father to return. Or since ever so long she will go on talking again and again in the same strain, let the holy father return.

KĀŚYAPA. Sweet child, the practice of devotions is interrupted.

ŚAKUNTALĀ (*Embracing her father again*). Father's body is already worn out by his devotion. Do not, therefore, grieve for me beyond measure.

> KĀŚYAPA (*Sighing*). How, my child, will my grief cease, as I look at the hallowed rice-grains formerly offered by thee, germinating at the door of my cottage? (20)

Go, may thy journey prosper.

(*Exeunt Śakuntalā and her escort.*)

FRIENDS (*Gazing after Śakuntalā*). Alas! Alas! Śakuntalā is hidden by the thick trees.

काश्यपः—( सनिःश्वासम् । ) अनसूये, गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

उभे—ताद, सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पविसामो । तात, शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ।

काश्यपः—स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य । ) हन्त भोः, शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २१ ॥

( इति निष्क्रान्ताः सर्वे । )

चतुर्थोऽङ्कः ।

KĀSYAPA (*Sighing*). Anasūyā, your companion is (at length) departed. Check your grief and follow me who am leaving.

BOTH. Father, how shall we enter the pious grove which without Śakuntalā seems a perfect vacuity ?

KĀŚYAPA. So your love interprets. (*He walks round meditating*). Ah, dismissing Śakuntalā to her husband's home, I have regained my natural serenity of mind. For

In truth a daughter is another's property ; and having to-day sent her to her lord, I find my soul has become quite clear as if after restoring a deposit. (21)

(*Exeunt All.*)

Here ends Act IV

# पञ्चमोऽङ्कः ।

( ततः प्रविशत्यासनस्थो राजा विदूषकश्च । )

विदूषकः—( कर्णं दत्त्वा । ) भो वअस्स, संगीदसालन्तरे अवधाणं देहि । कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि । जाणे तत्तहोदी हंसवदिआ वण्णपरिअअं करेदि त्ति । भो वयस्य, संगीतशालान्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ।

राजा—तूष्णीं भव । यावदाकर्णयामि ।

( आकाशे गीयते । )

अहिणवमहुलोलुवो तुमं
तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसइमेत्तणिव्वुदो
महुअर विम्हरिओ सि णं कहं ॥ १ ॥

अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥

राजा—अहो रागपरिवाहिनी गीतिः ।

विदूषकः—किं दाव गीदीए अवगदो अक्खरत्थो । किं तावद्गीत्या अवगतोऽक्षरार्थः ।

राजा—( स्मितं कृत्वा । ) सकृत्कृतप्रणयोऽयं जनः । तदस्या देवीं वसुमतीमन्तरेण महदुपालम्भं गतोऽस्मि । सखे माठव्य, मद्वचना-दुच्यतां हंसपदिका । निपुणमुपालब्धोऽस्मीति ।

# ACT V

(*Enter king seated and the Vidūṣaka.*)

VIDŪṢAKA (*Listening.*) O friend, turn your attention to the interior of the Music-hall. One hears harmonious notes blended in a sweet and clear song. I believe the lady Haṁsapadikā is practising singing.

KING. Be quiet, that I may listen.

(*A song is sung in the air.*)

O bee, how comes it that you who eagerly long for fresh-honey, after having kissed the mango-blossom in that way, should have forgotten it, being now satisfied with mere dwelling in the lotus ! (1)

KING. O, what an impassioned song ?

VIDŪṢAKA. But, do you understand the meaning of the words of the song ?

KING (*Smiling*). I was once in love with her, and am now reproved on account of the queen Vasumatī. Friend Māṭhavya inform Haṁsapadikā in my name that I am well reproved.

विदूषकः—जं भवं आणवेदि । ( उत्थाय । ) भो वअस्स, गहीदस्स ताए परकीएहिं हत्थेहिं सिहण्डए ताडीअमाणस्स अच्छराए वीदराअस्स विअ णत्थि दाणिं मे मोक्खो । यद्भवानाज्ञापयति । भो वयस्य, गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके ताड्यमानस्याप्सरसा वीतरागस्येव नास्तीदानीं मे मोक्षः ।

राजा—गच्छ । नागरिकवृत्त्या संज्ञापयैनाम् ।

विदूषकः—का गई । ( इति निष्क्रान्तः । ) का गतिः ।

राजा—( आत्मगतम् । ) किं नु खलु गीतार्थमाकर्ण्येष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा ।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥२॥

( इति पर्याकुलस्तिष्ठति । )

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि ।

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्था ॥ ३ ॥

भोः, कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदयितुम् । अथवाविश्रमोऽयं लोकतन्त्राधिकारः । कुतः ।

VIDŪṢAKA. As your Majesty, commands. (*Rising*). But now there will be no liberation for me when seized by her with the hands of others by the crest-lock and belaboured, any more than for a sage whose passions are spent, if seized by a nymph.

KING. Go, tell her in a courtly style.

VIDŪṢAKA. What help! (*He goes out.*)

KING (*To himself*). Why am I filled with such deep sadness when I am in fact not separated from any real object of my affection, on hearing the meaning of the song? Or,

> When even a happy being is filled with wistful longings on seeing beautiful forms and listening to sweet sounds, then surely without being conscious of it, he remembers in his mind the friendships of a former birth deeply-rooted there in the form of impressions. (2)

(*He remains deeply troubled.*)

(*Then enter a chamberlain.*)

CHAMBERLAIN. Alas! To such a state am I reduced!

> This staff which I assumed as a matter of form for the discharge of my duties in the inner apartment of my king, has, now when much time has elapsed since then, become the support to aid my faltering steps. (3)

Ah, surely the king cannot neglect a religious duty. And yet I have not the heart to announce to him, who has just risen from his tribunal the arrival of Kaṇva's pupils which will again detain him. But, this office of supporting the world will not allow any repose. For

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥

यावन्नियोगमनुतिष्ठामि । ( परिक्रम्यावलोक्य च । ) एष देवः

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते श्रान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५ ॥

( उपगम्य । ) जयतु जयतु देवः । एते खलु हिमगिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

राजा—( सादरम् । ) किं काश्यपसंदेशहारिणः ।

कञ्चुकी—अथ किम् ।

राजा—तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः । अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्यत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

राजा—( उत्थाय । ) वेत्रवति, अग्निशरणमार्गमादेशय ।

The Sun has yoked his steeds but once, the gale breathes by night and by day : Śeṣa continually sustains the weight of the Earth ; this also is the duty of him whose subsistence arises from a sixth part (of his people's income). (4)

Let me then attend to my duty. (*Walking about and observing*). Here is his Majesty

Attending to his people as to his own children, he now, being wearied in mind, seeks seclusion ; as an elephant, the chief of his herds, after having taken them round, and being heated by the Sun, repairs to a cool place during (the oppresive heat of) the day. (5)

(*Advancing*) Victory, victory to your Majesty ! Here are hermits with some women, come from their abode in the forest at the foot of the snowy mountains, and they bring a message from Kāśyapa. Having heard, your Majesty will command.

KING (*Respectfully.*) Do they bring a message from Kāśyapa ?

CHAMBERLAIN. It is even so.

KING. Well then, order the priest Somarātā, in my name : It is proper that you should give them a reception in the form appointed by the scriptures, and bring them (into the palace). I, too, shall await (them) here in this place fit for the reception of hermits.

CHAMBERLAIN. As your Majesty commands. (*exit.*)

KING. (*Rising*). Vetravati, lead the way to the fire-sanctuary.

प्रतीहारी—इदो इदो देवो । इत इतो देवः ।

राजा—( परिक्रामति । अधिकारखेदं निरूप्य । ) सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखोत्तरैव ।

औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ६ ॥

( नेपथ्ये । )

वैतालिकौ—विजयतां देवः ।

प्रथमः—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ७ ॥

द्वितीयः—

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ८ ॥

राजा—एते क्लान्तमनसः पुनर्नवीकृताः स्मः । ( इति परिक्रामति । )

PORTRESS. This way, your Majesty, this way.

KING. (*Moves about; betraying the cares of office*). Every one is happy on attaining his desire; but to kings, the attainment of their desire is only followed by pain.

The attainment of one's ambition destroys only all eager longing; but the task of retaining what has been secured gives extreme pain. A kingdom, like an umbrella, of which a man carries the staff in his own hand, does not so much remove fatigue as it causes fatigue. (6)

(*Behind the Scenes*)

TWO BARDS. May the king be victorious!

FIRST.

Thou seekest not thy own happiness, but for the people thou dost toil from day to day. Or thus is thy very nature made. For the Tree bears on his head the fierce heat (of day) while his shade allays the fever of those who seek shelter under him. (7)

SECOND.

Wielding the rod of justice, thou bringest to order all those who have set out on bad courses; thou biddest contention cease; and thou preservest thy people. One may have, in truth, a number of kinsmen, when wealth abounds; but in thee the duty of your subjects' kinsmen towards them finds perfection. (8)

KING. Now, wearied in mind that I was, I feel refreshed. (*Walks round.*)

प्रतीहारी—अहिणवसम्मज्जणस्सिरीओ सण्णिहिदहोमधेणू-अभिसरणालिन्दो । आरुहदु देवो । अभिनवसंमार्जनसश्रीकः संनिहित-होमधेनुरभिशरणालिन्दः । आरोहतु देवः ।

राजा—( आरुह्य परिजनांसावलम्बी तिष्ठति । ) वेत्रवति, किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः ।

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ९ ॥

प्रतीहारी—सुचरिदणन्दिणो इसीओ देवं सभाजइदुं आअदेत्ति तक्केमि । सुचरितनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि ।

( ततः प्रविशन्ति गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः । )

[ पुरश्चैषां कञ्चुकी पुरोहितश्च । ]

कञ्चुकी—इत इतो भवन्तः ।

शार्ङ्गरवः—शारद्वत,

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ १० ॥

PORTRESS. Here is the terrace of the fire sanctuary, which being newly-swept looks beautiful, and near it is the cow that yields the milk for sacrifice. Let the king ascend.

KING. (*Ascends and stands leaning on the shoulder of an attendant*). Vetravati, with what object has the revered Kāśyapa sent these sages to me?

May it be that the penance of those who have commenced a vow and stored up religious merit, has been defiled by obstacles? Or has any harm been inflicted by any one on the animals who graze in the hallowed forest? Or my sins have checked the flowering of the plants? Thus my mind which is assailed by many doubts, is perplexed on account of its inability to decide. (9)

PORTRESS. I imagine the pious men have come to pay homage to their king with whose pious rule they are pleased.

(*Then enter sages accompanied by Gautamī, leading Śakuntalā before them; and in front of them the chamberlain and the chaplain.*)

CHAMBERLAIN. This way, this way, sirs.

ŚĀRṄGARAVA. Śāradvata,

Granted that this glorious king does not swerve from rectitude; and that none of all the grades, not even the lowliest, seeks the path of wrong: nevertheless my mind having ever been accustomed to solitude, I consider this (place) thronged with men to be like a house all lapped about with flame. (10)

शारद्वतः—स्थाने भवान्पुरप्रवेशादित्थंभूतः संवृत्तः । अहमपि

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥ ११ ॥

शकुन्तला—( निमित्तं सूचयित्वा । ) अम्महे, किं मे वामेदरं णअणं विप्फुरदि । अहो, किं मे वामेतरन्नयनं विस्फुरति ।

गौतमी—जादे पडिहदं अमङ्गलं । सुहाइं दे भत्तुकुलदेवदाओ वितरन्तु । ( इति परिक्रामति । ) जाते, प्रतिहतममङ्गलम् । सुखानि ते भर्तृकुलदेवता वितरन्तु ।

पुरोहितः—( राजानं निर्दिश्य । ) भो भोस्तपस्विनः असावत्रभवान्वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति । पश्यतैनम् ।

शार्ङ्गरवः—भो महाब्राह्मण, काममेतदभिनन्दनीयम् । तथापि वयमत्र मध्यस्थाः । कुतः ।

भवन्ति नम्रास्तरवः फलागमै-
र्नवाम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ १२ ॥

प्रतीहारी—देव, पसण्णमुहवण्णा दीसन्ति । जाणामि वीसद्धकज्जा इसीओ । देव, प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विस्रब्धकार्या ऋषयः ।

राजा—( शकुन्तलां दृष्ट्वा । ) अथात्रभवती

ŚĀRADVATA. Rightly have you become thus on entering this city. I, too,

Look on these people here devoted to worldly joys as a man (just) bathed on a man smeared with oil, as the pure on the impure, as the waking on the sleeping, or as the free man on the captive. (11)

ŚAKUNTALĀ (*Indicating an omen*). Oh, why does my right eye throb ?

GAUTAMĪ. May the evil be averted, my sweet child ! May thy husband's household gods confer happiness upon thee !

(*She walks round.*)

CHAPLAIN. (*Indicating the king*). There, holy men, is he the protector of the four orders and classes, who having already quitted the seat (of justice) is awaiting you. Behold him.

ŚĀRṄGARAVA. O great Brahmin, this is surely commendable ; yet we do not think much of it ; for

These become bent down by the abundance of their fruit ; clouds hang low when they teem with fresh rain ; good men are never elated by riches ; this is the very nature of the benefactors of others. (12)

PORTRESS. O king, the holy men appear to have placid looks ; so I think they come on an errand about which they feel confident.

KING. (*Beholding Śakuntalā*).

Who is she, shrouded in the veil, the loveliness of whose person is not fully revealed,

काश्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १३ ॥

प्रतीहारी—देव, कुदूहलगब्भोपहिदो ण मे तक्को पसरदि । णं दंसणीआ उण से आकिदी लक्खीअदि । देव, कुतूहलगर्भोपहितो न मे तर्कः प्रसरति । ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ।

राजा—भवतु । अनिर्वर्णनीयं परकलत्रम् ।

शकुन्तला—( हस्तमुरसि कृत्वा । आत्मगतम् ) हिअअ, किं एव्वं वेवसि । अज्जउत्तस्स भावं ओधारिअ धीरं दाव होहि । हृदय, किमेवं वेपसे । आर्यपुत्रस्य भावमवधार्य धीरं तावद्भव ।

पुरोहितः—( पुरो गत्वा । ) एते विधिवदर्चितास्तपस्विनः । अस्ति कश्चिदेषामुपाध्यायसंदेशः । तं देवः श्रोतुमर्हति ।

राजा—अवहितोऽस्मि ।

ऋषयः—( हस्तानुद्यम्य ) विजयस्व राजन् ।

राजा—सर्वानभिवादये ।

ऋषयः—इष्टेन युज्यस्व ।

राजा—अपि निर्विघ्नतपसो मुनयः ।

ऋषयः—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति धर्मांशौ कथमाविर्भविष्यति ॥ १४ ॥

राजा—अर्थवान्खलु मे राजशब्दः । अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः ।

ऋषयः—स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

looking in the midst of hermits like a fresh bud
among yellow leaves ? (13)

PORTRESS. Your Majesty, my reason, though impelled by curiosity, does not work ; but she appears to have a lovely figure.

KING. Enough ! One ought not to gaze upon another's wife.

ŚAKUNTALĀ (*Laying her hand on her bosom ; to herself*). My heart, why dost thou palpitate so ? Call to mind the love of thy lord and be firm.

CHAPLAIN (*Going forward*). The holy men have been duly honoured. They have some message from their preceptor. Let the king deign to hear it.

KING. I am attentive.

SAGES (*Raising their hands*). Victory to you, O king.

KING. I salute you all.

SAGES. May you attain your desires !

KING. Has the devotion of the hermits been uninterrupted ?

SAGES. How could the pious rites be disturbed when thou art the preserver of the good ? How, when the bright Sun blazes, should darkness make its appearance ? (14)

KING. My royal title, indeed, is not an empty one. Is the holy Kāśyapa now all well, to bless the world ?

SAGES. They who possess miraculous powers can command welfare. He first asks after your health and then addresses you in these words—

राजा—किमाज्ञापयति भगवान् ।

शार्ङ्गरवः—यन्मिथः समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः ।

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

गौतमी—अज्ज, किंपि वत्तुकामम्हि । ण मे वअणावसरो अत्थि । कहंत्ति । आर्य, किमपि वक्तुकामास्मि । न मे वचनावसरोस्ति। कथमिति ।

णावेक्खिओ गुरुअणो इमीअ ण तुए वि पुच्छिदो बन्धू ।
एक्कक्कमेव्व चरिए भणामि किं एक्कमेक्कस्स ॥ १६ ॥

नापेक्षितो गुरुजनोऽनया न त्वयापि पृष्टो बन्धुः ।
एकैकमेव चरिते भणामि किमेकैकम् ।

शकुन्तला—( आत्मगतम् । ) किं णु क्खु अज्जउत्तो भणादि ।
किं नु खल्वार्यपुत्रो भणति ।

राजा—किमिदमुपन्यस्तम् ।

शकुन्तला—( आत्मगतम् । ) पावओ क्खु एसो वअणोवण्णासो । पावकः खल्वेष वचनोपन्यासः ।

शार्ङ्गरवः—कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्त-निष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।

KING. What does the holy one command ?

ŚĀRṄGARAVA. By reciprocal agreement hast thou married this daughter of mine which I have with pleasure approved. For

> Thou art known, to us as the best of worthy men ; while my Śakuntalā is virtue itself in human form ; Brahman, who has now united a bride and bridegroom of equal merit, has after a long time incurred no censure. (15)

Therefore, now receive her, who is quick with child, that she may perform, in conjunction with thee, the duties prescribed by religion.

GAUTAMĪ. Noble sir, I wish to say something. And (yet) there is no occasion for my words. (If you ask) how so ?

> Her elderly relatives were not regarded by her, nor were kinsmen consulted by thee. The affair being transacted solely by mutual (consent), what may one say to either ? (16)

ŚAKUNTALĀ (*To herself*). What will my lord say now ?

KING. What is (all) this brought before me ?

ŚAKUNTALĀ (*To herself*). Like fire indeed are these words he has uttered.

ŚĀRṄGARAVA. How, indeed, is this ? You yourself know the world's ways well enough.

> People suspect a married woman, living wholly in her kinsmen's family, although chaste, to be otherwise. Therefore, her kinsmen desire

अतः समीपे परिणेतुरिष्यते
तदप्रियापि प्रमदा स्वबन्धुभिः ॥ १७ ॥

राजा—किं चात्रभवती मया परिणीतपूर्वा ।

शकुन्तला—( सविषादम् । आत्मगतम् । ) हिअअ, संपदं दे आसङ्का । हृदय, सांप्रतं त आशङ्का ।

शार्ङ्गरवः—

किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः ।

राजा—कुतोऽयमसत्कल्पनाप्रश्नः ।

शार्ङ्गरवः—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १८ ॥

राजा—विशेषेणाधिक्षिप्तोऽस्मि ।

गौतमी—जादे, मुहुत्तअं मा लज्ज । अवणइस्सं दाव दे ओउण्ठणं । तदो तुमं भट्टा अहिजाणिस्सदि । ( इति यथोक्तं करोति । ) जाते, मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति ।

राजा—( शकुन्तलां निर्वर्ण्य । आत्मगतम् । )

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न खलु च परिभोक्तुं नैव शक्नोमि हातुम् ॥ १९ ॥

( इति विचारयन् स्थितः । )

प्रतीहारी—अहो धम्मावेक्खिदा भट्टिणो । ईदिसं णाम सुहोवणदं रूवं देक्खिअ को अण्णो विआरेदि । अहो धर्मापेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति ।

a young woman to be with her husband even though he love her not. (17)

KING. And, was this lady married to me before?

ŚAKUNTALĀ (*Sorrowfully; to herself*). O my heart, thy fears are justified!

ŚĀRṄGARAVA.

Does it become a king to depart from the rules of justice, merely because of his aversion to a deed done?

KING. What means this accusation based upon a false assumption?

ŚĀRṄGARAVA.

Such fickleness of disposition mostly takes effect in those whom power intoxicates. (18)

KING. I am reproved with too great severity.

GAUTAMĪ. Child, forget thy shame for a while. I will just remove the veil, so that thy husband will then recognize thee. (*Does as said.*)

KING. (*Observing Śakuntalā; to himself.*)

While I am doubtful whether this unblemished beauty which is thus brought near to me may or may not have been formerly married by me, verily I neither can enjoy nor forsake her like a bee at the close of night, the Kunda flower filled with dew. (19)

(*Keeps reflecting.*)

PORTRESS. How greatly is virtue honoured by our lord! Would any other man hesitate when he saw such beauty presenting herself with ease?

शार्ङ्गरवः—भो राजन्, किमिति जोषमास्यते ।

राजा—भोस्तपोधनाः, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ।

शकुन्तला—( अपवार्य । ) अज्जस्स परिणए एव्व संदेहो । कुदो दाणिं मे दूराहिरोहिणी आसा । आर्यस्य परिणय एव संदेहः । कुत इदानीं मे दूराधिरोहिण्याशा ।

शार्ङ्गरवः—मा तावत्

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

शारद्वतः—शार्ङ्गरव, विरम त्वमिदानीम् । शकुन्तले, वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् ।

शकुन्तला—( अपवार्य । ) इमं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमराविदेण । अत्ता दाणिं मे सोअणीओ त्ति ववसिदं एदं । ( प्रकाशम् । ) अज्जउत्त, ( इत्यर्धोक्ते । ) संसइदे दाणिं परिणए ण एसो समुदाआरो । पोरव, ण जुत्तं णाम दे तह पुरा अस्समपदे सहावुत्ताणहिअअं इमं जणं समअपुव्वं पतारिअ ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं । इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन । आत्मेदानीं मे शोचनीय इति व्यवसितमेतत् । आर्यपुत्र । संशयित इदानीं परिणये नैष समुदाचारः । पौरव, न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम् ।

राजा—( कर्णौ पिधाय । ) शान्तं पापम् ।

ŚĀRṄGARAVA. Why do you sit silent, O king?

KING. Ye holy men! I do not remember, much as I think of it, to have taken this lady in marriage. How then shall I receive her, bearing evident signs of pregnancy, when I have doubts about being her husband?

ŚAKUNTALĀ (*Aside*). My lord even casts doubt on our marriage. Where is now my high-soaring hope?

ŚĀRṄGARAVA. Do not indeed——

Would you insult the sage who approved his daughter who had been seduced by you; and who allowing his stolen property to be kept by you has deemed you worthy of the gift; as one would a robber by allowing him to retain one's stolen goods? (20)

ŚĀRADVATA. Rest you, now, my Śārṅgarava. Śakuntalā, we have now said what was for us to say. His Honour has spoken thus. Let a convincing reply be given him.

ŚAKUNTALĀ (*Aside*). When such (great) affection has suffered this change, of what use will it be to recall his remembrance (of me)? It is settled now that I should deplore my own self. (*Aloud*). My noble Lord!—(*When half said*)—This is not the proper form of address, now that the very marriage is called in question. O, Son of Puru, it is not becoming in you that having formerly in the hermitage beguiled in that way this person (myself) naturally open-hearted, after making an agreement, you should reject me with such words.

KING. (*Stopping his ears*). Be the sin removed from my soul!

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥

शकुन्तला—होदु । जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं पउत्तं ता अहिण्णाणेण इमिणा तुह आसङ्कं अवणइस्सं। भवतु । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि ।

राजा—उदारः कल्पः ।

शकुन्तला—( मुद्रास्थानं परामृश्य ) हद्धी । अङ्गुलीअअसुण्णा मे अङ्गुली । ( इति सविषादं गौतमीमवेक्षते । ) हा धिक् । अङ्गुलीयकशून्या मेऽङ्गुलिः ।

गौतमी—णूणं दे सक्कावदारब्भन्तरे सचीतित्थसलिलं वन्दमाणाए पब्भट्ठं अङ्गुलीअअं । नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

राजा—( सस्मितम् । ) इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

शकुन्तला—एत्थ दाव विहिणा दंसिदं पहुत्तणं । अवरं दे कहिस्सं । अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

राजा—श्रोतव्यमिदानीं संवृत्तम् ।

शकुन्तला—णं एक्कस्सिं दिअहे णोमालिआमण्डवे णलिणीपत्तभाअणगदं उदअं तुह हत्थे संणिहिदं आसि । नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

राजा—शृणुमस्तावत् ।

शकुन्तला—तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिओ । तुए अअं दाव पढमं पिअउ त्ति अणुअम्पिणा उवच्छन्दिदो उअएण । ण उण दे अपरिचआदो हत्थब्भासं उगवदो । पच्छा तस्सिं एव्व मए गहिदे सलिले णेण किदो पणओ । तदा तुमं इत्थं पहसिदो सि । सव्वो सगन्धेसु विस्ससदि । दुवेवि एत्थ आरण्णआ त्ति । तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन ।

Why seek you to sully your family, and drag me down, as a stream, that eats away the bank, sullies its clear water and drags down the trees on its banks? (21)

ŚAKUNTALĀ. Well, if you act thus because you really think me to be another's wife, I will remove your doubts by this token of recognition.

KING. A capital suggestion.

ŚAKUNTALĀ (*Touching the place of the ring*). Alas! My finger is without the ring! (*She looks sadly at Gautamī.*)

GAUTAMĪ. The ring must have in all probability dropped (From thy finger) as thou worshippedst the Śacītīrtha at Śakrāvatāra.

KING (*Smiling*). This is an instance of the proverb "Women are ready-witted."

ŚAKUNTALĀ. Here now destiny has shown its power. I will tell you something else.

KING. Now it has come to something to be heard!

ŚAKUNTALĀ. One day, in the Navamālikā bower, you had in your hand water in a vase of lotus-leaves.

KING. Well, I am listening.

ŚAKUNTALĀ. At that moment the fawn Dīrghāpāṅga, my foster-child, came up. Then you took pity on him saying "Let him drink first", and coaxed him to drink; but as he did not know you, he would not come to drink water from your hand. But later, when I held the very same water, he liked it. Then you said in jest: "Every one trusts his own kindred. You are both foresters alike."

न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः । तदा त्वमित्थं प्रहसितोऽसि । सर्वः सगन्धेषु विश्वसिति । द्वावप्यत्रारण्यकाविति ।

राजा—एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः ।

गौतमी—महाभाअ, ण अरुहसि एव्वं मन्तिदुं । तवोवणसंवड्ढिदो अणभिण्णो अअं जणो कइदवस्स । महाभाग, नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितोऽनभिज्ञोयं जनः कैतवस्य ।

राजा—तापसवृद्धे,

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥

शकुन्तला—( सरोषम् । ) अणज्ज, अत्तणो हिअआणुमाणेण पेक्खसि । को दाणिं अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदिं पडिवदिस्सदि । अनार्य, आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ।

राजा—( आत्मगतम् । ) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥

( प्रकाशम् । ) भद्रे, प्रथितं दुष्यन्तस्य चरितम् । तथापीदं न लक्षये ।

शकुन्तला—सुट्ठु दाव अत्त सच्छन्दचारिणी किदम्हि जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअट्ठिअविसस्स हत्थब्भासं

KING. By such honeyed falsehoods are voluptuaries ensnared by (women) who seek to compass their own ends.

GAUTAMĪ. Worthy sir, forbear to speak thus. She was bred in the sacred grove, and she does not know guile.

KING. Old hermit-woman,

> The female's untaught cunning may be observed even in those that are not of the human race; far more in those who are endowed with reason. The female cuckoos, it is well-known, allow their young ones to be reared by other birds, before they can soar in the sky. (22)

ŚAKUNTALĀ (*Angrily*). Wicked man, you measure (all this) by your own heart. What other man would act like you, who wearing the garb of virtue, resemble a grass-concealed well ?

KING. (*To himself*). Throwing my mind in doubt, her anger seems to be unfeigned. For

> When I, whose mental attitude was harsh (towards her) from the absence of all recollection, would not admit our secret love, it seemed that she, whose eyes were flashing red, bending her curved eyebrows, fiercely snapped Love's bow. (23)

(*Aloud*). Good woman, Duṣyanta's conduct is well known; yet this is not found (in it).

ŚAKUNTALĀ. Well have I been made (to appear) a wanton woman, who trusting Puru's race put myself in the hands of one who had honey in his mouth, but

उपगता। (इति पटान्तेन मुखमावृत्य रोदिति।) मुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता।

शार्ङ्गरवः—इत्थमात्मकृतमप्रतिहतं चापलं दहति।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्॥ २४॥

राजा—अयि भोः, किमत्रभवतीप्रत्ययादेवास्मान्संभृतदोषैः क्षिणुथ।

शार्ङ्गरवः—(सासूयम्।) श्रुतं भवद्भिरधरोत्तरम्।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः॥ २५॥

राजा—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिरेवम्। किं पुनरिमामतिसंधाय लभ्यते।

शार्ङ्गरवः—विनिपातः।

राजा—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयम्।

शारद्वतः—शार्ङ्गरव, किमुत्तरेण। अनुष्ठितो गुरोः संदेशः। प्रतिनिवर्तामहे वयम्। (राजानं प्रति।)

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी॥ २६॥

गौतमि, गच्छाग्रतः।

(इति प्रस्थिताः।)

poison in his heart! (*She covers her face with the end of her garment and weeps.*)

ŚĀRṄGARAVA. Thus does one's own levity, if not bridled, breed poignant remorse.

Therefore, a union, especially, a secret one, ought to be formed with great circumspection; with those who know not each other's heart, love thus turns to hate. (24)

KING. O sir, would you rely on her, and reproach me with accumulated faults?

ŚĀRṄGARAVA (*Scornfully*). Have you heard (such a) perversion!

The words of one who from birth has never learnt deceit are to receive no credit; while they, forsooth, who make the deception of others their study, calling it a science, are to be considered as worthy of trust! (25)

KING. Now, truth-teller, we admit it for a moment; but what would be gained by deceiving her?

ŚĀRṄGARAVA. Damnation!

KING. It is unthinkable that damnation would be sought by Puru's line.

ŚĀRADVATA. Śārṅgarava, what avails you answer? We have executed the commands of our preceptor, and we now return. (*To the king*).

Here then is your wife, (whether you) desert her or acknowledge her. For the authority over wives is admitted to be absolute. (26).

Gautamī, lead the way.

(*They start.*)

शकुन्तला—कहं इमिणा किदवेण विप्पलद्ध म्हि । तुम्हे वि मं परिच्चअध । ( इत्यनुप्रतिष्ठते । ) कथमनेन कितवेन विप्रलब्धास्मि । यूयमपि मां परित्यजथ ।

गौतमी—( स्थित्वा ) वच्छ सङ्गरव, अनुगच्छदि इअं क्खु णो करुणपरिदेविणी सउन्दला । पच्चादेसपरुसे भत्तरि किं वा मे पुत्तिआ करेदु । वत्स शार्ङ्गरव, अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु ।

शार्ङ्गरवः—( सरोषं निवृत्य । ) किं पुरोभागिनि, स्वातंत्र्यमवलम्बसे ।

( शकुन्तला भीता वेपते । )

शार्ङ्गरवः—शकुन्तले,

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २७ ॥

तिष्ठ । साधयामो वयम् ।

राजा—भोस्तपस्विन्, किमत्रभवतीं विप्रलभसे । कुतः

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥

शार्ङ्गरवः—यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवांस्तदा कथमधर्मभीरुः ।

राजा—भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

ŚAKUNTALĀ. How have I been deceived by the perfidious man ! But will you, too, leave me ?

(*She starts to follow.*)

GAUTAMĪ (*Stopping*). Śārṅgarava, my son, Śakuntalā is indeed, following us, lamenting piteously ; or what can my poor child do, when her husband is so ruthless in rejecting her ?

ŚĀRṄGARAVA (*Turning back in anger*). Well, wanton girl, would you affect independence ?

(*Śakuntalā trembles in fear.*)

ŚĀRṄGARAVA. Śakuntalā,

If you are what the king makes you out to be, what has father to do with you—a disgrace to your family ? But if you know your (marriage) vow to be pure, it will become you to wait even as a handmaid in the mansion of your lord. (27)

STAY. We must return.

KING. O hermit, why deceive the lady ? For

The Moon opens the night-lotuses only and the Sun the day-lotuses. The feelings of those who are self-controlled ever recoil from any connection with the wife of another. (28)

ŚĀRṄGARAVA. But when you have forgotten a former engagement on account of union with another (wife) how are you (to be regarded as) one who fears to offend virtue ?

KING. I would ask your reverence which is the greater and which the lesser evil :

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

पुरोहितः—( विचार्य ) यदि तावदेवं क्रियताम् ।

राजा—अनुशास्तु मां भवान् ।

पुरोहितः—अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् । त्वं साधुभिरुद्दिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

राजा—यथा गुरुभ्यो रोचते ।

पुरोहितः—वत्से, अनुगच्छ माम् ।

शकुन्तला—भअवदि वसुहे, देहि मे विवरं । भगवति वसुधे, देहि मे विवरम् । ( इति रुदती प्रस्थिता । निष्क्रान्ता सह पुरोधसा, तपस्विभिश्च )

( राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति । )

( नेपथ्ये । )

आश्चर्यम् ।

राजा—( आकर्ण्य ) किं नु खलु स्यात् ।

( प्रविश्य । )

पुरोहितः—( सविस्मयम् । ) देव, अद्भुतं खलु संवृत्तम् ।

राजा—किमिव ।

In a doubt as to whether I be infatuated or she speak falsely, shall I forsake my own wife, or defile myself by having intercourse with the wife of another? (29)

CHAPLAIN (*Deliberating*). Well, then, if this were done—

KING. Let the venerable one instruct me.

CHAPLAIN. Let the lady dwell till her delivery in my house. If you ask why I say this, (my answer is) you have been told by the sages that at the very first you will beget a son who will bear the mark of a discus (on his hand). If then the son of the hermit's daughter bears that mark, then greet her and introduce her to the female apartments. But if the reverse happens, it is evident enough that she must be taken to her father.

KING. As it pleases my worthy teacher.

CHAPLAIN. Daughter, follow me.

ŚAKUNTALĀ. Divine Earth, open (to receive me).

(*She is in tears as she starts; exit with the Chaplain and the hermits; the king, whose memory is still clouded by the curse, ponders on something regarding Śakuntalā herself*).

(*Behind the Scenes*).

A miracle!

KING. (*Listening*). What could it be?

(*Entering*) Chaplain (*in amazement*). Your Majesty, a wonderful thing has happened!

KING. What is it?

पुरोहितः—देव, परावृत्तेषु कण्वशिष्येषु

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

राजा—किं च ।

पुरोहितः—

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-
दुत्क्षिप्यैनां ज्योतिरेकं जगाम ॥ ३० ॥

( सर्वे विस्मयं रूपयन्ति । )

राजा—भगवन् प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवान् ।

पुरोहितः—( विलोक्य । ) विजयस्व । ( इति निष्क्रान्तः । )

राजा—वेत्रवति, पर्याकुलोऽस्मि । शयनभूमिमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो । ( इति प्रस्थितः । ) इत इतो देवः ।

राजा—

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् ॥ ३१ ॥

( इति निष्क्रान्ताः सर्वे । )

पञ्चमोऽङ्कः ।

CHAPLAIN. Your Majesty, when Kaṇva's pupils had departed,

The young girl, blaming her fortunes, threw up her arms and started weeping—

KING. What then?

CHAPLAIN.

When a body of light, in a female shape, snatched her up from afar, and went to Apsaras-tīrtha. (30)

(*All betray astonishment.*)

KING. Revered sir, we have already dismissed that object from us. What need to reason more on it? Please rest you, sir.

CHAPLAIN (*Observing*). Victory to your Majesty! (*Goes out.*)

KING. Vetravati, I am troubled. Lead the way to the bed-chamber.

PORTRESS. This way, your Majesty, this way.

(*Starts.*)

KING.

True I do not recollect this daughter of the sage (now) repudiated to be my wife; nevertheless my heart being powerfully agitated almost persuades me to believe (her story). (31)

(*Exeunt Omnes.*)

**End of Act V**

# षष्ठोऽङ्कः ।

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च । )

**रक्षिणौ**—( ताडयित्वा । ) **अले कुम्भिलआ, कहेहि कहिं तुए एशे मणिबन्धणुक्किण्णणामहेए लाअकीए अङ्गुलीअए शमाशादिए ।** अरे कुम्भिलक, कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ।

**पुरुषः**—( भीतिनाटितकेन । ) **पशीदन्तु भावमिश्शे । हगे ण ईदिशकम्मकाली ।** प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

**प्रथमः**—**किं खु शोहणे बम्हणेत्ति कलिअ लण्णा पडिग्गाहे दिण्णे ।** किं खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः ।

**पुरुषः**—**शुणध दाणिं । हगे शक्कावदालब्भन्तलवाशी धीवले ।** शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः ।

**द्वितीयः**—**पाडच्चला, किं अम्हेहिं जादी पुच्छिदा ।** पाटच्चर, किमस्माभिर्जातिः पृष्टा ।

**श्यालः**—**सूअअ, कहेदु सव्वं अणुक्कमेण । मा णं अन्तरा पडिबन्धह ।** सूचक, कथयतु सर्वमनुक्रमेण । मैनमन्तरे प्रतिबन्धय ।

**उभौ**—**जं आवुत्ते आणवेदि । कहेहि ।** यदावुत्त आज्ञापयति । कथय ।

**पुरुषः**—**अहके जालुग्गालादीहिं मच्छबन्धणोवाएहिं कुडुम्बभलणं कलेमि ।** अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

**श्यालः**—( विहस्य । ) **विसुद्धो दाणिं आजीवो ।** विशुद्ध इदानीमाजीवः ।

**पुरुषः**—

**शहजे किल जे विणिन्दिए ण हु दे कम्म विवज्जणीअए ।**
**पशुमालणकम्मदालुणे अणुकम्पामिदु एव्व शोत्तिए ॥ १ ॥**

## ACT VI

*(Enter the King's brother-in-law (as) the chief of the city-police with two policemen leading a man with his hands bound behind his back.)*

THE TWO POLICEMEN (*Striking*). Now, thief, tell us where you found this royal ring the setting of which is engraven with his name.

THE MAN (*With a gesticulation of fear*). Be pleased, your honours. I would never do such an act.

FIRST. Was it, then, a present given by the king, thinking you were an illustrious Brahmin?

THE MAN. Hear me, now. I am a fisherman dwelling at Śakrāvatāra.

SECOND. Thief, we did not ask about your caste.

ŚYĀLA. Let him tell the story in order, Sūcaka. Do not interrupt him in the middle.

BOTH. As the brother-in-law commands. Speak.

MAN. I support my family with things you catch fish with—nets and hooks and such like.

ŚYĀLA (*Smiling*). A virtuous way of gaining a livelihood!

MASTER. Do not say that, master.

The occupation in which one was born, as they say, how low soever, must not be forsaken. The same learned Brahmin who is cruel in the act of killing animals (for the sacrifice), is yet soft with pity. (1)

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥

श्यालः—तदो तदो । ततस्ततः ।

पुरुषः—एक्कस्सिं दिअसे खण्डशो लोहिअमच्छे मए कप्पिदे जाव तस्स उदलब्भन्तले पदं लदणभाशुलं अङ्गुलीअअं देक्खिअ । पच्छा अहके शे विक्कआअ दंशअन्ते गहिदे भावमिश्शेहिं । मालेह वा मुञ्चेह वा । अअं शे आअमवुत्तन्ते । एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत् तस्योदराभ्यन्तर इदं रत्नभासुरमङ्गुलीयं दृष्टम् । पश्चादहं तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । अयमस्यागमवृत्तान्तः ।

श्यालः—जाणुअ, विस्सगन्धी गोहादी मच्छबन्धो एव्व णिस्संसअं । अङ्गुलीअअदंसणं से विमरिसिदव्वं । राउलं एव्व गच्छामो । जानुक, विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः ।

रक्षिणौ—तह । गच्छ अले गण्ठिभेदअ । तथा । गच्छ अरे ग्रन्थिभेदक ।

( सर्वे परिक्रामन्ति । )

श्यालः—सूअअ, इमं पुरदुआरे अप्पमत्ता पडिवालह । जाव इमं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कमामि । सूचक, इमं पुरद्वारेऽप्रमत्तौ प्रतिपालयतम् । यावदिदमङ्गुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रमामि ।

उभौ—पविशदु आवुत्ते शामिपशादस्श । प्रविशत्वावुत्तः स्वामिप्रसादाय ।

( इति निष्क्रान्तः श्यालः । )

प्रथमः—जाणुअ, चिलाअदि क्खु आवुत्ते । जानुक, चिरायते खल्वावुत्तः ।

द्वितीयः—णं अवशलोवशप्पणीआ लाआणो । नन्ववसरोपसर्पणीया राजानः ।

प्रथमः—जाणुअ, फुलन्ति मे हत्था इमश्श वज्झश्श शुमणो पिणर्द्धु । ( इति. पुरुषं निर्दिशति । ) जानुक, स्फुरतो मम हस्तावस्य वध्यस्य सुमनसः पिनद्धुम् ।

ŚYĀLA. Go on, go on.

MAN. Well, one day I was cutting open a carp when in its maw I saw this ring, flashing with its gem. When later I offered it for sale, I was apprehended by your honours. Now kill me or leave me alone. (But) that is the way I got it.

ŚYĀLA. O Jānuka, he is doubtless a fisherman, stinking as he does of raw flesh—this eater of alligators. But the finding of the ring by him requires to be considered. Let us proceed to the palace itself.

THE TWO POLICEMEN. Just so; move on, you cut-purse.

(*All walk round.*)

ŚYĀLA. Sūcaka guard him carefully at the city-gate, while I tell the king how this ring was found, and receiving his commands, come out.

BOTH. Let the master enter to receive the king's favour.

(*Exit Śyāla.*)

FIRST. Jānuka, the chief is indeed taking too long a time.

SECOND. Well, kings can only be approached at their leisure.

FIRST. Jānuka, how my hands tingle to fasten flowers about the head of this victim! (*He points to the man.*)

**पुरुषः**—**ण अलुहदि भावे अकालणमालणे भविदुं ।** नार्हति भावोऽकारणमारणो भवितुम् ।

**द्वितीयः**—( विलोक्य । ) **एशो अम्हाणं शामी पत्तहत्थे काअ-शाशणं पडिच्छिअ इदोमुहे देक्खीअदि । गिद्धबली भविश्शशि । शुणो मुहं वा देक्खिश्शशि ।** एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि, शुनो मुखं वा द्रक्ष्यसि ।

( प्रविश्य । )

**श्यालः**—**सूअअ, मुञ्चेदु एसो जालोअजीवी । उववण्णो क्खु अङ्गुलीअस्स आअमो ।** सूचक, मुच्यतामेष जालोपजीवी । उपपन्नः खल्वङ्गुलीयस्यागमः ।

**सूचकः**—**जह आवुत्ते भणादि ।** यथावुत्तो भणति ।

**द्वितीयः**—**एशे जमशदणं पविशिअ पडिणिवुत्ते ।** ( इति पुरुषं परिमुक्तबन्धनं करोति । ) एष यमसदनं प्रविश्य प्रतिनिवृत्तः ।

**पुरुषः**—( श्यालं प्रणम्य । ) **भट्टा, अह कीलिशे मे आजीवे ।** भर्तः, अथ कीदृशो मे आजीवः ।

**श्यालः**—**एसो भट्टिणा अङ्गुलीअअमुल्लसम्मिदो पसादो वि दाविदो ।** ( इति पुरुषायार्थं प्रयच्छति । ) एष भर्त्राङ्गुलीयकमूल्यसमितः प्रसादोऽपि दापितः ।

**पुरुषः**—( सप्रणामं प्रतिगृह्य । ) **भट्टा, अणुग्गहीदम्हि ।** भर्तः, अनुगृहीतोऽस्मि ।

**सूचकः**—**एशो णाम अणुग्गहिदे जे शूलादो अवदालिअ हत्थिक्खन्धे पडिट्ठाविदे ।** एष नामानुगृहीतो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

**जानुकः**—**आवुत्त, पालिदोशिअं कहेदि तेण अङ्गुलीअएण भट्टिणो शम्मदेण होदव्वं ।** आवुत्त, पारितोषिकं कथयति तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यम् ।

MAN. You would not kill a man without reason, master.

SECOND (*Observing*). There is our chief, letter in hand, who is coming towards us after receiving the king's command. You will either be food for vultures or will see the face of a dog.

(*Entering*) ŚYĀLA. Sūcaka, let the fisherman be discharged. This finding of the ring is indeed explained.

SŪCAKA. As the chief says.

SECOND. Here he returns, after having entered the abode of the God of death.

(*Unbinds the prisoner.*)

MAN (*Bowing to Śyāla*). Master, how do you think is my profession ?

ŚYĀLA. And the king has further given him a sum of money equal to the full value of the ring. (*Offers the man money.*)

MAN (*Accepting with a bow*). I am favoured by my master.

SŪCAKA. He has, indeed, been favoured, who after being taken down from the stake, has been set on the withers of an elephant.

JĀNUKA. My chief, the reward shows that the ring must be highly prized by the king.

श्यालः—ण तस्सिं महालुहं लदणं भट्टिणो बहुमदं त्ति तक्केमि। तस्स दंसणेण भट्टिणो अभिमदो जणो सुमराविदो। मुहुत्तअं पकिदिगम्भीरो वि पज्जुसुअणअणो आसि। न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि। तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत्।

सूचकः—शेविदं णाम आवुत्तेण। सेवितं नामावुत्तेन।

जानुकः—णं भणाहि। इमश्श कए मच्छिआभत्तुणोत्ति। (इति पुरुषमसूयया पश्यति।) ननु भण। अस्य कृते मात्स्यिकभर्तुरिति।

पुरुषः—भट्टालके, इदो अद्धं तुम्हाणं शुमणोमुल्लं होदु। भट्टारक, इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु।

जानुकः—एत्तके जुज्जई। एतावद्युज्यते।

श्यालः—धीवर, महत्तरो तुमं पिअवअस्सओ दाणिं मे संवुत्तो। कादम्बरीसक्खिअं अम्हाणं पढमसोहिदं इच्छीअदि। ता सोण्डिआपणं एव्व गच्छामो। धीवर, महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः। कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते। तच्छौण्डिकापणमेव गच्छामः। (इति निष्क्रान्ताः सर्वे।)

## प्रवेशकः।

(ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः।)

सानुमती—णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं जाव साहुजणस्स अभिसेअकालो त्ति। संपदं इमस्स राएसिणो उदन्तं पच्चक्खीकरिस्सं। णं मेणआसंबन्धेण सरीरभूदा मे सउन्दला। ताए अ दुहिदुणिमित्तं आदिट्ठपुव्वम्हि। (समन्तादवलोक्य।) किं णु क्खु उदुच्छवे वि णिरुच्छवारम्भं विअ राअउलं दीसइ। अत्थि मे विहवो पणिधाणेण सव्वं परिण्णादुं। किंदु सहीए आदरो मए माणइदव्वो। होदु। इमाणं एव्व उज्जाणपालिआणं तिरक्खरिणीपडिच्छण्णा पस्सवत्तिणी

ŚYĀLA. I do not think that the costly gem in it was prized by the king; but, at its sight, the king remembered somebody he loves; and although naturally firm, he became for a moment agitated in mind.

SŪCAKA. Our master has given (the king) extreme pleasure.

JĀNUKA. Rather say, for the sake of this chief of fishermen. (*Eyes the man enviously*).

MAN. Let half of this be the price of your flower, master.

JĀNUKA. That is right.

ŚYĀLA. Fisherman, now you are the biggest and the best friend I have got. It is desirable that we pledge our first friendship over (some) wine. So let us get along to a wine-shop.

(*They all go out.*)

End of the introductory scene.

(*Then enter in an aerial car a nymph named Sānumatī.*)

SĀNUMATĪ. Attendance at Apsaras-tīrtha which is to be performed by turns, during the time the pious people have their ablutions, has been performed by me. I will now see with my own eyes what the good king is doing. Śakuntalā has, indeed, now become a part of myself, through my relation with Menakā. And she has already sent me on this commission on her daughter's account. (*Looking about*). How even at the festival of the season, no preparations for a celebration

भविअ उवलहिस्सं । ( इति नाट्येनावतीर्य स्थिता । ) निर्वर्तितं मया पर्याय-निर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत्साधुजनस्याभिषेककाल इति । सांप्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि । ननु मेनकासंबन्धेन शरीरभूता मे शकुन्तला । तथा च दुहितृनिमित्तमादिष्टपूर्वास्मि । किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते । अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम् । किं तु सख्या आदरो मया मानयितव्यः । भवतु । अनयोरेवोद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये ।

( ततः प्रविशति चूताङ्कुरमवलोयन्ती चेटी । अपरा च पृष्ठतस्तस्याः । )

**प्रथमा—**

**आतम्महरिअपण्डुर वसन्तमासस्स जीअसव्वस्स ।**
**दिट्ठो सि चूदकोरअ उदुमङ्गल तुमं पसाएमि ॥ २ ॥**

आताम्रहरितपाण्डुर वसन्तमासस्य जीवसर्वस्व ।
दृष्टोऽसि चूतकोरक ऋतुमङ्गल त्वां प्रसादयामि ॥

**द्वितीया—परहुदिए, किं एआइणी मन्तेसि ।** परभृतिके, किमेकाकिनी मन्त्रयसे ।

**प्रथमा—महुअरिए, चूदकलिअं देक्खिअ उम्मत्तिआ परहुदिआ होदि ।** मधुकरिके, चूतकलिकां दृष्ट्वोन्मत्ता परभृतिका भवति ।

**द्वितीया—**( सहर्षं त्वरयोपगम्य । ) **कहं उवट्ठिदो महुमासो ।** कथमुपस्थितो मधुमासः ।

**प्रथमा—महुअरिए, तव दाणिं कालो एसो मदविब्भमगीदाण ।** मधुकरिके, तवेदानीं काल एष मदविभ्रमगीतानाम् ।

**द्वितीया—सहि, अवलम्ब मं । जाव अग्गपादट्ठिआ भविअ चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि ।** सखी, अवलम्बस्व मां याव-दग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि ।

**प्रथमा—जइ मम वि क्खु अद्धं अच्चणफलस्स ।** यदि ममापि खल्वर्धमर्चनफलस्य ।

are to be seen at the palace ? I might learn everything by exerting my supernatural power. But respect must be shown to (the desire of) my friend. I will make myself invisible through my supernatural powers and standing near these girls who take care of the garden, will find out.

(*She acts descending, and stops*).

(*Then enter a maid gazing at the mango-blossom, and another behind her.*)

FIRST.

O mango-blossom, a little pink and green and pale, the very essence of the life of spring, thou art seen by me, and I beg thee to favour (me), thou blesssing of the season. (2)

SECOND. Parabhṛtikā, what are you talking about to yourself ?

FIRST. Madhukarikā, when a female kokil sees the mango-blossom, she goes crazy with delight.

SECOND (*Hastily advancing ; with joy*). What, is the spring really come ?

FIRST. Madhukarikā, this is the time for your wild and graceful songs.

SECOND. Hold me, dear, while I stand tip-toe and take the mango-blossom to worship God Kāma.

FIRST. If mine would be half the reward of the worship.

द्वितीया—अकहिदे वि पदं संपज्जइ जदो एक्कं एव्व णो जीविदं दुधा ट्ठिदं सरीरं । (सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति ।) अए, अप्पडिबुद्धो वि चूदप्पसवो एत्थ बन्धणभङ्गसुरभी होदि । अकथितेऽप्येतत्संपद्यते यत एकमेव नौ जीवितं द्विधा स्थितं शरीरम् । अये, अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति ।

(कपोतहस्तकं कृत्वा ।)

तुं सि मए चूदङ्कुर दिण्णो कामस्स गहिदधणुअस्स ।
पहिअजणजुवइलक्खो पञ्चब्भहिओ सरो होहि ॥ ३ ॥

त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतधनुषे ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥

(इति चूताङ्कुरं क्षिपति ।)

(प्रविश्यापटीक्षेपेण कुपितः)

कञ्चुकी—मा तावत् । अनात्मज्ञे, देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्रकलिकाभङ्गं किमारभसे ।

उभे—(भीते) पसीददु अज्जो । अग्गहीदत्थाओ अम्हे । प्रसीदत्वार्यः । अगृहीतार्थे आवाम् ।

कञ्चुकी—न किल श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च । तथाहि

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ४ ॥

उभे—णत्थि संदेहो । महाप्पहावो राएसी । नास्ति संदेहः । महाप्रभावो राजर्षिः ।

SECOND. That goes without saying, dear ; for our life is but one, though our bodies stand apart. (*Stands leaning on her friend and takes the mango-blossom*). Ah, the mango-blossom though not opened, is yet fragrant as its stalk is cut. (*Joining her hands together*).

O mango-sprout, thou art offered by me to God Kāma, who has taken up his bow. Be an arrow more splendid than (his) five, having for thy marks the girls whose lovers are journeying. (3)

(*She throws down the mango-sprout.*)

(*Entering with a hurried toss of the curtain ; angrily*)

CHAMBERLAIN. Don't, thoughtless girl ; the king having forbidden the spring-festival, how have you started breaking off mango-buds ?

BOTH (*frightened*). Please, sir, we did not know about it.

CHAMBERLAIN. You knew it not ! When the king's command is obeyed even by the vernal trees, and the birds that dwell in them ! Thus

The mango-buds, which have long appeared do not yet form their own pollen ; the Kurabaka (flower) also though all-ready to bloom, remains in the state of a bud ; the voice of the male-cuckoos, though the cold season is gone, falters in the throat ; while I suspect even Smara, being awed, replaces the shaft half-drawn from his quiver. (4)

BOTH. There is no doubt of it. The pious king possesses great power.

**प्रथमा**—अज्ज कदि दिअहाइं अम्हाणं मित्तावसुणा रट्ठिएण भट्टिणो पाअमूलं पेसिदाणं। इत्थं अ णो पमदवणस्स पालणकम्म समप्पिदं। ता आअन्तुअदाए अस्सुदपुव्वो अम्हेहिं एसो वुत्तन्तो। आर्य, कति दिवसान्यावयोर्मित्रावसुना राष्ट्रीयेण भर्तुः पादमूलं प्रेषितयोः। इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितम्। तदागन्तुकतया-श्रुतपूर्व आवाभ्यामेष वृत्तान्तः।

**कञ्चुकी**—भवतु। न पुनरेवं प्रवर्तितव्यम्।

**उभे**—अज्ज, कोदूहलं णो। जदि इमिणा जणेण सोदव्वं कहेदु भवं किंणिमित्तं भट्टिणा वसन्तुस्सवो पडिसिद्धो। आर्य, कौतूहलं नौ। यद्यनेन जनेन श्रोतव्यं कथयतु भवान् किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः।

**सानुमती**—उस्सवप्पिआ क्खु मणुस्सा। गुरुणा कारणेण होदव्वं। उत्सवप्रियाः खलु मनुष्याः। गुरुणा कारणेन भवितव्यम्।

**कञ्चुकी**—बहुलीभूतमेतत्किं न कथ्यते। किमत्रभवत्योः कर्ण-पथं नायातं शकुन्तलाप्रत्यादेशकौलीनम्।

**उभे**—सुदं रट्ठिअमुहादो जाव अङ्गुलीअअदंसणं। श्रुतं राष्ट्रीयमुखाद्यावदङ्गुलीयकदर्शनम्।

**कञ्चुकी**—तेन ह्यल्पं कथयितव्यम्। यदैव खलु स्वाङ्गुलीयक-दर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मे तत्रभवती रहसि शकु-न्तला मोहात्प्रत्यादिष्टेति। तदाप्रभृत्येव पश्चात्तापमुपगतो देवः। तथाहि।

रम्यं द्वेष्टि यथापुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम्॥ ५॥

**सानुमती**—पिअं मे। प्रियं मे।

FIRST. Noble sir, but a few days ago, we were sent to the feet of his Majesty, by Mitrāvasu, the king's brother-in-law, and were entrusted with the duty of keeping the pleasure-garden ; thus being strangers, we have heard nothing of this affair.

CHAMBERLAIN. Well, you must not do so again.

BOTH. Sir, we are curious. If we may know, pray tell us what induced our sovereign to forbid the spring festival ?

SĀNUMATĪ. Men are, indeed, fond of festivals ; there must be some weighty reason.

CHAMBERLAIN. Why should I not tell it, when it is generally known ? Have not your ladyships heard the scandal concerning Śakuntalā's rejection ?

BOTH. We have heard it from the mouth of the king's brother-in-law up to the point of the recovery of the ring.

CHAMBERLAIN. Then, I have a little to add. When at the sight of his own ring the king remembered that he had indeed secretly married the lady Śakuntalā, and had rejected her under a delusion, from that time the king was struck with remorse. Thus

> He abhors everything pleasurable ; he is not daily waited upon by his ministers as in former times ; spends sleepless nights in tossing about on the edge of his bed and when by courtesy he addresses suitable words to the ladies of his palace, he blunders in their names and becomes for a long while abashed with shame. (5)

SĀNUMATĪ. This is very pleasing to me.

कञ्चुकी—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

उभे—जुज्जइ। युज्यते।

( नेपथ्ये। )

एदु एदु भवं। एतु एतु भवान्।

कञ्चुकी—( कर्णं दत्त्वा। ) अये, इत एवाभिवर्तते देवः। स्वकर्मानुष्ठीयताम्।

उभे—तह। ( इति निष्क्रान्ते ) तथा।

( ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च। )

कञ्चुकी—( राजानमवलोक्य। ) अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम्। एवमुत्सुकोऽपि प्रियदर्शनो देवः। तथाहि।

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं
विभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः।
चिन्ताजागरणप्रताम्रनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते॥ ६॥

सानुमती—( राजानं दृष्ट्वा। ) ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स किदे सउन्दला किलम्मदि। स्थाने खलु प्रत्यादेशविमानिताप्यस्य कृते शकुन्तला क्लाम्यति

राजा—( ध्यानमन्दं परिक्रम्य )।

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम्।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम्॥ ७॥

CHAMBERLAIN. By reason of this deep mental derangement the festival has been forbidden.

BOTH. It is proper.

(*Behind the scenes*).

Let your Majesty come.

CHAMBERLAIN (*Listening*). Ah, his Majesty is coming here. Attend to your duties.

BOTH. All right. (*Exeunt.*)

(*Enter the king in a dress indicative of remorse; the Vidūṣaka and a portress.*)

CHAMBERLAIN (*Observing the king*). How charming are noble forms under all conditions! Thus his Majesty has a pleasing appearance even in his affliction. For

> Rejecting special modes of decoration, he wears but one golden bracelet fastened on the left fore-arm; his lip is faded by sighs; his eyes are very red from sleeplessness caused by thought (of Śakuntalā). Yet through the excellence of his own lustre, though he has grown emaciate he is scarcely observed to be so, even like a magnificent diamond ground away on the polishing-stone. (6)

SĀNUMATĪ (*Looking at the king*). No wonder Śakuntalā languishes for him even though he dishonoured her by his repudiation of her.

KING. (*Walking round slowly in meditation*).

> This my blighted heart which previously slept even when it was wakened from sleep by my fawn-eyed beloved is now broad awake to feel the anguish of remorse. (7)

सानुमती—णं ईदिसाणि तवस्सिणीए भाअहेआणि । नन्वीदृशानि तपस्विन्या भागधेयानि ।

विदूषकः—( अपवार्य । ) लङ्घिदो एसो भूओ वि सउन्दलावाहिणा । ण आणे कहं चिकिच्छिदव्वो भविस्सदि त्ति ।

कञ्चुकी—( उपगम्य । ) जयतु जयतु देवः । महाराज, प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि महाराजः ।

राजा—वेत्रवति, मद्वचनादमात्यमार्यपिशुनं ब्रूहि । चिरप्रबोधान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयतामिति ।

प्रतीहारी—जं देवो आणवेदि । ( इति निष्क्रान्ता । ) यद्देव आज्ञापयति ।

राजा—वातायन, त्वमपि स्वं नियोगमशून्यं कुरु ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

विदूषकः—किदं भवदा णिम्मच्छिअं । संपदं सिसिरातवच्छेअरमणीए इमस्सिं पमदवणुद्देसे अत्ताणं रमइस्ससि । कृतं भवता निर्मक्षिकम् । सांप्रतं शिशिरातपच्छेदरमणीयेऽस्मिन्प्रमदवनोद्देश आत्मानं रमयिष्यसि ।

राजा—वयस्य, रन्ध्रोपनिपतिनोऽनर्था इति यदुच्यते तदव्यभिचारि वचः । कुतः ।

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥ ८ ॥

विदूषकः—चिट्ठ दाव । इमिणा दण्डकट्ठेण कन्दप्पबाणं णासइस्सामि । ( इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति । ) तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयिष्यामि ।

SĀNUMATĪ. Such is also the fate of the poor girl.

VIDŪṢAKA (*Aside*). He is again seized by his Śakuntalā sickness ; and I hardly know a remedy for his illness.

CHAMBERLAIN (*Advancing*). Victory to your Majesty! The grounds of the pleasure-park have been inspected. Your Majesty may visit its pleasure-spots at will.

KING. Vetravati, tell the minister, the noble Piśuna, in my name, that owing to long sleeplessness, it was not possible for me to sit in the tribunal to-day. Whatever business of the citizens the worthy sir may have investigated, should be written down and dispatched to me.

PORTRESS. As your Majesty commands. (*Exit.*)

KING. And you, Vātāyana, attend to your business.

CHAMBERLAIN. As my king commands. (*Exit.*)

VIDŪṢAKA. You have not left a fly in this place. Now you will amuse yourself in this part of the pleasure-park which is cool and delightful by the mitigation of heat.

KING. Friend, the proverb 'Misfortunes rush through the weak spot' is an infallible one. For

> No sooner does the darkness that clouded the remembrance of my love for the sage's daughter, lift from my mind, than the God of Love, preparing to strike, puts the shaft of mango blossom to his bow. (8)

VIDŪṢAKA. Wait a bit, while I destroy Love's arrow with my stick. (*He raises his stick and desires to strike down the mango-shoot.*)

राजा—( सस्मितम् । ) भवतु । दृष्टं ब्रह्मवर्चसम् । सखे, क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ।

विदूषकः—णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा । माहवीमण्डवे इमं वेलं अदिवाहिस्सं । तहिं मे चित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउन्दलाए पडिकिर्दिं आणेहि त्ति । नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा । माधवीमण्डप इमां वेलामतिवाहयिष्ये । तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शाकुन्तलायाः प्रतिकृतिमानयेति ।

राजा—ईदृशं हृदयविनोदस्थानम् । तत्तमेव मार्गमादेशय ।

विदूषकः—इदो इदो भवं । इत इतो भवान् ।

( उभौ परिक्रामतः । सानुमत्यनुगच्छति । )

विदूषकः—एसो मणिसिलापट्टअसणाहो माहवीमण्डवो उवहाररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छदि । ता पविसिअ णिसीददु भवं । एष मणिशिलापट्टकसनाथो माधवीमण्डप उपहाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति । तत्प्रविश्य निषीदतु भवान् ।

( उभौ प्रवेशं कृत्वोपविष्टौ । )

सानुमती—लदासंस्सिदा देक्खिस्सं दाव सहीए पडिकिर्दिं । तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सं । ( इति तथा कृत्वा स्थिता । ) लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि ।

राजा—सखे, सर्वमिदानीं स्मरामि शाकुन्तलायाः प्रथमवृत्तान्तम् । कथितवानस्मि भवते च । स भवान्प्रत्यादेशवेलायां मत्समीपगतो नासीत् । पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम् ।

विदूषकः—ण विसुमरामि । किंतु सव्वं कहिअ अवसाणे उण तुए परिहासविअप्पओ एसो ण भूदत्थोत्ति आचक्खिदं । मए वि मिप्पिण्डबुद्धिणा तह एव्व गहीदं । अहवा भविदव्वदा

KING (*Smiling*). Enough ! I have seen a Brahmin's power. Now, friend, where shall I sit and recreate my sight with the slender shrubs which bear a faint resemblance to my beloved ?

VIDŪṢAKA. Well, have you not told Caturikā, your attendant, that you would be spending this hour in the Mādhavī bower, and that she should bring you there the picture of the lady Śakuntalā which you yourself painted on a tablet ?

KING. Will such a place divert me ? Well, lead the way to the same place.

VIDŪṢAKA. This way, your Majesty, this way.

(*Both walk round ; Sānumatī follows them.*)

VIDŪṢAKA. This Mādhavī bower furnished with a marble slab with its lovely flower-offerings appears to bid us welcome. Let your Honour enter and sit.

(*Both enter and seat themselves.*)

SĀNUMATĪ. Concealed behind the creepers I will just see the dear girl's picture. Then I shall be able to tell her how sincere her husband's love is.

(*Does so, and pauses.*)

KING. Friend, I now remember all the previous affair with Śakuntalā. And I have spoken to you (about it.) You, however, were not present near me at the time I disavowed her. Nor did you ever before mention her ladyship's name. Had you forgotten her even as I did ?

VIDŪṢAKA, No, I did not forget. But after telling the whole story, you said at the end that it was all a joke and that there was no truth in it. And I who

क्खु बलवदी । न विस्मरामि । किंतु सर्वं कथयित्वावसाने पुनस्त्वया परिहासविजल्प एष न भूतार्थ इत्याख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती ।

सानुमती—एव्वं णेदं । एवमेवैतत् ।

राजा—( ध्यात्वा । ) सखे, त्रायस्व माम् ।

विदूषकः—भो, किं एदं । अणुववण्णं क्खु ईदिसं तुइ । कदा वि सप्पुरिसा सोअपत्तप्पाणो ण होन्ति । णं पवादे वि णिक्कम्पा गिरीओ । भोः, किमेतत् । अनुपपन्नं खल्वीदृशं त्वयि । कदापि सत्पुरुषा शोकपात्रात्मानो न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः ।

राजा—वयस्य, निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ९ ॥

सानुमती—अम्महे । ईदिसी सकज्जपरदा । इमस्स संदावेण अहं रमामि । अहो । ईदृशी स्वकार्यपरता । अस्य संतापेनाहं रमे ।

विदूषकः—भो, अत्थि मे तक्को । केण वि तत्तहोदी आआससञ्चारिणा णीदेत्ति । भोः, अस्ति मे तर्कः । केनापि तत्रभवत्याकाशचारिणा नीतेति ।

राजा—कः पतिदेवतामन्यः परामर्ष्टुमुत्सहेत । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

सानुमती—संमोहो क्खु विम्हअणिज्जो ण पडिबोहो । संमोहः खलु विस्मयनीयो न प्रतिबोधः ।

विदूषकः—जइ एव्वं अत्थि क्खु समाअमो कालेण तत्तहोदीए । यद्येवमस्ति खलु समागमः कालेन तत्रभवत्या ।

have no more intelligence than a lump of clay believed it. Or rather fate is powerful.

SĀNUMATĪ. It is even so.

KING (*Meditating*). Friend, help me!

VIDŪṢAKA. Oh, what is it? This is indeed unbecoming in you. Never do great men give themselves up to grief; the mountains are calm even in a tempest.

KING. When I remember my beloved's condition who was greatly affected by my desertion I feel quite forlorn.

> When I rejected her from here, she made an attempt to follow her kinsfolk; and when her father's pupil, revered as her father himself, repeatedly cried "stay" in a loud voice, then once more she fixed on me, who had become inexorable, a glance bedimmed with gushing tears; (the idea of) it all burns me like an envenomed shaft. (9)

SĀNUMATĪ. Dear me! Such is one's regard for one's own interest that I delight in his pain.

VIDŪṢAKA. O I have a guess that her ladyship was carried away by some heavenly being.

KING. Who else would dare to touch rudely a wife to whom her husband is a divinity? I have heard that Menakā gave birth to your friend. And her companions have, I imagine, carried her away.

SĀNUMATĪ. His delusion is, to be wondered at, not the awakening from it.

VIDŪṢAKA. If that is so, you will meet her again after a time.

राजा—कथमिव।

विदूषकः—ण क्खु मादापिदरा भत्तुविओअदुक्खिदं दुहिदरं देक्खिदुं पारेन्ति। न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः।

राजा—वयस्य,

स्वप्नो नु माया नु मतिभ्रमो नु
क्लिष्टं नु तावत्फलमेव पुण्यम्।
असंनिवृत्त्यै तदतीतमेव
मनोरथा नाम तटप्रपाताः॥ १०॥

विदूषकः—मा एव्वं। णं अङ्गुलीअअं एव्व णिदंसणं अवस्सं-भावी अचिन्तणिज्जो समाअमो होदि त्ति। मैवम्। नन्वङ्गुलीयकमेव निदर्शनमवश्यंभाव्यचिन्तनीयः समागमो भवतीति।

राजा—(अङ्गुलीयकं विलोक्य।) अये, इदं तावदसुलभ-स्थानभ्रंशि शोचनीयम्।

तव सुचरितमङ्गुलीय नूनं
प्रतनु ममेव विभाव्यते फलेन।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु॥ ११॥

सानुमती—जइ अण्णहत्थगदं भवे सच्चं एव्व सोअणिज्जं भवे। यद्यन्यहस्तगतं भवेत्सत्यमेव शोचनीयं भवेत्।

विदूषकः—भो, इअं णाममुद्दा केण उग्घादेण तत्तहोदीए हत्थ-संसग्गं पाविदा। भोः, इयं नाममुद्रा केनोद्घातेन तत्रभवत्या हस्तसंसर्गं प्रापिता।

सानुमती—मम वि कोदूहलेण आआरिदो एसो। ममापि कौतू-हलेनाकारित एषः।

राजा—श्रूयताम्। स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह। कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति।

विदूषकः—तदो तदो। ततस्ततः।

KING. How so?

VIDŪṢAKA. No father and mother can (long) endure to see their daughter separated from her husband.

KING. Friend,

> Was it a dream? or an illusion? or the infatuation of my mind? Or was it that my merit having borne me that much fruit, was exhausted? It is gone, never to return: these my hopes are like falls from a precipice. (10)

VIDŪṢAKA. Do not speak thus. Is not the ring itself a proof that there may be an unexpected meeting with that which must necessarily happen?

KING. (*Looking at the ring*). This, indeed, which has fallen from a station hard to gain, deserves my pity.

> Verily, O ring, thy merit like mine is proved to be but slight from (thy) reward; since after finding a place on her lovely pink-nailed fingers thou hast suffered a fall. (11)

SĀNUMATĪ. Had it found a way to any other hand, its lot would have been truly deplorable.

VIDŪṢAKA. With what object was the ring placed in her ladyship's hand?

SĀNUMATĪ. He, too, seems to be impelled by the curiosity I feel.

KING. Listen: when I started for the capital, my darling wept and said: After how long will my lord send me news?

VIDŪṢAKA. Well, what then?

राजा—पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया, प्रत्यभिहिता।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम्।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥ १२ ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम्।

सानुमती—रमणीओ क्खु अवही विहिणा विसंवादिदो। रमणीयः खल्ववधिर्विधिना विसंवादितः।

विदूषकः—कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भन्तले आसि। कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत्।

राजा—शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टम्।

विदूषकः—जुज्जइ। युज्यते।

सानुमती—अदो एव्व तवस्सिणीए सउन्दलाए अधम्मभीरुणो इमस्स राएसिणो परिणए संदेहो आसि। अहवा ईदिसो अणुराओ अहिण्णाणं अवेक्खादि। कहं विअ एदं। अत एव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेह आसीत्। अथवेदृशोऽनुरागोऽभिज्ञानमपेक्षते। कथमिवैतत्।

राजा—उपालप्स्ये तावदिदमङ्गुलीयकम्।

विदूषकः—(आत्मगतम्।) गहीदो णेण पन्था उम्मत्तआणं। गृहीतोऽनेन पन्था उन्मत्तानाम्।

राजा—

कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि।

अथवा।

अचेतनं नाम गुणं न लक्षये-
न्मयैव कस्मादवधीरिता प्रिया ॥ १३ ॥

KING. Then, fixing this ring on her finger, I said :

> Count one by one every day the letters of my name on this (ring) ; as soon as you reach the end, my darling, the messenger who is to lead you to the entrance of the inner apartment, will come into your presence. (12)

And hard-hearted that I am, I failed to carry it out in my madness.

SĀNUMATĪ. A charming interval, indeed, which was, however, marred by fate.

VIDŪṢAKA. How did it get inside the maw of the carp cut up by the fisherman ?

KING. While your friend was worshipping Śacītīrtha, it must have slipped from her hand into the stream of the Ganges.

VIDŪṢAKA. It is explained.

SĀNUMATĪ. It was hence that the king, who is afraid of doing anything unrighteous, doubted his marriage with poor Śakuntalā. And yet such love does not require a token. How could it be ?

KING. Well, I will now reproach the ring.

VIDŪṢAKA (*To himself*). (So) he is (again) going the the way of madmen !

KING.

> How couldst thou leave that hand with its slender delicate fingers and fall into the water ? Or a lifeless thing may well not appreciate excellence. But how could I scorn my beloved ? (13)

**विदूषकः**—( आत्मगतम् । ) कहं बुभुक्खाए खादिदव्वो म्हि कथं बुभुक्षया खादितव्योऽस्मि ।

**राजा**—अकारणपरित्यक्ते अनुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

( प्रविश्यापटीक्षेपेण चित्रफलकहस्ता । )

**चतुरिका**—इअं चित्तगदा भट्टिणी । ( इति चित्रफलकं दर्शयति । ) इयं चित्रगता भट्टिनी ।

**विदूषकः**—साहु वअस्स, महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो । क्खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसु । साधु वयस्य, मधुरावस्थानदर्शनीयो भावानुप्रवेशः । स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु ।

**सानुमती**—अम्मो एसा राएसिणो णिउणदा । जाणे सही अग्गदो मे वट्टदि त्ति । अहो एषा राजर्षेनिपुणता । जाने सख्यग्रतो मे वर्तत इति ।

**राजा**—

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किंचिदन्वितम् ॥ १४ ॥

**सानुमती**—सरिसं एदं पच्छादावगुरुणो सिणेहस्स अणवलेवस्स अ । सदृशमेतत्पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च ।

**विदूषकः**—भो, दाणिं तिण्णि तत्थहोदीओ दीसन्ति । सव्वाओ अ दंसणीआओ । कदमा एत्थ तत्तहोदी सउन्दला । भोः, इदानीं तिस्त्रस्तत्रभवत्यो दृश्यन्ते । सर्वाश्च दर्शनीयाः । कतमात्र तत्रभवती शकुन्तला ।

**सानुमती**—अणभिण्णो क्खु ईदिसस्स रूवस्स मोहदिट्ठी अअं जणो । अनभिज्ञः खल्वीदृशस्य रूपस्य मोघदृष्टिरयं जनः ।

**राजा**—त्वं तावत्कतमां तर्कयसि ।

**विदूषकः**—तक्केमि जा एसा सिढिलकेसबन्धणुव्वन्तकुसुमेण केसन्तेण उब्भिण्णसेअबिन्दुणा वअणेण विसेसदो ओसरीआहिं बाहाहिं अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअवस्स पासे ईसिपरिस्सन्ता विअ आलिहिदा सा सउन्दला । इदराओ सहीओत्ति ।

VIDŪṢAKA (*To himself*). How ? must I be devoured by hunger ?

KING. O (My darling) abandoned without reason, let me, whose heart is stung with remorse, be once more blessed with a sight of thee ?

(*Entering with a toss of the curtain, tablet in hand*).

CATURIKĀ. Here is our lady in the picture. (*She shows the tablet.*)

VIDŪṢAKA. Excellent, my friend ! How beautifully are the feelings represented in this lovely posture ! mine eyes stumble as it were over its uneven parts.

SĀNUMATĪ. What great skill the virtuous king possesses ! My friend seems to stand before my eyes.

KING.

Whatever is not well executed in the picture may be (retouched and) improved; and yet (even then) her loveliness will be possessed by the picture in some measure only. (14)

SĀNUMATĪ. This is befitting an affection increased by remorse, and absence of conceit.

VIDŪṢAKA. There are to be seen three ladies now, and all are beautiful. Which one is the lady Śakuntalā ?

SĀNUMATĪ. What use are his eyes to this man who is ignorant of such beauty ?

KING. Which one do you think ?

VIDŪṢAKA. I think that she who is represented as if a little fatigued by the side of the mango-tree whose young leaves are glistening after her watering, with

तर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता सा शकुन्तला। इतरे सख्याविति।

राजा—निपुणो भवान्। अस्त्यत्र मे भावचिह्नम्।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः।
अश्रु च कपोलपतितं दृश्यमिदं वर्तिकोच्छ्वासात् ॥ १५ ॥

चतुरिके, अर्धलिखितमेतद्विनोदस्थानम्। गच्छ। वर्तिकां तावदानय।

चतुरिका—अज्ज माठव्व, अवलम्ब चित्तफलअं जाव आअच्छामि। आर्य माठव्य, अवलम्बस्व चित्रफलकं यावदागच्छामि।

राजा—अहमेवैतदवलम्बे। (इति यथोक्तं करोति।)

(निष्क्रान्ता चेटी।)

राजा—अहं हि

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ १६ ॥

विदूषकः—(आत्मगतम्।) एसो अत्तभवं णदिं अदिक्कमिअ मिअतिण्हिआं संकन्तो। (प्रकाशम्।) भो, अवरं किं एत्थ लिहिदव्वं। एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः। भोः, अपरं किमत्र लिखितव्यम्।

सानुमती—जो जो पदेसो सहीए मे अहिरूवो तं तं आलिहिदुकामो भवे। यो यः प्रदेशः सख्या मेऽभिरूपस्तं तमालिखितुकामो भवेत्।

राजा—श्रूयताम्।

arms drooping in a peculiar manner; with a face on which drops of perspiration have broken out; with locks of her hair the flowers of which have dropped down from the loosened braid; that is Śakuntalā. The others are her friends.

KING. You are clever. Here are proofs of my love.

At the edges of the drawing is seen the soiled impression of my perspiring fingers; and here is to be observed this tear that fell from my cheek from the swelling of the paint. (15)

CATURIKĀ, this source of my consolation is but half finished. Therefore, go, get me a brush.

CATURIKĀ. Worthy Māṭhavya, hold the picture-tablet till I get back.

KING. I will myself hold it. (*Does as said.*)

(*Exit maid.*)

KING. I, now,

Having first rejected my darling who had approached me in person, and now again and again doing homage to her drawn in this picture, have become, O friend, possessed of a longing for the mirage, after passing by a river on my way having plenty of water. (16)

VIDŪṢAKA (*To himself*). Here is his honour, having passed by a river, gone to a mirage. (*Aloud*). Oh what else is to be painted here?

SĀNUMATĪ. He may be desirous of painting every spot that the dear girl loved.

KING. Listen –

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १७ ॥

विदूषकः—( आत्मगतम् । ) जह अहं देक्खामि पूरिदव्वं णेण चित्तफलअं लम्बकुच्चाणं तावसाणं कदम्बेहिं । यथाहं पश्यामि पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः ।

राजा—वयस्य, अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं विस्मृतमस्माभिः ।

विदूषकः—किं विअ । किमिव ।

सानुमती—वणवासस्स सो उमारस्स अ जं सरिसं भविस्सदि । वनवासस्य सौकुमार्यस्य च यत्सदृशं भविष्यति ।

राजा—

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ १८ ॥

विदूषकः—भो, किं णु तत्तहोदी रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं आवारिअ चइदचइदा विअ ठिआ । ( सावधानं निरूप्य दृष्ट्वा । ) आ, एसो दासीए पुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणं अहिलङ्घदि महुअरो । भोः, किं नु तत्रभवती रक्तकुवलयपल्लवशोभिनाग्रहस्तेन मुखमावार्य चकितचकितेव स्थिता । आः, एष दास्याः पुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनमभिलङ्घति मधुकरः ।

राजा—ननु वार्यतामेष धृष्टः ।

The stream of Mālinī ought to be drawn with a pair of swans resting on its sands; and on both its sides must appear the sacred hills at the base of the Himālayan ranges, where the deer are squatting; and I wish to draw, underneath a tree that bears some bark-garments suspended from its boughs, a doe that rubs her left eye on the horn of a black antelope. (17)

VIDŪṢAKA (*To himself*). As I imagine, he will fill up the picture with multitudes of long-bearded hermits.

KING. Friend, I have forgotten to draw another of Śakuntalā's ornament which I had intended to draw.

VIDŪṢAKA. What is it?

SĀNUMATĪ. Such as becomes her forest life and her delicacy.

KING.

A Śirīṣa-flower with its stalk fastened over her ear, and its filaments waving over her cheek, has been omitted, O friend; nor has a necklace of lotus fibres, soft like the rays of the moon of autumn, been drawn between her breasts. (18)

VIDŪṢAKA. But why does the lady stand, as if she is very much frightened, covering her face with the palm of her hand glowing like the petal of a red-lotus? (*Looking closely*). Ah! Here is this bee, this son of a slave, this thief who robs the flowers of their honey, attacking her ladyship's face.

KING. Drive off this impudent (bee).

विदूषकः—भवं एव्व अविणीदाणं सासिदा इमस्स वारणे पहु-विस्सदि। भवानेवाविनीतानां शासितास्य वारणे प्रभविष्यति।

राजा—युज्यते। अयि भोः, कुसुमलताप्रियातिथे, किमत्र परि-पतनखेदमनुभवसि।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति॥ १९॥

सानुमती—अज्ज अभिजादं क्खु एसो वारिदो। अथाभिजातं खल्वेष वारितः।

विदूषकः—पडिसिद्धा वि वामा एसा जादी। प्रतिषिद्धापि वामैषा जातिः।

राजा—एवं भोः, न मे शासने तिष्ठसि। श्रूयतां तर्हि संप्रति।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु।
बिम्बाधरं स्पृशसि चेद्भ्रमरप्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम्॥ २०॥

विदूषकः—एव्वं तिक्खदण्डस्स किं ण भाइस्सदि। (प्रहस्य। आत्मगतम्।) एदो दाव उम्मत्तो। अहं पि एदस्स सङ्गेण ईदिस-वण्णो विअ संवुत्तो। (प्रकाशम्।) भो, चित्तं क्खु एदं। एवं तीक्ष्णदण्डस्य किं न भेष्यति। एष तावदुन्मत्तः। अहमप्येतस्य सङ्गेनेदृशवर्ण इव संवृत्तः। भोः, चित्रं खल्वेतत्।

राजा—कथं चित्रम्।

सानुमती—अहं पि दाणिं अणवगदत्था, किं उण जहालि-हिदाणुभावी एसो। अहमपीदानीमनवगतार्था, किं पुनर्यथालिखितानुभाव्येषः।

राजा—वयस्य, किमिदमनुष्ठितं पौरोभाग्यम्।

VIDŪṢAKA. Your honour alone, that punishes all offenders, has the power to drive him off.

KING. True. O welcome guest of flowering-plants, why undergo the trouble of hovering round here?

> There, perched on a flower, is the female bee who loves thee, and though athirst, is waiting for thee still, nor without thee will she taste its honey. (19)

SĀNUMATĪ. For once now is he kept off quite in a courteous manner.

VIDŪṢAKA. This kind is perverse, however it may be warned off.

KING. Thus, then, thou wilt not obey my command. Well then listen;

> Shouldst thou touch, O bee, the bimba-lip of my darling, sweet as a virgin leaf on a tree, the lip from which I drank delight in love-feasts, then I will make thee imprisoned in the hollow of a lotus. (20)

VIDŪṢAKA. How should he not be afraid of one who gives so severe a punishment? (*Laughing, to himself*). As for him, he is quite crazy, and I too am just as bad, from keeping him company! (*Aloud*). O, it is only a picture.

KING. How? A picture?

SĀNUMATĪ. I, too, did not realise the fact; how much less he who is experiencing what he has painted!

KING. Friend, why have you done such a wicked thing?

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २१ ॥

( इति बाष्पं विहरति । )

सानुमती—पुव्वावरविरोही अपुव्वो एसो विरहमग्गो । पूर्वापरविरोध्यपूर्व एष विरहमार्गः ।

राजा—वयस्य, कथमेवमविश्रान्तदुःखमनुभवामि ।

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२ ॥

सानुमती—सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउन्दलाए । सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ।

( प्रविश्य । )

चतुरिका—जेदु जेदु भट्टा । वट्टिआकरण्डअं गेण्हिअ इदोमुहं पत्थिदम्हि । जयतु जयतु भर्ता । वर्तिकाकरण्डकं गृहीत्वेतोमुखं प्रस्थितास्मि ।

राजा—किं च ।

चतुरिका—सो मे हत्थादो अन्तरा तरलिआदुदीआए देवीए वसुमदीए अहं अज्जउत्तस्स उवणइस्सं त्ति सबलक्कारं गहीदो । स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्याहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः ।

विदूषकः—दिट्ठिआ तुमं मुक्का । दिष्ट्या त्वं मुक्ता ।

चतुरिका—जाव देवीए विडवलग्गं उत्तरीअं तरलिआ मोएदि ताव मए णिव्वाहिदो अत्ता । यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा ।

> While I was enjoying the rapture of beholding her as if she stood before my eyes, with my heart completely wrapped up in her, you have, by reviving my memory, again transformed my darling into a picture. (21).

(*Sheds tears.*)

SĀNUMATĪ. Quite without a precedent is this way of (one in a state of) separation, involving as it does an inconsistency between what preceded and what followed.

KING. Friend, why do I thus experience unremitting grief?

> Union with her is prevented by my sleeplessness; and my tears will not suffer me to view her even in this picture. (22).

SĀNUMATĪ. You have completely atoned for the pain you caused Śakuntalā by repudiating her.

(*Entering*) CATURIKĀ. Victory victory, to your Majesty! I had started in this direction with the box of paint-brushes——

KING. Well?

CATURIKĀ. When on the way it was forcibly snatched from my hand by queen Vasumatī who was accompanied by Taralikā; (the queen) saying "I will take it to my lord myself."

VIDŪṢAKA. Fortunately you were let off.

CATURIKĀ. While Taralikā was disengaging the queen's upper garment which had been caught by the branch of a shrub, I took myself off.

राजा—वयस्य, उपस्थिता देवी बहुमानगर्विता च भवानिमां प्रतिकृतिं रक्षतु ।

विदूषकः—अत्ताणं त्ति भणाहि । ( चित्रफलकमादायोत्थाय च । ) जइ भवं अन्तेउरकालकूडादो मुञ्चीअदि तदो मं मेहप्पडिच्छन्दे पासादे सद्दावेहि । ( इति द्रुतपदं निष्क्रान्तः । ) आत्मानमिति भण । यदि भवानन्तःपुरकालकूटान्मोक्ष्यते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दापय ।

सानुमती—अण्णसंकन्तहिअओ वि पढमसंभावणं अवेक्खदि । सिढिलसोहदो दाणिं एसो । अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते । शिथिलसौहार्द इदानीमेषः ।

( प्रविश्य पत्रहस्ता । )

प्रतीहारी—जेदु जेदु देवो । जयतु जयतु देवः ।

राजा—वेत्रवति, न खल्वन्तरा दृष्टा त्वया देवी ।

प्रतीहारी—अह इं । पत्तहत्थं मं देक्खिअ पडिणिउत्ता । अथ किम् । पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता ।

राजा—कार्यज्ञा कार्योपरोधं मे परिहरति ।

प्रतीहारी—देव, अमच्चो विण्णवेदि । अत्थजादस्स गणणाबहुलदाए एक्कं एव्व पोरकज्जं अवेक्खिदं तं देवो पत्तारूढं पच्चक्खीकरेदु त्ति । देव, अमात्यो विज्ञापयति । अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितं तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति ।

राजा—इतः पत्रिकां दर्शय ।

( प्रतीहार्युपनयति । )

राजा—( अनुवाच्य । ) कथम् । समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राज-

KING. Friend, the queen is come, and she is rendered arrogant by (my) great attentions to her. Do you take care of this picture.

VIDŪṢAKA. Say "yourself." (*Taking the picture-board and rising*). If your honour is freed from the bane of the inner apartments then call me in the Meghapraticchanda palace.

(*Goes out with hurried steps.*)

SĀNUMATĪ. Although his heart is transferred to another he yet cares for his first love. His love has very much lost its ardour now.

(*Entering, letter in hand*) PORTRESS. Victory to your Majesty.

KING. Vetravati, did not you meet the queen on the way ?

PORTRESS. Yes, I did. But she turned back when she saw me carrying a letter in my hand.

KING. She knows (the importance of state) business, and avoids interrupting my duty.

PORTRESS. Your Majesty, the minister requests : On account of the heavy work of counting the various items of revenue, only one citizen's suit has been attended to ; let your Majesty consider the same which is committed to writing.

KING. Give me the letter.

(*The portress brings it.*)

KING. (*Reading*). How ! The merchant Dhanamitra who had (extensive) commerce at sea had been lost in a

गामी तस्यार्थसंचय इत्येतदमात्येन लिखितम् । ( सविषादम् । ) कष्टं खल्वनपत्यता । बहुधनत्वाद्बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात् ।

प्रतीहारी—देव, दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणिअदि । देव, इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायास्य श्रूयते ।

राजा—ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ एवममात्यं ब्रूहि ।

प्रतीहारी—जं देवो आणवेदि । ( इति प्रस्थिता ) यद्देव आज्ञापयति ।

राजा—एहि तावत् ।

प्रतीहारी—इअम्हि । इयमस्मि ।

राजा—किमनेन संततिरस्ति नास्तीति ।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २३ ॥

प्रतीहारी—एव्वं णाम घोसइदव्वं । ( निष्क्रम्य । पुनः प्रविश्य । ) काले पवुट्ठं विअ अहिणन्दिदं देवस्स सासणम् । एवं नाम घोषयितव्यम् । काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम् ।

राजा—( दीर्घमुष्णं च निःश्वस्य । ) एवं भोः संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंशश्रियः एष वृत्तान्तः ।

shipwreck. And they say that the poor man had no child. All his accumulated wealth reverts to the king; thus the minister writes. (*Sorrowfully*). It is indeed dreadful to be childless. He had great riches, he must have wedded several wives; let an inquiry be made whether any one among his wives is with child.

PORTRESS. Your Majesty, it is reported that his wife, the daughter of a merchant from Sāketa, has even now gone through the Puṁsavana ceremony.

KING. Surely the child in the womb has a title to its father's property. Go, say so to the minister.

PORTRESS. As your Majesty commands.

(*Starts to leave.*)

KING. Come for a while.

PORTRESS. I am here.

KING. What does it matter whether he has or has not left offspring?

> Let it be proclaimed that whatever dearly loved kinsman any one of my subjects may lose, Duṣyanta will supply the place of that kinsman to them, the wicked excepted. (23)

PORTRESS. Thus surely it shall be proclaimed (*Going out and returning*). The royal decree was welcomed (by the people) like a timely shower.

KING. (*Heaving a deep and hot sigh*). O, thus it is that the wealth of families which are bereft of support through the failure of progeny passes on the death of the representative of the progenitor, to a stranger. When I die, such will be the fate of the wealth of Puru's line.

प्रतीहारी—पडिहदं अमङ्गलम् । प्रतिहतममङ्गलम् ।

राजा—धिङ्मामुपस्थितश्रेयोऽवमानिनम् ।

सानुमती—असंसअं सहिं एव्व हिअए करिअ णिन्दिदो णेण अप्पा । असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ।

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुंधरा काल इवोप्तबीजा ॥ २४ ॥

सानुमती—अपरिच्छिण्णा दाणिं दे संददी भविस्सदि । अपरिच्छिन्नेदानीं ते संततिर्भविष्यति ।

चतुरिका—( जनान्तिकम् । ) अए इमिणा सत्थवाहवुत्तन्तेण दिउणुव्वेओ भट्टा । णं अस्सासिदुं मेहप्पडिच्छन्दादो अज्जं माढव्वं गेण्हिअ आअच्छ । अयि, अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यं माठव्यं गृहीत्वागच्छ ।

प्रतीहारी—सुट्ठु भणासि । ( इति निष्क्रान्ता । ) सुष्ठु भणसि ।

राजा—अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः ।

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २५ ॥

( इति मोहमुपगतः । )

चतुरिका—( ससंभ्रममवलोक्य । ) समस्ससदु भट्टा । समाश्वसितु भर्ता

PORTRESS. Heaven avert the calamity !

KING. Fie on me who despised the happiness that had offered itself.

SĀNUMATĪ. Surely he has the dear girl in mind when he thus reproaches himself.

KING.

> Verily my lawful wife, the glory of my family was forsaken by me, although my own self was implanted (in her) like the earth sown with seed at the right season, when she promises the richest fruit. (24)

SĀNUMATĪ. Now your line will never be interrupted.

CATURIKĀ (*Aside*). The merchant's story has doubled our lord's remorse. Go to the Meghapraticchanda palace and fetch the noble Māṭhavya to comfort him.

PORTRESS. A good idea. (*Exit.*)

KING. Ah me ! Duṣyanta's ancestors, who claim a share in the funeral offering, are brought to a critical situation. For,

> Thinking " who indeed after this (man) in our family will offer us the libations prepared according to scriptural precept ? " my ancestors verily drink such of the water offered by me, who am destitute of progeny, as remains to them after washing their tears. (25)

(*Faints.*)

CATURIKĀ (*Looking about in haste*). Take heart, my lord.

सानुमती—हद्धी हद्धी। सदि क्खु दीवे ववधाणदोसेण एसो अन्धआरदोसं अणुहोदि। अहं दाणिं एव्व णिव्वुदं करोमि। अहवा सुदं मए सउन्दलं समस्सासअन्तीए महेन्दजणणीए मुहादो जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्सन्ति जह अइरेण धम्मपदिणिं भट्टा अहिणन्दिस्सदित्ति। ता जुत्तं एदं कालं पडिपालिदुं। जाव इमिणा वुत्तन्तेण पिअसहिं समस्सासेमि। (इत्युद्भ्रान्तकेन निष्क्रान्ता।) हा धिक् हा धिक्। सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारदोषमनुभवति। अहमिदानीमेव निर्वृत्तं करोमि। अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखाद्यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाऽचिरेण धर्मपत्नीं भर्ताभिनन्दिष्यतीति। तद्युक्तमेतं कालं प्रतिपालयितुम्। यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि।

(नेपथ्ये।)

अब्बम्हण्णं अब्बम्हण्णं। अब्रह्मण्यम्, अब्रह्मण्यम्।

राजा—(प्रत्यागतप्राणः कर्णं दत्त्वा।) अये, माठव्यस्येवार्तस्वरः। कः कोऽत्र भोः।

(प्रविश्य।)

प्रतीहारी—(ससंभ्रमम्।) परित्ताअदु देवो संसअगदं वअस्सं। परित्रायतां देवः संशयगतं वयस्यम्।

राजा—केनात्तगन्धो माणवकः।

प्रतीहारी—अदिट्ठरूवेण केण वि सत्तेण अदिक्कमिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोविदो। अदृष्टरूपेण केनापि सत्त्वेनातिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः।

राजा—(उत्थाय।) मा तावत्। ममापि सत्त्वैरभिभूयन्ते गृहाः। अथवा।

अहन्यहन्यात्मन एव ताव-
ज्ज्ञातुं प्रमादस्खलितं न शक्यम्।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतो वेदितुमस्ति शक्तिः॥ २६॥

(नेपथ्ये।)

भो वअस्स, अविहा अविहा। भो वयस्य, अविहा अविहा।

SĀNUMATĪ. Alas, alas! Though the light is there he is suffering the evil effects of darkness by reason of the intervening screen. I can make him happy even now. But I have heard from the mouth of the mother of the great Indra as she was consoling Śakuntalā, that the Gods themselves, longing for their portions of the sacrifice, will so devise it that before long the husband will welcome his true wife. It is, therefore, proper to wait for this period. In the meanwhile, I will comfort the dear girl with the news. (*Exit by flying through the sky.*)

(*Behind the scenes*)

Help, help!

KING (*Coming to himself and listening*). Ah, that sounds like the distressed cry of Māṭhavya. Who is there, ho!

(*Entering*) PORTRESS (*Confusedly*). Let your Majesty save your friend who is fallen into danger.

KING. Who has humbled Māṇavaka?

PORTRESS. Some invisible spirit, who having overpowered him took him to the top-most floor of the Meghapraticchanda palace.

KING. (*Rising*). This must not be. How, even my house is infested by evil spirits! Or,

> Even when the mischiefs occasioned by one's own negligence from day to day are scarcely known, how then can one have the power to know fully what path each of my subjects is treading? (26)

(*Behind the scenes.*)

O friend, alas! alas!

राजा—( गतिभेदेन परिक्रामन् । ) सखे, न भेतव्यं न भेतव्यम् ।

( नेपथ्ये । )

( पुनस्तदेव पठित्वा । ) कहं ण भाइस्सं । एस मं को वि पच्छावणदसिरोहरं इक्खुं विअ तिण्हभङ्गं करेदि । कथं न भेष्यामि । एष मां कोऽपि पश्चादवनतशिरोधरमिक्षुमिव त्रिभङ्गं करोति ।

राजा—( सदृष्टिक्षेपम् । ) धनुस्तावत् ।

( प्रविश्य शार्ङ्गहस्ता । )

यवनी—भट्टा, एदं हत्थावावसहिदं सरासणं । भर्तः, एतद्धस्तावापसहितं शरासनम् ।

( राजा सशरं धनुरादत्ते । )

( नेपथ्ये । )

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥ २७ ॥

राजा—( सरोषम् । ) कथं मामेवोद्दिशति । तिष्ठ कुणपाशन, त्वमिदानीं न भविष्यसि । ( शार्ङ्गमारोप्य । ) वेत्रवति, सोपानमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो । इत इतो देवः ।

( सर्वे सत्वरमुपसर्पन्ति । )

राजा—( समन्ताद्विलोक्य । ) शून्यं खल्विदम् ।

( नेपथ्ये । )

अविहा अविहा । अहं अत्तभवन्तं पेक्खामि । तुमं मं ण पेक्खसि । बिडालग्गहीदो मूसओ विअ णिरासो म्हि जीविदे संवुत्तो । अविहा अविहा । अहमत्रभवन्तं पश्यामि । त्वं मां न पश्यसि । बिडालगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः ।

राजा—भोस्तिरस्करिणीगर्वित, मदीयं शस्त्रं त्वां द्रक्ष्यति । एष तमिषुं संदधे,

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षति च द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ २८ ॥

KING. (*Moving round with an altered gait*). Fear not, my friend, fear not. (*Behind the scenes.*)

(*After repeating the same*). Fear not? There is some one trying to break me into pieces violently like a sugarcane having bent back my neck.

KING. (*Looking about*). Hola! my bow—

(*Entering, bow is hand*) YAVANI. My lord, here is the bow with the arm-guard.

(*The King takes the bow and arrows.*)

(*Behind the scenes*) Now, thirsting for the fresh blood from the neck, I will slay thee struggling as a tiger (slays) a beast. Let Duṣyanta now, who takes his bow to remove the fear of the oppressed, be thy protector. (27)

KING. (*Angrily*). How, he even refers to me! Stay, carrion-eater; you shall die now. (*Stringing his bow*). Vetravati, show the way to the stairs.

PORTRESS. This way, this way, your Majesty.

(*All advance in haste.*)

KING (*Looking around*). There is, indeed, no one here.

(*Behind the scenes.*)

Alas! Alas! I see your honour, but you see me not. I despair of my life like a mouse caught by a cat.

KING. You, who pride yourself on your power which renders you invisible, my weapon will see you; here I will fix an arrow,

Which will slay you that deserve death and save the Brahmin who deserves to be saved. The swan drinks up the milk and leaves the water which has been mingled with it. (28)

( इत्यस्त्रं संधत्ते । )

( ततः प्रविशति विदूषकमुत्सृज्य मातलिः । )

मातलिः—

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥ २९ ॥

राजा—( अस्त्रमुपसंहरन् । ) अये मातलिः । स्वागतं महेन्द्र-सारथये ।

( प्रविश्य । )

विदूषकः—अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणन्दीअदि । अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते ।

मातलिः—( सस्मितम् । ) आयुष्मन्, श्रूयतां यदस्मि हरिणा भवत्सकाशं प्रेषितः ।

राजा—अवहितोऽस्मि ।

मातलिः—अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

राजा—अस्ति । श्रुतपूर्वं मया नारदात् ।

मातलिः—

सख्युस्ते स किल शतक्रतोरजय्य-
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ ३० ॥

स भवानात्तशस्त्र एव इदानीं तमैन्द्ररथमारुह्य विजयाय प्रतिष्ठ-ताम् ।

राजा—अनुगृहीतोऽहमनया मघवतः संभावनया । अथ माढव्यं प्रति भवता किमेवं प्रत्युक्तम् ।

*(Aims his arrow.)*

*(Then enter Mātali leaving the Vidūṣaka.)*

MĀTALI.

The demons are made by Indra thy mark; against them let thy bow be drawn. The good cast not cruel shafts, but eyes soft with kindness on their friends. (29)

KING. *(Withdrawing his arrow)*. Ah, Mātali! Welcome to the charioteer of the great Indra.

*(Entering)* VIDŪṢAKA. What, he by whom I was being butchered like a sacrificial animal, is greeted by him with a welcome!

MĀTALI *(Smiling)*. Hear, long-lived one, on what errand I am dispatched to you by Indra.

KING. I am attentive.

MĀTALI. There is a host of demons, called Durjaya—the brood of Kālanemi.

KING. Yes; I have heard so from Nārada.

MĀTALI. Thy friend Indra, it is said, is unable to quell them; but that thou wouldst smite them in the front of battle. That nocturnal darkness, which the Sun is not able to dispel, is scattered by the Moon. (30)

Therefore, grasping thy weapon thus, mount the car of Indra, and set forth for victory.

KING. I am grateful for the honour which Indra shows me. But why did you act thus towards Māṭhavya?

मातलिः—तदपि कथ्यते । किंचिन्निमित्तादपि मनःसंतापादा-युष्मान्मया विक्लवो दृष्टः । पश्चात्कोपयितुमायुष्मन्तं तथा कृतवा-नस्मि । कुतः ।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते हि जनः ॥ ३१ ॥

राजा—( जनान्तिकम् । ) वयस्य, अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत्परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः ॥ ३२ ॥

इति ।

विदूषकः—जं भवं आणवेदि । ( इति निष्क्रान्तः । ) यद्भवानाज्ञा-पयति ।

मातलिः—आयुष्मान्रथमारोहतु ।

( राजा रथाधिरोहणं नाटयति । )

( इति निष्क्रान्ताः सर्वे । )

षष्ठोऽङ्कः ।

MĀTALI. I will tell that. I perceived that by some inner sorrow caused by one thing or another, the long-lived one was distressed. Thereafter I acted thus to provoke the wrath of the long-lived one. For

> The fire blazes when the fuel is stirred ; the serpent, when provoked, expands its hood ; for a man generally regains his proper greatness, under some provocation. (31)

KING. (*Aside*). Friend, inviolable is the command of heaven's lord. So acquaint the minister Piśuna with the matter and tell him in my name—

> Let thy wisdom alone secure my people from harm, (while) this braced bow has a different employment. (32)

VIDŪṢAKA. As your Honour commands. (*Exit.*)

MĀTALI. Let the long-lived one mount the chariot. (*The king acts mounting the chariot.*)

*Exeunt Omnes*

End of Act VI

## सप्तमोऽङ्कः ।

( ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च । )

राजा—मातले, अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

मातलिः—( सस्मितम् । ) आयुष्मन्, उभयमप्यपरितोषं समर्थये ।

प्रथमोपकृतं मरुत्वतः
प्रतिपत्त्या लघु मन्यते भवान् ।
गणयत्यवदानविस्मितो
भवतः सोऽपि न सत्क्रियागुणान् ॥ १ ॥

राजा—मातले, मा, मैवम् । स खलु मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः । मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥ २ ॥

मातलिः—किमिव नामायुष्मानमरेश्वराद्नार्हति । पश्य ।

## ACT VII

(*Then enter king seated in a chariot that flies through the air, and Mātali.*)

KING. Mātali, although I have executed the mission which Indra gave me, yet considering the special welcome he accorded me, I think myself to have been of very little service to him.

MĀTALI (*Smiling*). Long-lived one, I think neither of you is satisfied.

> Your Highness considers the prior benefit (conferred by you) on Indra as trifling (in comparison) with the honour (done by him to you); while he reckons as of little account the special honours (bestowed) on your Highness, being filled with wonder at your heroic achievement. (1)

KING. Mātali, no, say not so; for the honour done me at parting surpassed my warmest expectations. For making me sit on half of his throne before the eyes of the gods,

> And smiling to see Jayanta, who stood near him, filled with an inward longing (for the same honour), a wreath of Mandāra flowers, marked with the yellow-sandal from its rubbing on his breast, was by Indra placed about my neck. (2)

MĀTALI. But what does not the long-lived one deserve from the king of the gods? See

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥

राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किंवाभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

मातलिः—सदृशमेवैतत् । ( स्तोकमन्तरमतीत्य । ) आयुष्मन्, इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु ।
विचिन्त्य गीतक्षममर्थजातं
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

राजा—मातले, असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितः स्वर्गमार्गः । कतरस्मिन्मरुतां पथि वर्तामहे ।

मातलिः—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।

The heaven of ease-loving Indra has been made free from the thorns of Danu's race by two (means) : now by your smooth-jointed shafts, and formerly by the claws of the man-lion. (3)

KING. In the present case, really, the greatness of Indra alone deserves praise.

That servants succeed even in great enterprises—know that to be the effect of the honour shown to them by their masters. Could Aruṇa dispel the shades of night if the thousand-rayed one had not placed him in front (of his chariot ?) (4)

MĀTALI. That is quite worthy (of you). (*Going a little distance*). Long-lived one, see the full exaltation of your glory, which (now) rides on the back of heaven !

With the residue of colours used by nymphs of heaven to adorn their persons, these dwellers of heaven are writing your exploits on vestments of the heavenly trees, thinking out verses suitable for singing. (5)

KING. Mātali, In my eagerness for battle with the demons, I did not observe the way to heaven, while ascending the sky the other day. In what path of the winds are we now journeying ?

MĀTALI.

They call this the way of the wind Parivaha, which is freed from all darkness by being the second step of Viṣṇu, and which bears the

तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

राजा—मातले, अतः खलु सबाह्यान्तःकरणो ममान्तरात्मा प्रसीदति । ( रथाङ्गमवलोक्य । ) मेघपदवीमवतीर्णौ स्वः ।

मातलिः—कथमवगम्यते ।

राजा—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते सीकरक्लिन्ननेमिः ॥ ७ ॥

मातलिः—क्षणादायुष्मान्स्वाधिकारभूमौ वर्तिष्यते ।

राजा—( अधोऽवलोक्य । ) वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः । तथाहि ।

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
संतानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ८ ॥

मातलिः—साधु दृष्टम् । ( सबहुमानमवलोक्य । ) अहो, उदाररमणीया पृथिवी ।

triple-streamed river flowing through the sky, and causes the luminaries to roll in a circle diffusing their beams. (6)

KING. Mātali, that is why my inner self, with the internal and external senses, feels a pleasurable repose. (*Looking at the wheel of the chariot*). We have descended to the region of the clouds.

MĀTALI. How is that perceived?

KING.

This your chariot, with the rims of its wheels bedewed with spray indicates by the Cātakas flying through the interstices of its spokes, and by the horses lapped in lightning-flashes that we are now moving over clouds pregnant with showers. (7)

MĀTALI. In a moment, the long-lived one will be in the land under his rule.

KING. (*Looking down*). Through our quick descent, the world of men appears a wonderful sight. For

The earth appears to descend from the summits of mountains that emerge upwards; the trees no longer appear to be enveloped in their foliage, as their trunks heave in sight; the rivers whose waters were lost to view from their narrowness become visible from the expansion (of their waters). Behold the earth is being brought near me as if by some one throwing it upwards. (8)

MĀTALI. Well-observed. (*Looking with reverence*). How grand, how noble is the earth!

राजा—मातले, कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिस्यन्दी सांध्य इव मेघपरिघः सानुमानालोक्यते।

मातलिः—आयुष्मन्, एष खलु हेमकूटो नाम किंपुरुषपर्वतस्तपःसंसिद्धिक्षेत्रम्। पश्य।

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः।
सुरासुरगुरुः सोऽत्र सपत्नीकस्तपस्यति ॥ ९ ॥

राजा—तेन ह्यनतिक्रमणीयानि श्रेयांसि। प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि।

मातलिः—प्रथमः कल्पः।

( नाट्येनावतीर्णौ। )

राजा—( सविस्मयम्। )

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः।
अभूतलस्पर्शतया निरुद्धत-
स्तवावतीर्णोऽपि रथो न लक्ष्यते ॥ १० ॥

मातलिः—एतावानेव शतक्रतोरायुष्मतश्च विशेषः।

राजा—मातले, कतमस्मिन्प्रदेशे मारीचाश्रमः।

मातलिः—( हस्तेन दर्शयति। )

वल्मीकार्धनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः।

KING. Mātali, what mountain is seen yonder, that dives into the eastern and western sea, dripping with liquid gold, like a bank of evening cloud?

MĀTALI. Long-lived one, this is the mountain Hema-Kūṭa of the Kiṁpuruṣas—a place where the powers of penance are fully attained. See,

That Prajāpati who sprang from Mārīci, the son of the self-existent, father of the gods and demons, practises penance here along with his wife. (9)

KING. Well then (opportunities for obtaining) blessings must not be neglected. It is my desire to proceed after walking humbly round the holy sage.

MĀTALI. An excellent idea.

(*Gesticulate descending.*)

KING. (*Wonderingly*).

The rims of the chariot-wheels produce no sound; nor does dust appear to be raised; and the chariot, as you rein-in (the steeds), is scarcely marked to have descended to the earth, when it has really done so, on account of its not touching the surface of the earth. (10)

MĀTALI. That is all the difference between Indra and the long-lived one.

KING. Mātali, where is the holy retreat of Mārīca?

MĀTALI (*Pointing with his hand*).

There where stands yonder sage, facing the Sun's orb, inmovable as a pollard half buried in an ant-hill, with his breast closely encircled by the

अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ११ ॥

राजा—नमस्ते कष्टतपसे ।

मातलिः—( संयतप्रग्रहं रथं कृत्वा । ) महाराज, एतावदितिपरिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

राजा—स्वर्गादधिकतरं निर्वृतिस्थानम् । अमृतह्रदमिवावगाढोऽस्मि ।

मातलिः—( रथं स्थापयित्वा । ) अवतरत्वायुष्मान् ।

राजा—( अवतीर्य । ) मातले, भवान्कथमिदानीम् ।

मातलिः—संयन्त्रितो मया रथः । वयमप्यवतरामः । ( तथा कृत्वा । ) इत आयुष्मन् । ( परिक्रम्य । ) दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः ।

राजा—ननु विस्मयादवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ १२ ॥

मातलिः—उत्सर्पिणी खलु महतां प्रार्थना । ( परिक्रम्य आकाशे । ) अये वृद्धशाकल्य, किमनुतिष्ठति भगवान्मारीचः । किं

slough of a serpent ; his neck is heavily squeezed by a coil of the tendrils of old creepers ; and he has a mass of matted hair that covers his shoulders and is filled with the nests of birds. (11)

KING. Bow to thee of such austere devotion.

MĀTALI (*Drawing in the reins of the chariot*). O king, here now we have entered the sanctuary of the Prajāpati, in which the Mandāra-trees are reared by Aditi.

KING. It is place more delightful than heaven ; I seem plunged in a pool of nectar.

MĀTALI (*Stopping the chariot*). Let the long-lived one descend.

KING. (*Descending*). But what of you, now Mātali ?

MĀTALI. I have stopped the chariot. I too will alight. (*Doing so*). This way, long-lived one. (*Walking round*). Behold the holy retreat of the revered sage.

KING. Indeed I am looking on with amazement.

Here in this forest of Kalpa-trees, they draw from air life's necessary sustenance ; in waters yellow with the golden dust of the lotus, they perform ablutions for religious vows ; on jewelled slabs, they meditate ; and restrain their passions in the midst of celestial nymphs : they practise penance in a place which other sages by their austerities seek to win. (12)

MĀTALI. Verily the aspirations of the great ever mount upwards. (*Walking about ; in the air*). O Vṛdhaśākalya how is the holy Mārīca occupied ? What do you say ? Being questioned by Aditi respecting the

ब्रवीषि। दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नी-सहितायै कथयतीति।

राजा—( कर्णं दत्त्वा। ) अये, प्रतिपाल्यावसराः खलु मुनयः।

मातलिः—( राजानमवलोक्य। ) अस्मिन्नशोकवृक्षमूले तावदास्ता-मायुष्मान्, यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि।

राजा—यथा भवान्मन्यते। ( इति स्थितः। )

मातलिः—आयुष्मन्, साधयाम्यहम्। ( इति निष्क्रान्तः। )

राजा—( निमित्तं सूचयित्वा। )

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते॥ १३॥

( नेपथ्ये। )

मा क्खु चावलं करेहि। कहं गदो एव्व अत्तणो पकिर्दि। मा खलु चापलं कुरु। कथं गत एवात्मनः प्रकृतिम्।

राजा—( कर्णं दत्त्वा। ) अभूमिरियमविनयस्य। को नु खल्वेष निषिध्यते। ( शब्दानुसारेणावलोक्य। सविस्मयम्। ) अये, को नु खल्वय-मनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम्।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति॥ १४॥

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः। )

बालः—जिम्भ सिङ्घ, दन्ताइं दे गणइस्सं। जृम्भस्व सिंह, दन्तांस्ते गणयिष्ये।

duties of a faithful wife, he is explaining them to her in company with the wives of the great sages?

KING (*Listening*). Ah! We must await the leisure of saints.

MĀTALI (*Looking at the king*). Let the long-lived one rest at the foot of the Aśoka tree; in the meanwhile I will wait for an opportune moment to announce your arrival to the father of Indra.

KING. As your Honour thinks. (*Stands.*)

MĀTALI. Long-lived one, I will depart. (*Exit.*)

KING (*Indicating an omen*).

I do not hope to obtain my desire; why, O my arm, dost thou vainly throb? Happiness that was scorned before, surely turns into pain. (13).

(*Behind the scenes*)

Do not be so wild. What! Gone already to your own nature!

KING (*Listening*). This is no place, surely, for any rudeness. Who can be thus rebuked? (*Looking in the direction of the sound; in surprise*). Who is this child, closely attended by two female-ascetics—a child that possesses not the strength of a mere child?

He forcibly drags towards him, for sport, a lion's whelp that has but half-sucked its mother's dug, and has its mane ruffled by pulling. (14)

(*Enter a boy acting as described, and two female ascetics.*)

BOY. Open thy mouth, lion, that I may count thy teeth.

प्रथमा—अविणीद, किं णो अपच्चणिव्विसेसाणि सत्ताणि विप्पअरेसि। हन्त, वड्ढइ दे संरम्भो। ठाणे क्खु इसिजणेण सव्वदमणो त्ति किदणामहेओ सि। अविनीत, किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि। हन्त, वर्धते तव संरम्भः। स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि।

राजा—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः। नूनमनपत्यता मां वत्सलयति।

द्वितीया—एसा क्खु केसरिणी तुमं लङ्घेदि जइ से पुत्तअं ण मुञ्चेसि। एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि।

बालः—( सस्मितम्। ) अम्हहे, बलिअं क्खु भीदो म्हि। ( इत्यधरं दर्शयति। ) अहो, बलीयः खलु भीतोऽस्मि।

राजा—

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे।
स्फुलिङ्गावस्थया वह्निरेधापेक्षा इव स्थितः॥ १५॥

प्रथमा—वच्छ, एदं बालमिइन्दअं मुञ्च। अवरं दे कीलणअं दाइस्सं। वत्स, एनं बालमृगेन्द्रं मुञ्च। अपरं ते क्रीडनकं दास्यामि।

बालः—कहिं। देहि णं। ( इति हस्तं प्रसारयति। ) कुत्र। देह्येतत्।

राजा—कथं चक्रवर्तिलक्षणमप्यनेन धार्यते। तथा ह्यस्य

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम्॥ १६॥

द्वितीया—सुव्वदे, ण सक्को एसो वाआमेत्तेण विरमाविदुं। गच्छ तुमं। ममकेरए उडए मक्कण्डेअस्स इसिकुमारअस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठदि। तं से उवहर। सुव्रते, न शक्य एष वाचामात्रेण विरमयितुम्। गच्छ त्वम्। मदीय उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति। तमस्योपहर।

प्रथमा—तह। ( इति निष्क्रान्ता ) तथा।

FIRST. Naughty boy, why dost thou torment the animals whom we cherish as if they were our own off-spring? Ha! thou art getting more wild. Aptly have the sages named thee Sarvadamana.

KING. Ah, what means it that my heart inclines to this boy as if he were my own son? No doubt my childlessness makes me soft-hearted.

SECOND. This lioness will surely attack thee, if thou release not her whelp.

BOY (*Smiling*). Oh, I am indeed dreadfully scared! (*Pouts his under-lip.*)

KING. This boy appears to me to be the germ of heroic valour and looks like fire in a tiny spark waiting only for fuel (to blaze up). (15)

FIRST. Child, set at liberty this little lion; and I will give thee another plaything.

BOY. Where is it? Give it me. (*Extends his hands.*)

KING. How, he bears the marks of universal royalty! Thus his

Hand extended in eagerness to grasp the coveted object, with fingers connected by a web, appears like a single lotus, the interspaces of whose petals are not visible, blown open by the early dawn with its glow enkindled. (16)

SECOND. Suvratā, it is not possible to stop him by mere words. Go; in my cottage you will find a painted clay peacock that belongs to the hermit-boy Mārkaṇḍeya. Give that to him.

FIRST. As you say. (*Exit.*)

बालः—इमिणा एव्व दाव कीलिस्सं । ( इति तापसीं विलोक्य हसति । ) अनेनैव तावत्क्रीडिष्यामि ।

राजा—स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७ ॥

तापसी—होदु । ण मं अअं गणेदि । ( पार्श्वमवलोकयति । ) को एत्थ इसिकुमाराणं । ( राजानमवलोक्य । ) भद्दमुह, एहि दाव । मोएहि इमिणा दुम्मोअहत्थग्गाहेण डिम्भलीलाए बा॰ीअमाणं बालमिइन्दअं । भवतु । न मामयं गणयति । कोऽत्र ऋषिकुमाराणाम् । भद्रमुख, एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।

राजा—( उपगम्य । सस्मितम् । ) अयि भो महर्षिपुत्र ।

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मतस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनम् ॥ १८ ॥

तापसी—भद्दमुह, ण क्खु अअं इसिकुमारओ । भद्रमुख, न खल्वयं ऋषिकुमारः ।

राजा—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । ( यथाभ्यर्थितमनुतिष्ठन्बालस्पर्शमुपलभ्य । आत्मगतम् । )

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमङ्कात्कृतिनः प्ररूढः ॥ १९ ॥

BOY. In the meanwhile, I will play with this. (*Looks at the hermit-woman and laughs.*)

KING. How my heart goes out to this unmanagable child!

> Blessed are they who, carrying their sons that fondly seek their laps, with bud-like teeth that slightly appear in their causeless smiles, lisping their charming inarticulate prattle, are soiled by the dust of their limbs. (17)

HERMIT-WOMAN. Well, he does not mind me. (*Looks back*). Which one of the hermit-boys is here? (*Looking at the king*). Come, gentle sir, and free this lion-cub being tormented in childish sport by this child from whose grasp it is difficult to disengage it.

KING. (*Approaching; smilingly*). O son of some great sage,

> Why is it, that by thee acting in a way opposed to the hermitage is befouled, from thy very birth that virtue of forbearance which delights in the protection of animals like the sandal tree by the black-serpent's brood? (18)

HERMIT-WOMAN. But, good sir, he is not the son of a sage.

KING. His actions, indeed, which are conformable to his appearance bespeak it. But I took that view from the evidence of the place. (*Acting as requested, and feeling the boy's touch, to himself*).

> If it gives me such delight to touch the limbs of the child who is the scion of some stranger's family, what rapture will arise in the heart of that happy man from whose body he sprang? (19)

तापसी—( उभौ निर्वर्ण्य । ) अच्छरिअं अच्छरिअं । आश्चर्यमाश्चर्यम् ।

राजा—आर्ये, किमिव ।

तापसी—इमस्स बालअस्स दे वि संवादिणी आकिदी त्ति विम्हाविदम्हि । अपरिइदस्य वि दे अप्पडिलोमो संवुत्तो त्ति । अस्य बालकस्य तेऽपि संवादिन्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रतिलोमः संवृत्त इति ।

राजा—( बालकमुपलालयन् । ) नचेन्मुनिकुमारोऽयम्, अथ कोऽस्य व्यपदेशः ।

तापसी—पुरुवंसो । पुरुवंशः ।

राजा—( आत्मगतम् । ) कथमेकान्वयो मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकयतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

( प्रकाशम् । ) न पुनरात्मगत्या मानुषाणामेष विषयः ।

तापसी—जह भद्दमुहो भणादि । अच्छरासंबन्धेण इमस्स जणणी एत्थ देवगुरुणो तवोवणे पसूदा । यथा भद्रमुखो भणति । अप्सरःसंबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ।

राजा—( अपवार्य । ) हन्त, द्वितीयमिदमाशाजननम् । ( प्रकाशम् । ) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

तापसी—को तस्स धम्मदारपरिच्चाइणो णाम संकीत्तिदुं चिन्तिस्सदि । कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति ।

HERMIT-WOMAN (*gazing at both*). Oh wonderful!

KING. What is it, holy woman?

HERMIT-WOMAN. I am astonished to mark the resemblance between your form and the child's. And although he had no (former) acquaintance with you, yet he did not take any dislike to you.

KING (*Fondling the child*). If he is not the son of a hermit, what is his family?

HERMIT-WOMAN. The family of Puru.

KING. (*To himself*). How, he belongs to the same family as mine? That is how the lady thinks he resembles me. For this is the last family-vow of the descendants of Puru.

> To them who dwell at first in palaces which abound in all the pleasures of sense, for protecting the world, the roots of trees where the one vow of asceticism is rigidly observed serve as homes afterwards. (20)

(*Aloud*) But the place is inaccessible to mortals by their own power.

HERMIT-WOMAN. As the good sir says. But in consequence of her relationship to a nymph, his mother brought him forth in the pious grove of the father of the gods.

KING (*To himself*). Ah, this is a second ground of hope. (*Aloud*). What is the name of the virtuous monarch who claims the noble lady for his wife?

HERMIT-WOMAN. Who, indeed, would think of speaking his name who rejected his lawful wife?

**राजा**— ( स्वगतम् । ) **इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथवानार्यः परदारव्यवहारः ।**

( प्रविश्य मृण्मयूरहस्ता । )

**तापसी- -सव्वदमण, सउन्दलावण्णं पेक्ख** । सर्वदमन, शकुन्तलावण्यं प्रेक्षस्व ।

**बालः**—( सदृष्टिक्षेपम् । ) **कहिं वा मे अज्जू** । कुत्र वा मम माता ।

**उभे—णामसारिस्सेण वञ्चिदो माउवच्छलो** । नामसादृश्येन वञ्चितो मातृवत्सलः ।

**द्वितीया—वच्छ, इमस्स मित्तिआमोरअस्स रम्मत्तणं देक्ख त्ति भणिदो सि** । वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।

**राजा**—( आत्मगतम् । ) **किंवा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ।**

**बालः—अज्जुए, रोअदि मे एसो भद्दमोरओ** । ( इति क्रीडनकमादत्ते । ) मातः, रोचते म एष भद्रमयूरः ।

**प्रथमा**—( विलोक्य सोद्वेगम् । ) **अम्हहे, रक्खाकरण्डअं से मणिबन्धे ण दीसदि** । अहो, रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते ।

**राजा—अलमलमावेगेन । नन्विदमस्य सिंहशावविमर्दात्परिभ्रष्टम्** । ( इत्यादातुमिच्छति । )

**उभे—मा क्खु एदं अवलम्बअ । कहं गहिदं णेण** ( इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः । ) मा खल्विदमवलम्ब्य । कथं गृहीतमनेन ।

**राजा—किमर्थं प्रतिषिद्धा स्मः ।**

KING. (*To himself*). This story, really, points at me alone. Suppose I ask the name of the child's mother. But it is against good manners to inquire concerning the wife of another man.

(*Entering with the clay peacock in her hand*). HERMIT-WOMAN. Sarvadamana, look at the bird's beauty—the Śakunta-loveliness.

BOY (*Looking about*). Where is my mamma ?

BOTH. Tenderly loving his mother, how he is deceived by the similarity (of the sound) to her name !

SECOND. Dear boy, thou wast asked to see how pretty the clay-peacock was.

KING. (*To himself*). What, his mother's name is Śakuntalā ! But names are alike. Will it be that the mention of a mere name, like some mirage, would in the and lead to bitter disappointment ?

BOY. Mother, I like this fine peacock. (*Takes up the plaything.*)

FIRST (*Looking ; with alarm*). Oh, the amulet is not on his wrist !

KING. Don't get alarmed. It was dropped while he was struggling with the lion's cub. (*Desires to pick it up.*)

BOTH. Don't take it. How he has already picked it up !

(*They lay their hands on their bosom and gaze with surprise at each other.*)

KING. Why was I forbidden ?

प्रथमा—सुणादु महाराओ । एसा अवराजिदा णाम ओसही इमस्स जादकम्मसमए भअवदा मारीएण दिण्णा । एदं किल मादापिदरो अप्पाणं च वज्जिअ अवरो भूमिपडिदं ण गेण्हादि । शृणोतु महाराजः । एषापराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वापरो भूमिपतितां न गृह्णाति ।

राजा—अथ गृह्णाति ।

प्रथमा—तदो तं सप्पो भविअ दंसइ । ततस्तं सर्पो भूत्वा दशति ।

राजा—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।

उभे—अणेअसो । अनेकशः ।

राजा—( सहर्षम् । आत्मगतम् । ) कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि । ( इति बालं परिष्वजते । )

द्वितीया—सुव्वदे, एहि । इमं वुत्तन्तं णिअमव्वावुडाए सउन्दलाए णिवेदेम्ह । सुव्रते, एहि । इम वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।

( इति निष्क्रान्ते । )

बालः—मुञ्च मं । जाव अज्जुए सआसं गमिस्सं । मुञ्च माम् । यावन्मातुः साकाशं गमिष्यामि ।

राजा—पुत्रक, मया सहैव मातरमभिनन्दिष्यसि ।

बालः—मम क्खु तादो दुस्सन्दो । ण तुमं । मम खलु तातो दुष्यन्तः । न त्वम् ।

राजा—( सस्मितम् । ) एष विवाद एव प्रत्याययति ।

( ततः प्रविशत्येकवेणीधरा शकुन्तला । )

शकुन्तला—विआरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसा आसि अत्तणो भाअहेएसु । अहवा जह साणुमदीए आचक्खिदं तह संभावीअदि एदं । विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न म आशासीदात्मनो भागधेयेषु । अथवा यथा सानुमत्याख्यातं तथा संभाव्यत एतत् ।

राजा—( शकुन्तलां विलोक्य । ) अये, सेयमत्रभवती शकुन्तला । यैषा

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः ।

FIRST. Listen, your Majesty. This is the herb Aparājitā given at his birth-rites by the holy Mārīca. They say, that in case it fell to the earth no one but the parents or the boy himself may touch it.

KING. And supposing he takes it?

FIRST. It becomes a serpent and bites him.

KING. Did you ever see it thus transformed?

BOTH. Several times.

KING. (*With joy; to himself*). Why then do I not welcome my hope fulfilled at last? (*Embraces the boy.*)

SECOND. Suvratā, come let us carry the news to Śakuntalā who is engaged in the observance of her vows. (*Exeunt.*)

BOY. Leave me that I might go to my mother.

KING. My child, thou shalt go with me to greet thy mother.

BOY. My father is Duṣyanta, not you.

KING. (*Smiling*). Even this contradiction convinces me.

(*Enter Śakuntalā wearing her hair twisted into a single braid.*)

ŚAKUNTALĀ. Hearing that Sarvadamana's amulet remained in its natural form, even when there was an occasion when it ought to have changed its form, I could scarcely trust my fortunes. Or perhaps as Sānumatī told me, this is possible.

KING. (*Looking at Śakuntalā*). Ah, here is the lady Śakuntalā. She who,

Wearing two dark-grey garments, having a
face worn by her vows, and wearing a single

अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ॥ २१ ॥

शकुन्तला—( पश्चात्तापविवर्णं राजानं दृष्ट्वा। ) ण क्खु अज्जउत्तो विअ। तदो को एसो दाणिं किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि। न खल्वार्यपुत्र इव। ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति।

बालः—( मातरमुपेत्य। ) अज्जुए, एसो कोवि पुरिसो मं पुत्तेत्ति आलिङ्गदि। मातः, एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति।

राजा—प्रिये, क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्। यदाहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि।

शकुन्तला—( आत्मगतम् ) हिअअ, समस्सस समस्सस। परिच्चत्तमच्छरेण अणुअम्पिअम्हि देव्वेण। अज्जउत्तो क्खु एसो। हृदय, समाश्वसिहि ससाश्वसिहि। परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन। आर्यपुत्रः खल्वेषः।

राजा—प्रिये,

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ २२ ॥

शकुन्तला—जेदु जेदु अज्जउत्तो। ( इत्यर्धोक्ते बाष्पकण्ठी विरमति। ) जयतु जयत्वार्यपुत्रः।

राजा—सुन्दरि,

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया।
यत्ते दृष्टमसंस्कारं पाटलोष्ठपुटं मुखम् ॥ २३ ॥

बालः—अज्जुए, को एसो। मातः, क एषः।

शकुन्तला—वच्छ, दे भाअहेआइं पुच्छेहि। वत्स, ते भागधेयानि पृच्छ।

braid of hair, and pure in her conduct, is undergoing a long vow of separation from me who have been exceedingly cruel to her. (21)

ŚAKUNTALĀ (*Observing the king pale with remorse*). Certainly he does not look like my husband. Who then could he be that sullies with the contact of his body my child protected by an auspicious amulet?

BOY (*Advancing to his mother*). Mother, who is this man who calls me son and embraces me?

KING. Oh my beloved, even the cruelty I showed to you has come to have a happy conclusion, since I find that you have recognized me.

ŚAKUNTALĀ (*To herself*). Be comforted, my heart; fate, no longer envious, has taken pity on me. This is indeed my husband.

KING. Darling,

By the kindness of heaven, O lovely faced one, thou standest again before me, the darkness of whose delusion has been dispelled by recollection. The star Rohinī at the end of an eclipse rejoins her (beloved) Moon. (22)

ŚAKUNTALĀ. Victory to my noble lord! (*Tears choke her voice when this is half-said.*)

KING. Lovely one,

Though the word victory be suppressed by thy tears, yet have I gained victory since I see thy unadorned face with its red lips. (23)

BOY. Mother, who is he?

ŚAKUNTALĀ. Ask thy fate, my child.

**राजा**—( शकुन्तलायाः पादयोः प्रणिपत्य । )

**सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते**
**किमपि मनसः संमोहो मे तदा बलवानभूत् ।**
**प्रबलतमसामेवंप्रायाः शुभेषु प्रवृत्तयः**
**स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥**

**शकुन्तला**—**उट्ठेदु अज्जउत्तो । णूणं मे सुअरिअप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणाममुहं आसि जेण साणुक्कोसो वि अज्जउत्तो मइ विरसो संवुत्तो ।** उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः ।

( राजोत्तिष्ठति । )

**शकुन्तला**—**अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ।** अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ।

**राजा**—**उद्धृतविषादशल्यः कथयिष्यामि ।**

**मोहान्मया सुतनु पूर्वमुपेक्षितस्ते**
**यो बाष्पबिन्दुरधरं परिबाधमानः ।**
**तं तावदाकुटिलपक्ष्मविलग्नमद्य**
**बाष्पं प्रमृज्य विगतानुशयो भवेयम् ॥ २५ ॥**

( इति यथोक्तमनुतिष्ठति । )

**शकुन्तला**—( नाममुद्रां दृष्ट्वा । ) **अज्जउत्त, एदं तं अङ्गुलीअअं ।** आर्यपुत्र, एतत्तदङ्गुलीयकम् ।

**राजा**—**अस्मादङ्गुलीयोपलम्भात्खलु स्मृतिरुपलब्धा ।**

**शकुन्तला**—**विसमं किदं णेण जं तदा अज्जउत्तस्स पच्चअकाले दुल्लहं आसि ।** विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत् ।

KING (*Falling at Śakuntalā's feet*).

O fair one let the unpleasantness caused by my desertion of thee depart from thy heart ; for at that time a violent frenzy somehow overpowered my soul. Such, for the most part, is the attitude towards good of those in whose minds the darkness of illusion prevails. A blind man shakes off even a wreath of flowers thrown over his head, mistaking it for a snake. (24)

ŚAKUNTALĀ. Rise, my husband ; surely some (evil) deed of mine in a former existence coming in the way (of the action) of my virtue, was in those days approaching fruition ; since my husband, who is so kind at heart became unfeeling towards me. (*The king rises.*) Śakuntalā. But how did my husband remember this unfortunate woman ?

KING. I will tell thee when I shall have plucked the dart of sorrow.

Fair one, the anguish of my heart shall cease by wiping off the tears that now cling to thy slightly curved eye-lashes—the tears which formerly paining thy under-lip were neglected by me through mental delusion. (25)

(*Does as said.*)

ŚAKUNTALĀ (*Seeing the signet-ring*). My husband, this is the ring.

KING. It was the recovery of this ring that restored my memory.

ŚAKUNTALĀ. It has acted wickedly, since it was not found at the time of convincing my husband.

राजा—तेन ह्यृतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम्।

शकुन्तला—ण से विस्ससामि। अज्जउत्तो एव्वं णं धारेदु।
नास्या विश्वसिमि। आर्यपुत्र एवैतद्धारयतु।

( ततः प्रविशति मातलिः। )

मातलिः—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्धते।

राजा—अभूत्संपादितस्वादुफलो मे मनोरथः। मातले, न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात्।

मातलिः—( सस्मितम्। ) किमीश्वराणां परोक्षम्। एत्वायुष्मान्। भगवान्मारीचस्ते दर्शनं वितरति।

राजा—शकुन्तले, अवलम्ब्यतां पुत्रः। त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि।

शकुन्तला—हिरिआमि अज्जउत्तेण सह गुरुसमीवं गन्तुं।
जिहेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम्।

राजा—अप्याचरितव्यमभ्युदयकालेषु। एह्येहि।

( सर्वे परिक्रामन्ति। )

( ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः। )

मारीचः—( राजानमवलोक्य। ) दाक्षायणि,

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः॥ २६॥

अदितिः—संभावणीआणुभावा से आकिदि। संभावनीयानुभावास्याकृतिः।

KING. Then let the creeper receive her flower as a sign of her union with spring.

ŚAKUNTALĀ. I do not trust it. Let my husband alone wear it.

(*Then enter Mātali.*)

MĀTALI. I congratulate the long-lived one on reunion with his lawful wife, and on seeing the face of his son.

KING. My desire has come to attain a sweet fruit. Mātali, was not this event really known to Indra?

MĀTALI (*Smiling*). What is unknown to the Gods? Come, long-lived one. The divine Mārīca gives you an audience.

KING. Śakuntalā, take our son by the hand; I wish to see the holy one, leading thee into his presence.

ŚAKUNTALĀ. I am ashamed to go before my elders with my husband.

KING. But that is the custom on (such) happy occasions. Come, come.

(*All walk round.*)

(*Then enter seated Mārīca and Aditi.*)

MĀRĪCA (*Looking at the king*). Aditi,

This is he that marches foremost in the front of thy son's battles, named Duṣyanta, the ruler of the earth, through whose bow that edged thunder-bolt of Indra, all its work being accomplished, has become (a mere) ornament. (26)

ADITI. His greatness may be inferred from his appearance.

मातलिः—आयुष्मन्, एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः। तावुपसर्प।

राजा—मातले एतौ

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम्।
यस्मिन्नात्मभवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम्॥ २७॥

मातलिः—अथ किम्।

राजा—( उपगम्य । ) उभाभ्यामपि वासवानुयोज्यो दुष्यन्तः प्रणमति।

मारीचः—वत्स, चिरं जीव। पृथिवीं पालय।

अदितिः—वच्छ अप्पडिरहो होहि। वत्स अप्रतिरथो भव।

शकुन्तला—दारअसहिदा वो पादवन्दणं करेमि। दारकसहिता वां पादवन्दनं करोमि।

मारीचः—वत्से,

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः।
आशीरन्या न ते योग्या पौलोमीसदृशी भव॥ २८॥

अदितिः—जादे, भत्तुणो अभिमदा होहि। अवस्सं दीहाऊ वच्छओ उहअकुलणन्दणो होदु। उवविसह। जाते, भर्तुरभिमता भव। अवश्यं दीर्घायुर्वत्स उभयकुलनन्दनो भवतु। उपविशत।

( सर्वे प्रजापतिमभित उपविशन्ति। )

मारीचः—( एकैकं निर्दिशन्। )

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान्।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम्॥ २९॥

MĀTALI. Long-lived one, these parents of the gods are gazing upon you with an eye that betrays parental affection. Approach them.

KING. Mātali,

Are those the pair, sprung from Dakṣa and Mārīci, at one remove from the Creator, whom sages pronounce the fountain of glory apparent in the twelve forms (of the sun); who begot the lord of the triple world, the lord of the (gods who are the) sharers of every sacrifice, the pair whom Viṣṇu, who is higher than the self-existent himself, chose as the source of his birth? (27)

MĀTALI. Yes, quite so.

KING. (*Approaching*). Duṣyanta, Indra's servant, bows to you both.

MĀRĪCA. Child, mayest thou live long! Protect the earth.

ADITI. Be thou a matchless hero.

ŚAKUNTALĀ. I salute your feet along with my son.

MĀRĪCA. Like Indra is thy husband; and like Jayanta thy son; no other blessing would be suitable to thee. Mayest thou be like Paulomī! (28)

ADITI. Child, be thou highly honoured by thy husband. May thy child be long-lived and unfailingly be the joy of both the families. Sit down.

(*All sit down around Prajāpati.*)

MĀRĪCA (*Pointing to each of them by turns*).

The virtuous Śakuntalā, her noble child and your Honour—here fortunately are combined faith, fortune, and action. (29)

राजा—भगवन् , प्रागभिप्रेतसिद्धिः । पश्चाद्दर्शनम् । अतोऽपूर्वः खलु वोऽनुग्रहः । कुतः ।

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु संपदः ॥ ३० ॥

मातलिः—एवं विधातारः प्रसीदन्ति ।

राजा—भगवन् , इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनादूढपूर्वां तद्दुहितरमवगतोऽहम् । तच्चित्रमिव मे प्रतिभाति ।

यथा गजो नेति समक्षरूपे
तस्मिन्नपक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा तु भवत्प्रतीति-
स्तथाविधो मे मनसो विकारः ॥ ३१ ॥

मारीचः—वत्स, अलमात्मापराधशङ्कया । संमोहोऽपि त्वय्यनुपपन्नः । श्रूयताम् ।

राजा—अवहितोऽस्मि ।

मारीचः—यदैवाप्सरस्तीर्थावतरणात्प्रत्यक्षवैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि दुर्वाससः

KING. Holy one, First came the fulfilment of my desires, and afterwards, the sight of you; thus the favour you showed me is without parallel. For

First appears the flower, then the fruit ; first the clouds and then come the showers ; such is the regular course of cause and effect ; but fortunes came before your grace. (30)

MĀTALI. That is how the creators of all beings show favour.

KING. Holy sir, I married this your hand-maid by the Gāndharva ceremony and when after a time she was brought to me by her kindred, my memory failing me, I rejected her and thus committed a grievous offence against the venerable Kaṇva who is kin to you. But afterwards on seeing the ring, I perceived that I had married his daughter. This strikes me as very wonderful.

As if a man were to say 'This is not an elephant' when its form was before his eyes ; and when it has marched past him, were to doubt (what animal it could be) ; but conviction were to take place on seeing its foot-prints ; of such a kind has been the change that had come over my mind. (31)

MĀRĪÇA. Cease, my son to charge thyself with an offence ; nor is infatuation explicable in thee. Listen.

KING. I am all attention.

MĀRĪÇA. Even when Menakā took Śakuntalā whose distress was so evident, from the steps of the Apsaras-tirtha, and brought her to Aditi, at that very time I

शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति। स चायमङ्गुलीयकदर्शनावसानः।

राजा—( सोच्छ्वासम्। ) एष वचनीयान्मुक्तोऽस्मि।

शाकुन्तला—( स्वगतम्। ) दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो। ण हु सत्तं अत्ताणं सुमरेमि। अहवा पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो। अदो सहीहिं संदिट्ठम्हि भत्तुणो अङ्गुलीअअं दंसइदव्वं त्ति। दिष्ट्याकारणप्रत्यादेशी नार्यपुत्रः। न खलु शप्तमात्मानं स्मरामि। अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः। अतः सखीभ्यां संदिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति।

मारीचः—वत्से, चरितार्थासि। सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः। पश्य।

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा॥ ३२॥

राजा—यथाह भगवान्।

मारीचः—वत्स, कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्र एष शाकुन्तलेयः।

राजा—भगवन्, अत्र खलु मे वंशप्रतिष्ठा। बालं हस्तेन गृह्णाति।

मारीचः—तथा भाविनमेनं चक्रवर्तिनमवगच्छतु भवान्। पश्य।

रथेनानुद्धातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः।

perceived through my powers of contemplation that this thy poor dutiful wife was repudiated by thee in consequence of Durvāsas' curse, and through no other cause; that curse was to terminate at the sight of the ring.

KING. (*With a sigh*). So I am free from blame.

ŚAKUNTALĀ (*To herself*). Happy am I that my husband did not repudiate me without cause. But, indeed I don't remember I was cursed. Or I did not know I was cursed as I was absent-minded through separation; for my friends advised me to show the ring to my husband.

MĀRĪCA. Thou knowest, my daughter, the whole truth and must not give way to anger against thy rightful husband. Remember

Thou wast rejected in consequence of the curse, thy husband being cruel to thee through the obstruction of his memory; but now when his mind is freed from darkness, thou alone wilt rule him. As an image has no effect on a mirror whose surface is sullied with dirt, but on a clean one finds an easy access. (32)

MĀRĪCA. Child, have you greeted this son whom Śakuntalā bore (to you) whose birth-rites have been duly performed by us?

KING. Holy one, in him is the hope of my family.

MĀRĪCA. Know that he will be a universal monarch in days to come.

First, a matchless warrior, he will cross the ocean in a chariot whose motion would be steady and free from jolts and conquer the earth consisting of her seven islands; here

इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ३३ ॥

राजा—भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशास्महे ।

अदितिः—भअवं, इमाए दुहिदुमणोरहसंपत्तीए कण्णो वि दाव सुदवित्थारो करीअदु । दुहिदुवच्छला मेणआ इह एव्व उपचरन्ती चिट्ठदि । भगवन् अनया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावच्छ्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनाकेहैवोपचरन्ती तिष्ठति ।

शकुन्तला—( आत्मगतम् । ) मणोरहो क्खु मे भणिदो भअवदीए । मनोरथः खलु मे भणितो भगवत्या ।

मारीचः—तपःप्रभावात्प्रत्यक्षं सर्वमेव तत्रभवतः ।

राजा—अतः खलु मम नातिक्रुद्धो मुनिः ।

मारीचः—तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः । कः कोऽत्र भोः ।

( प्रविश्य । )

शिष्यः—भगवन्, अयमस्मि ।

मारीचः—गालव, इदानीमेव विहायसा गत्वा मम वचनात्तत्रभवते कण्वाय प्रियमावेदय । यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

शिष्यः—यदाज्ञापयति भगवान् । ( इति निष्क्रान्तः । )

मारीचः—वत्स, त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व ।

राजा—यदाज्ञापयति भगवान् ।

he is called Sarvadamana, because he forcibly tames all animals ; but (later) he shall acquire the name of Bharata, because he shall sustain the world. (33)

KING. I anticipate all (this) from him for whom the purificatory-rites were performed by the holy one.

ADITI. Holy one, let Kaṇva also be apprised of all the circumstances of the attainment by his daughter of all that her heart desired. Menakā, who is (so) fond of her daughter, is here in attendance upon me.

ŚAKUNTALĀ (*To herself*). The holy one has, indeed, given expression to my heart's desire.

MĀRĪCA. But the holy one knows the whole matter through the power of his devotions.

KING. Hence it is that the sage was not very much angry with me.

MĀRĪCA. Nevertheless, he must be questioned by me about this happy event. Ho, who is there ?

(*Entering*) Pupil. Holy one, here I am.

MĀRĪCA. Gālava, fly through the air at once, and inform the holy Kaṇva of the happy event, in my name : That Śakuntalā with her son is accepted by Duṣyanta when his memory revived on the termination of her curse.

PUPIL. As the holy one commands. (*Exit.*)

MĀRĪCA. My son, thou too now ascend the chariot of thy friend Indra along with this wife and child, and set out for thy capital.

KING. As the holy one commands.

मारीचः—अपि च ।

तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञः वज्रिणं प्रीणयस्व ।
युगशतपरिवर्तानेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ ३४ ॥

राजा—भगवन्, यथाशक्ति श्रेयसे यतिष्ये ।

मारीचः—वत्स, किं ते भूयः प्रियमुपकरोमि ।

राजा—अतः परमपि प्रियमस्ति । यदिह भगवान्प्रियं कर्तुमिच्छति तर्हीदमस्तु । ( भरतवाक्यम् । )

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतमहतां महीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३५ ॥

( इति निष्क्रान्ताः सर्वे )

सप्तमोऽङ्कः ।

समाप्तमिदमभिज्ञानशाकुन्तलं नाम नाटकम् ॥

MĀRĪCA. Moreover,

May Indra send copious rain for (the benefit of) thy subjects; and mayest thou with frequent sacrifices please him. Thus pass periods of hundreds of ages with reciprocal friendly offices laudable on account of the benefits conferred on both the worlds. (34)

KING. Holy one, I shall strive, as far as I can, to attain (that) felicity.

MĀRĪCA. My son, what other favours can I bestow on thee?

KING. Can there be any favour greater still than this? As (however) the holy one desires to bestow a favour then let this be (fulfilled). (*Epilogue*).

May the king apply himself to the attainment of the happiness of his subjects. May the speech of those who stand high in their knowledge of the Veda be honoured, and may the self-existent Siva whose energy is immanent in all things put an end to my rebirth. (35)

(*Exeunt Omnes.*)

End of Act VII

Here ends the drama Abhijnāna-Śākuntala.

# ABHIJNĀNA-ŚĀKUNTALAM

## NOTES

### ACT I

P. 1. From the Nāṭyaśāstra we learn that before the commencement of a drama, an elaborate series of preliminaries (पूर्वरङ्ग) had to be performed, consisting chiefly of the प्रत्याहार which would announce the beginning of the performance, the अवतरण, when the musicians enter and take their places, the आरम्भ when the chorus try their voices, and the आश्रवण when the musicians try their instruments, and so on up to Nāndi. All these preliminaries are performed by the सूत्रधार, who then leaves the stage and his place is immediately taken by another similar person called स्थापक who introduces the play to the audience. This elaborate practice, was however given up later on, and we find that the सूत्रधार alone performed both the functions of the preliminaries and of the prologue. Cf. पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥ ...सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥ दशरूपक॰ III. 2-3.

I. 1. This benedictory stanza praises god Śiva and invokes his blessing and protection. He manifests himself through his eight different forms, for the support of this universe. These eight visible forms corresponded to the eight different manifestations of god Śiva called Rudras, viz. रुद्र, भव, सर्व, ईशान, पशुपति, भीम, उग्र and महादेव. "Brahmā assigned to them their respective stations: water, the sun, earth, fire, air, ether, the officiating Brāhmana, and the moon; these are termed their visible forms (तनवः)"—विष्णुपुराण. Cf. अष्टाभिरस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभि-

मानः । माल० I. 1. Also कुमा० V. 26. विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः । ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ॥ Also कलितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः । येनेदं ध्रियते विश्वं धुर्यैर्यानमिवाध्वनि ॥ ibid. V. 76. या स्रष्टुः आद्या सृष्टिः—Which was the first creation of the Creator i. e. water. According to the Paurāṇic conception of the creation of the universe, water was created first. Cf. अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ मनु० I. या विधिहुतं हविः वहति–Which carries the oblations (to the various gods), offered with due rites. Agni does the duty of delivering the offerings to the various gods. He is thus a carrier of oblations–a veritable portman. The significance of the adjective विधिहुत is best understood when it is known that the offerings not so given are not delivered unto the gods, but are reduced to ashes. (अविधिहुतं भस्मीभवति). ये द्वे कालं विधत्तः–The two, who make time viz. the sun and the moon. The Time or Kāla is infinite, but then the divisions of Time and its reckoning are possible because of the two luminaries. The day and night, the fortnight, the month, the seasons, the year etc, into which Time could thus be divided, are to be calculated by the sun and the moon, and therefore, they make (विधत्तः) Time. श्रुति...गुणा –श्रुतेः विषयः (शब्दः) गुणः यस्याः सा–Characterised by the object of hearing viz. the sound. आकाश or ether, invisible as it is, has its characteristic गुण of conveying sound from the place of origin to the sense of hearing. Cf. अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः । रघु० XVIII. सर्वबीजप्रकृतिः–The source of all seeds viz. the Earth, प्रकृति is the उत्पत्तिस्थान or the source. Cf. इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते ॥ मनु० IX. 37. Note the other reading सर्वभूतप्रकृतिः, which is also good. यया प्राणिनः प्राणवन्तः–By which, the living beings are endowed with प्राण i. e. vital breaths. Beings have life in them because of these five vital breaths in the body. They are:—प्राण, अपान, व्यान, उदान and समान. प्राण is the all-in-all of a living being, the essence of life, as is illustrated by the Upanisadic parable in the form of the dialogue between the various senses and Prāṇa,

CHITRALEKHA—Well then, I make no further question.

URVASHI—Advise me, then, which way we should proceed, so that we may not meet with any impediment on our way.

CHITRALEKHA—Have no fear, dear girl. Have not we two been made inviolable of the enemy of the gods by the revered preceptor of the immortals by imparting to us the mystic art of tying up the hair called the *Aparajita* ?

URVASHI—How could I be so forgetful!
*( Coming to the path of the Siddhas )*.

CHITRALEKHA—Here have we come to the palace of the royal sage, the crest-borne gem of Pratishthana, which appears as it were to look at its own reflection in the waters of the divine Ganges, rendered particularly holy by her confluence with the Yamuna.

URVASHI—*( Looking )*. Rather it should be said that the heavens have been transferred to another place! *( Reflecting)*. But friend, where shall we find him—that pitying friend of the helpless?

CHITRALEKHA—Let us first alight in this Pramadavana which looks like a part of the garden of heaven, and we shall find out.

[ उभे अवतरतः । ]

चित्रलेखा—[ दृष्ट्वा सहर्षम् ] हला एसो क्खु पढमोदिदो विअ चन्दो कोमुदिं विअ तुमं पडिच्छदि । सखि एष खलु प्रथमोदित इव चन्द्रः कौमुदीमिव त्वां प्रतीक्षते ।

उर्वशी—[ विलोक्य ] हला दाणिं पुढम-दंसणादो सविसेसं पिअदंसणो महाराओ पडिहादि । सखि इदानीं प्रथमदर्शनात् सविशेषं प्रियदर्शनो महाराजः प्रतिभाति ।

चित्रलेखा—जुज्जदि । ता एहि उवसप्पम्ह । युज्यते । तदेहि उपसर्पावः ।

उर्वशी—तिरक्खरिणी-पडिच्छण्णा पासगदा से भविअ सुणिस्सं दाव । पास-पडिवत्तिणा वअस्सेण सह विअणे किं पि मन्तअन्तो चिट्ठदि । तिरस्करिणीप्रतिच्छन्ना पार्श्वगता अस्य भूत्वा श्रोष्यामि तावत् । पार्श्वपरिवर्तिना वयस्येन सह विजने किमपि मन्त्रयमाणस्तिष्ठति ।

चित्रलेखा—जह दे रोअदि । [ यथोक्तमनुतिष्ठतः । ] यथा ते रोचते ।

विदूषकः—भो चिन्तिदो मए दुल्लह-प्पणइणी-समाअमोवाओ । भोः चिन्तितो मया दुर्लभप्रणयिनीसमागमोपायः ।

[ राजा तूष्णीमास्ते । ]

उर्वशी—का णु क्खु एसा इत्थिआ इमिणा पत्थीअमाणा अत्ताणअं विकत्थेदि । का नु खल्वेषा स्त्री अनेन प्रार्थ्यमाना आत्मानं विकत्थते ।

चित्रलेखा—किं उण माणुस्सभं विडम्बीअदि । किं पुनर्मानुष्यं विडम्ब्यते ।

( *Both alight* ).

CHITRALEKHA—( *Looking with joy* ). Friend, here is he expecting you, like the newly-risen moon expecting moonlight.

URVASHI—( *Observing* ) My dear, does not he look more graceful now than when first he met my gaze?

CHITRALEKHA—Quite so; well then, come along, let us approach.

URVASHI—Let me for a while remain hidden by the power of the *tiraskarini* charm, and approaching him, listen. He seems to be talking something to his friend who is near, in this solitary place.

CHITRALEKHA—As you like it.

( *They do, as said* ).

VIDUSHAKA—Well, friend, I have thought out a plan for securing you an interview with the person you love, although she is inaccessible.

( *The King remains silent* ).

URVASHI—What woman thinks much of herself (that she should hold out) even when made love to, by him?

CHITRALEKHA—But why do you act the part of a mortal?

**उर्वशी—भयामि सहसा पभावादो विण्णादुं ।** बिभेमि सहसा प्रभावाद् विज्ञातुम् ।

**विदूषकः—णं भणामि चिन्तिदो उवाओ त्ति ।** ननु भणामि चिन्तित उपाय इति ।

**राजा—तेन हि कथ्यताम् ।**

**विदूषकः—सिविण-समाअम-आरिणिं णिद्दं सेवदु भवं । अहवा तत्थभोदीए उव्वसीए पडिकिदिं आलिहिअ ओलोअन्तो चिट्ठ ।** स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् । अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिमालिख्य अवलोकयंस्तिष्ठ ।

**उर्वशी—**[ सहर्षम् ] **हीण-सत्त हिअअ समस्सस समस्सस ।** हीनसत्त्व हृदय समाश्वसिहि समाश्वसिहि ।

**राजा—उभयमप्यनुपपन्नम् ।**

> **हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा**
> **कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।**
> **न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां**
> **मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ १० ॥**

**चित्रलेखा—सुदं तुए ।** श्रुतं त्वया ।

**उर्वशी—सुदं । ण उण पज्जत्तं हिअअस्स ।** श्रुतम् । न पुनः पर्याप्तं हृदयस्य ।

**विदूषकः—एत्तिओ मे मदि-विहवो ।** एतावान् मम मतिविभवः ।

**राजा—**[ सनिःश्वासम् ]

> **नितान्तकठिनां रुजं मम न वेद सा मानसीं**
> **प्रभावविदितानुरागमवमन्यते वापि माम् ।**
> **अलब्धफलनीरसान् मम विधाय तस्मिञ्जने**
> **समागममनोरथान् भवतु पञ्चबाणः कृती ॥ ११ ॥**

URVASHI—But I fear too soon to know through my power.

VIDUSHAKA—Well, I say, I have hit upon a plan.

KING—Well then, tell me.

VIDUSHAKA—Let Your Majesty enjoy a nap, which will effect your union in dreams; or delineate a likeness of the ladv Urvashi and remain gazing upon the picture.

URVASHI—( *With joy* ). Be of good cheer, my timid heart.

KING—Both are impracticable, ( I fear ).

For the shafts of love are ever rankling inside my breast · how then can I enjoy sleep which in dreams might effect our union? And even before I have completed the picture of the beloved one with the lovely face, tears would surely not fail to start in my eyes. [11]

CHITRALEKHA—Have you heard?

URVASHI—Yes I have; but that scarcely sufficeth to comfort my heart.

VIDUSHAKA—Well, my ingenuity extends only so far.

KING—( *Sighing* ).

Perhaps she does not know the very keen anguish of my heart; or knowing my love through her supernatural power, she but despises me. Let the God of the five shafts feel happy bv making my desires of union with that person void of anv pleasure on account of their fruitlessness. [11]

चित्रलेखा—सुदं तुए । श्रुतं त्वया ।

उर्वशी—हद्धी हद्धी । मं एव्वं अवगच्छदि । असमत्थम्हि अग्गदो भविअ से पडिवअणस्स । पहाव-णिम्मिदेण भुज्ज-वत्तेण संपादिदुत्तरा होदुं इच्छामि । हा धिक् हा धिक् । मामेवमवगच्छति । असमर्थास्मि अग्रतो भूत्वा अस्य प्रतिवचनस्य । प्रभावनिर्मितेन भूर्जपत्रेण संपादितोत्तरा भवितुमिच्छामि ।

चित्रलेखा—अणुमदं मे । अनुमतं मम ।

[ उर्वशी ससंभ्रमं गृहीत्वा यथोक्तं करोति । ]

विदूषकः—[ दृष्ट्वा ] अविहा अविहा । भो किं णु खु एदं भुअङ्ग-णिम्मोअं विअ संमुहे णो णिवडिदं । अविहा अविहा । भोः किं नु खल्वेतद् भुजङ्गनिर्मोक इव संमुखे आवयोः निपतितम् ।

राजा—[ विभाव्य ] भूर्जपत्रगतोयमक्षरविन्यासः ।

विदूषकः—ण खु अदिट्ठाए तत्तहोदीए उव्वसीए भवदो परिदेविदं सुणिअ समाणाणुराअ-सूअआइं अक्खराइं विसज्जिआइं होन्ति । न खल्वदृष्टया तत्रभवत्या उर्वश्या भवतः परिदेवितं श्रुत्वा समानानुरागसूचकान्यक्षराणि विसृष्टानि भवन्ति ।

राजा—नास्त्यगतिर्मनोरथानाम् [ गृहीत्वा अनुवाच्य । सहर्षम् ।] सखे प्रसन्नस्ते तर्कः ।

विदूषकः—भवं दाणिं पसीददु । एत्थ लिहिदं सुणिदुं इच्छामि । भवान् इदानीं प्रसीदतु । अत्र लिखितं श्रोतुमिच्छामि ।

उर्वशी—साहु अज्ज णाअरिओ सि । साधु आर्य नागरिकोसि ।

राजा—श्रूयताम् । [ वाचयति ]

सामिअ संभाविआ जह अहं तुए अमुणिआ ।
तह अणुरत्तस्स जइ णाम तुह उवरिं ॥ १२ ॥

CHITRALEKHA—Have you heard ?

URVASHI—Alas ! Alas ! He takes me to be thus ! I cannot confront him and give him answer ; so I desire to make answer to him by means of a Bhurja leaf which I will produce through my power.

CHITRALEKHA—I agree.

*( Urvashi takes it in haste and does as said ).*

VIDUSHAKA—( *Seeing* ). Holla ! What is here, in front of us, that looks like the slough of a snake ?

KING—( *Looking closely* ). This is some letter written upon a Bhurja-leaf.

VIDUSHAKA—May it be that the lady Urvaṣhi, unperceived, has overheard, your lamentation and has sent this letter indicating therein her equal love for you ?

KING—There is nothing to which desires do not soar. *( Takes and reads it; with joy ).* Very happy was your guess, my friend.

VIDUSHAKA—Please to favour me ; for I desire to hear what may be written on it.

URVASHI—Well said, sir ; you have proved yourself a town-gallant.

KING—Listen. ( *Reads* ).

" Lord, if I am indeed, what in your ignorance, you make me out to be, towards you who love me, how

णं मे लुलिअ-पारिजाअ-सअणिज्जअम्मि होन्ति ।
णन्दण-वण-वाआ वि अच्चुण्हआ सरीरए ॥ १३ ॥

स्वामिन् संभाविता यथाहं त्वया अज्ञाता ।
तथानुरक्तस्य यदि नाम तवोपरि ॥ १२ ॥
ननु मम लुलितपारिजातशयनीये भवन्ति ।
नन्दनवनवाता अप्यत्युष्णकाः शरीरके ॥ १४ ॥

उर्वशी—किं णु क्खु संपदं भणिस्सदि । किं नु खलु सांप्रतं भणिष्यति ।

चित्रलेखा—जं भणिदं एव्व कमल-णालाअमाणेहिं अङ्गेहिं । ननु भणितमेव कमलनालायमानैरङ्गैः ।

विदूषकः—दिट्ठिआ मए विअ बुभुक्खिदेण सोत्थि-वाअणं उवलद्धं भवदा समासासणं । दिष्टया मयेव बुभुक्षितेन स्वस्तिवाचनमुपलब्धं भवता समाश्वासनम् ।

राजा—समाश्वासनमिति किमुच्यते ।

तुल्यानुरागपिशुनं ललितार्थबन्धं
पत्रे निवेशितमुदाहरणं प्रियायाः ।
उत्पक्ष्मणो मम सखे मदिरेक्षणाया-
स्तस्याः समागतमिवाननमाननेन ॥ १४ ॥

उर्वशी—एत्थ णो सम-विभाआ पीदी । अत्र आवयोः समविभागा प्रीतिः ।

राजा—वयस्य अङ्गुलीस्वेदेन दूष्येरन्नक्षराणि । धार्यता-मयं प्रियायाः स्वहस्तः ।

विदूषकः—[ गृहीत्वा ] किं दाणिं तत्तभोदी उव्वसी भवदो मणोरहाणं कुसुमं दंसिअ फले विसंवददि । किमिदानीं तत्रभवत्युर्वशी भवतो मनोरथानां कुसुमं दर्शयित्वा फले विसंवदति ।

is it that even the heavenly breezes are felt to be so hot to my body even while reclining on a bed of crushed *Parijata* flowers? [12—13]

URVASHI—What, indeed, would he say now?

CHITRALEKHA—Has not he already said, with his limbs acting the part of the lotus-stalk?

VIDUSHAKA—Fortunately now my friend has as much cause for comfort as I should have if I receive a present (*just*) when I feel hungry.

KING—How say you! cause for comfort?

This song of the beloved one, indicative of equal love, and charming in its import, which is put on this leaf, is, as it were, the face of her, with its upturned eyelashes and its bewitching eyes, coming close to my face. [14]

URVASHI—Ours, then, is a case of reciprocal love.

KING—Friend, the sweat of my fingers might soil the characters; do you, therefore, hold this my beloved's autograph.

VIDUSHAKA—(*Holding*). Will the lady Urvashi, now when she has shown you the blossom of your desires, fail to show you the fruit thereof?

उर्वशी—हला जाव उवगमण-कादरं हिअअं पज्जवत्थावेमि दाव तुमं से अत्ताणं दंसिअ जं मे खमं तं भणाहि। हला यावदुपगमनकातरं हृदयं पर्यवस्थापयामि तावत् त्वमस्मै आत्मानं दर्शयित्वा यन्मम क्षमं तद् भण ।

चित्रलेखा—[ तिरस्करिणीमपनीय राजानमुपेत्य ] जेदु जेदु महाराओ । जयतु जयतु महाराजः ।

राजा—[ सहर्षम् ] स्वागतं भवत्यै । भद्रे

न तथा नन्दयसि मां सख्या विरहिता तया ।
संगमे पूर्वदृष्टेव यमुना गङ्गया विना ॥ १५ ॥

चित्रलेखा—णं पढमं मेह-राई दीसदि पच्छा विज्जुलदा। ननु प्रथमं मेघराजिर्दृश्यते पश्चाद् विद्युल्लता ।

विदूषकः—[ अपवार्य ] कहं ण एसा उव्वसी । ताए तत्तहोदीए अहिमदा सहअरी । कथं नैषा उर्वशी । तस्यास्तत्रभवत्या अभिमता सहचरी ।

चित्रलेखा—उव्वसी महाराअं सिरसा पणमिअ विण्णवेदि । उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति ।

राजा—किमाज्ञापयति ।

चित्रलेखा—मह सुरारि-संभवे दुज्जादे महाराओ एव्व सरणं आसि । सा अहं तुह दंसण-समुत्थेण मअणेण बलिअं बाहीअमाणा भूओ वि महाराएण अणुकम्पणीअ त्ति । मम सुरारिसंभवे दुर्जाते महाराज एव शरणमासीत् । साहं तव दर्शनसमुत्थेन मदनेन बलवद् बाध्यमाना भूयोऽपि महाराजेन अनुकम्पनीयेति ।

राजा—भद्रमुखि

पर्युत्सुकां कथयसि प्रियदर्शनां ता-
मार्तिं न पश्यसि पुरूरवसं तदर्थे ।

URVASHI—Well, friend, while I compose my heart which has grown faint at the prospect of meeting him, do you disclose yourself and say what is proper about me.

CHITRALEKHA—( *Removing the Tiraskarini and approaching the King* ). Glory, Glory, to our Lord!

KING—( *With joy* ). Welcome, dear Lady. Fair lady,

In the absence of that dear friend of yours, you give me no more joy than does the Yamuna, first seen at the confluence, in the absence of the Ganges. [15]

CHITRALEKHA—Well, the clouds come first, and then the lightening.

VIDUSHAKA—( *Aside* ). How! This is not the lady Urvashi; but the dear friend of Her Ladyship!

CHITRALEKHA—Urvashi bows down her head before the King, and makes the request—

KING—What are her commands?

CHITRALEKHA—That in her ( former ) peril caused by the enemy of the gods, Your Majesty gave her protection; she, therefore, prays that on this occasion, too, when fiercely assailed by love that has arisen at your sight, Your Majesty should take compassion on her.

KING—Dear Lady,

You tell me that the fair one is pining in love, but you do not see how Pururavas is afflicted on her account. Alike is our request to the God of love; hot iron deserves to be welded with hot iron. [16]

साधारणोऽयमुभयोः प्रणयः स्मरस्य
तप्तेन तप्तमयसा घटनाय योग्यम् ॥ १६ ॥

चित्रलेखा—[ उर्वशीमुपेत्य ] हला एहि । तुवत्तो वि णिद्दअदरं मअणं देक्खिअ पिअदमस्स दे दूदि म्हि संवुत्ता । सखि एहि । त्वत्तोपि निर्दयतरं मदनं दृष्ट्वा प्रियतमस्य ते दूत्यस्मि संवृत्ता ।

उर्वशी—[ तिरस्करिणीमपनीय ] अम्महे लहुअं तुए उज्झिद म्हि । अहो लघु त्वया उज्झितास्मि ।

चित्रलेखा—इदो मुहुत्तादो जाणिस्सं का कं उज्झिस्सदि त्ति । आआरं दाव पडिवज्ज । इतो मुहूर्तात् ज्ञास्यामि का कामुज्झिष्यतीति । आचारं तावत् प्रतिपद्यस्व ।

उर्वशी—[ सव्रीडम् ] जेदु जेदु महाराओ । जयतु जयतु महाराजः ।

राजा—सुन्दरि

मया नाम जितं यस्य त्वयायं समुदीर्यते ।
जयशब्दः सहस्राक्षादागतः पुरुषान्तरम् ॥ १७ ॥

[ हस्ते गृहीत्वा एनामुपवेशयति । ]

विदूषकः—भोदि रण्णो पिअ-वअस्सो बम्हणो किं ण वन्दीअदि । भवति राज्ञः प्रियवयस्यो ब्राह्मणः किं न वन्द्यते ।

[ उर्वशी सस्मितं प्रणमति । ]

विदूषकः—सत्थि भोदीए । स्वस्ति भवत्यै ।

देवदूतः—[ नेपथ्ये ] चित्रलेखे त्वरयोर्वशीम् ।

मुनिना भरतेन यः प्रयोगो
भवतीष्वष्टरसाश्रयो नियुक्तः ।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टुमनाः सलोकपालः ॥ १८ ॥

CHITRALEKHA—( *Approaching Urvashi* ). Come, friend; seeing that Love afflicts him more relentlessly than he does you, I have become the messenger of your beloved.

URVASHI—( *Removing the Tiraskarini* ). Ah, how suddenly have you deserted me!

CHITRALEKHA—I will soon see who deserts whom. But now offer your salutation.

URVASHI—( *Bashfully* ). Victory to the King!

KING—Fair Lady,

Surely have I triumphed, since the word 'victory' which from your lips has never hailed any other person save the thousand-eyed Indra, has now been used by you for (greeting) me. [17]

*( Takes her by the hand and leads her to a seat ).*

VIDUSHAKA—Fair lady, here is the dear friend of the King, a Brahmin, who remains unsaluted.

( *Urvashi bows to him smiling* ).

VIDUSHAKA—Prosperity attend you!

( *Behind the scenes a messenger of the Gods* )—

Chitralekha, hasten Urvashi.

The Lord of the Gods, together with the guardians of the quarters, desires to witness to-day the play, (so) gracefully acted, which the sage Bharata has taught you, and which contains (all) the eight poetic flavours. [18]

[ सर्वे कर्णं ददति । उर्वशी विषादं नाटयति ]

**चित्रलेखा—सुदं पिअ-सहीए देव-दूदस्स वअणं । अणुमाणीअदु महाराओ ।** श्रुतं प्रियसख्या देवदूतस्य वचनम् । अनुमान्यतां महाराजः ।

**उर्वशी—णत्थि मे वाआ ।** नास्ति मे वाक् ।

**चित्रलेखा—महाराअ पर-वसो अअं जणो । ता महा-राएण अब्भणुण्णादा इच्छदि देवेसु अणवरद्धं अत्ताणअं कादुं ।** महाराज परवशोऽयं जनः । तद् महाराजेनाभ्यनुज्ञाता इच्छति देवेष्वनपराद्धमात्मानं कर्तुम्

**राजा—**[ कथंचिद् वाचं व्यवस्थाप्य ] **नास्मि भवत्योरीश्वर-नियोगप्रत्यर्थी । स्मर्तव्यस्त्वयं जनः ।**

[ उर्वशी वियोगदुःखं रूपयन्ती सह सख्या निष्क्रान्ता । ]

**राजा—**[ सनिःश्वासम् ] **सखे वैयर्थ्यमिव चक्षुषः संप्रति ।**

**विदूषकः—**[ पत्रं दर्शयितुकामः ] **णं बत्तं** [ इत्यर्धोक्ते आत्मगतम् । ] **हद्धी हद्धी उव्वसी-दंसण-विम्हिदेण मए तं भुज्ज-वत्तअं पब्भट्टं पि हत्थादो पमादेण ण विण्णादं ।** नन्वेतत्-हा धिक् हा धिक् । उर्वशीदर्शनविस्मितेन मया तद् भूर्जपत्रं प्रभ्रष्टमपि हस्तात् प्रमादेन न विज्ञातम् ।

**राजा—भद्र किमसि वक्तुकाम इव ।**

**विदूषकः—मा भवं अङ्गाइं मुञ्चदु । दढं खु तुइ बद्ध-भावा उव्वसी । ण सा इदो-गदं अणुराअं सिढिलेदि ।** मा भवानङ्गानि मुञ्चतु । दृढं खलु त्वयि बद्धभावा उर्वशी । न सा इतोगतमनुरागं शिथिलयति ।

(*All Listen; Urvashi gesticulates disappointment*).

CHITRALEKHA—Has my dear friend heard the message of the Gods' messenger? So take your leave of my Lord.

URVASHI—I cannot speak.

CHITRALEKHA—My Lord, this person is subservient to another's will; hence by My Lord's leave she desires not to offend the Gods.

KING—(*Composing his speech with great difficulty*). I do not wish to interrupt the task which your Lords assign you. Onlv do not forget me.

(*Urvashi gesticulates sorrow at the parting, and departs with her companion*).

KING—(*Sighingly*). In vain, indeed, are we now gifted with sight.

VIDUSHAKA—(*Desiring to show the letter*) Why, this—(*When half through the words—to himself*). Why, bless me, I was so fascinated by the presence of Urvashi, that I did not mark that the Bhurja-leaf slipped unconsciously out of my hands.

KING—Friend, you were about to say something.

VIDUSHAKA—Let not my friend yield to despair. Urvashi is firmly attached to you; she will not relax her attachment towards you.

राजा—ममाप्येतदाशंसि मनः । तथा खलु प्रस्थाने

अनीशया शरीरस्य हृदयं स्ववशं मयि ।
स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निःश्वसितैरिव ॥ १९ ॥

विदूषकः—[ आत्मगतम् ] वेवदि मे हिअअं इमं वेलं तत्तभवदा तस्स भुज्ज-वत्तस्स णाम गेण्हिदव्वं भविस्सदि त्ति । वेपते मे हृदयमिमां वेलां तत्रभवता तस्य भूर्जपत्रस्य नाम ग्रहीतव्यं भविष्यतीति ।

राजा—केनेदानीं दृष्टिं विलोभयामि । [ स्मृत्वा ] आ उपनयतु भवान् भूर्जपत्रम् ।

विदूषकः—[ विषादं नाटयति । ] हन्त ण दीसदि । गदं उव्वसीए मग्गेण । हन्त न दृश्यते । गतमुर्वश्या मार्गेण ।

राजा—सर्वत्र प्रमादी वैधेयः । ननु विचिनोतु भवान् ।

विदूषकः—[ उत्थाय ] णं इदो भवे इदो भवे [ इति विचेतव्यं नाटयति ] नन्वितो भवेदितो भवेत् ।

[ ततः प्रविशति काशीराजपुत्री सपरिवारा देवी । ]

देवी—हञ्जे णिउणिए सच्चं तुए भणिदं इमं लदा-गेहं पविसन्तो अज्ज-माणवअ-सहाओ अज्जउत्तो दिट्ठो त्ति । हञ्जे निपुणिके सत्यं त्वया भणितमिदं लतागेहं प्रविशन्नार्यमाणवकसहाय आर्यपुत्रो दृष्ट इति ।

निपुणिका—किं अण्णहा भट्टिणी मए विण्णविद-पुव्वा । किमन्यथा भट्टिनी मया विज्ञापितपूर्वा ।

देवी—तेण हि लदन्तरिदा सुणिस्सं दाव से वीसद्धामन्तिदाणि । जं तुए कहिदं तं सच्चं ण व त्ति । तेन हि लतान्तरिता श्रोष्यामि तावदस्य विश्रब्धामन्त्रितानि । यत् त्वया कथितं तत् सत्यं न वेति ।

KING—My mind, too, is filled with the same hope. For at the time of departing, she,

Not mistress of her own person, seemed to lodge her heart in mine, free as she was to dispose of it, through her sighs indicated by the panting of her bosom. [19]

VIDUSHAKA—( *To himself* ). How my heart trembles lest my friend should now mention that Bhurja-leaf !

KING—What shall now console my eyes ? (*Remembering*). Well, friend, give me the Bhurja-leaf.

VIDUSHAKA—( *Gesticulates despair* ). Dear me, it not to be seen—has gone after Urvashi.

KING—A blundering fool, everywhere ! Will you not search for it ?

VIDUSHAKA—( *Rising* ). May be, it is here, may be, it is there.

( *Gesticulates searching it* ).

( *Enter Queen, the daughter of the King of Kasi, together with her retinue* ).

QUEEN—Girl Nipunika, did you tell me the truth when you said you saw my noble Lord entering this arbour with the noble Manavaka ?

NIPUNIKA—Have I ever told a falsehood to my mistress ?

QUEEN—Well, then, screening myself behind the creepers, I will just hear his confidential talk—whether what you me told is right or not.

**निपुणिका**---जं भट्टिणी आणवेदि । यद् भट्टिनी आज्ञापयति।

**देवी**---[ परिक्रम्य ] हञ्जे णिउणिए किं एदं जिण्ण-चीरं विअ इदोमुहं दक्खिण-मारुदेण आणीअदि । हञ्जे निपुणिके किमेतज्जीर्णचीरमिव इतोमुखं दक्षिणमारुतेन आनीयते ।

**निपुणिका**---[ विभाव्य ] भट्टिणि पडिवत्तण-विभाविदक्खरं भुअ-वत्तं खु एदं । हन्त भट्टिणीए एव्व णेउर-कोडीए लग्गं । [ गृहीत्वा ] कहं । वाईअदु । भट्टिनि परिवर्तनविभाविताक्षरं भूर्जपत्रं खल्वेतत् । हन्त भर्त्र्या एव नूपुरकोट्या लग्नम् । कथम् । वाच्यताम् ।

**देवी**---अणुवाएहि दाव णं । जदि अविरुद्धं तदो सुणिस्सं । अनुवाचय तावदेतत् । यदि अविरुद्धं ततः श्रोष्यामि ।

**निपुणिका**---[ तथा कृत्वा ] भट्टिणि तं एव्व कोलीणं विअ पडिहादि । भट्टारअं उद्दिसिअ उव्वसीए कव्व-बन्धो त्ति तक्केमि । अज्जमाणवअ-पमादेण अम्हाणं हत्थं गदो त्ति । भट्टिनि तदेव कौलीनमिव प्रतिभाति । भर्तारमुद्दिश्य उर्वश्या काव्यबन्ध इति तर्कयामि । आर्यमाणवकप्रमादेन आवयोर्हस्तं गत इति ।

**देवी**---तेण हि से गहिदत्था होमि । तेन ह्यस्य गृहीतार्था भवामि ।

[ निपुणिका राज्ञा पूर्ववाचितं वाचयति । ]

**देवी**---एत्थ इमिणा एव्व उवाअणेण अच्छरा-कामुअं पेक्खामि । [इति परिजनसहिता लतागृहं परिक्रामति।] अत्र अनेनैव उपायनेन अप्सर:कामुकं पश्यामि ।

**विदूषकः**---भो वअस्स किं एदं पमद-वण-समीव-गद-कीलापव्वद-पज्जन्ते दीसदि । भो वयस्य किमेतत् प्रमदवनसमीपगतक्रीडापर्वतपर्यन्ते दृश्यते ।

NIPUNIKA—As the mistress commands.

QUEEN—( *Moving about* ). Girl Nipunika what could this be that is driven along towards us by the southern breeze—looking like a tattered shred of a garment?

NIPUNIKA—( *Looking closely* ). Mistress, this is surely a Bhurja-leaf on which are to be seen some characters when it is turned round (by the wind). Why, it has clung to the end of my mistress' anklet. How! Shall I read (it)?

QUEEN—Read it to yourself. If there is nothing objectionable, I will hear it.

NIPUNIKA—( *Doing as bidden* ). Mistress, it is that same (story)-what looks like a scandal. It seems to me to be some song of Urvashi addressed to my Lord. It has fallen into our hands by the heedlessness of the noble Manavaka.

QUEEN-Well then, I should like to know its contents. ( *Nipunika reads what was formerly read out by the King*).

QUEEN—Well, I will see this nymph-enamoured person here, with this very present.

( *She goes round the arbour along with her retinue* ).

VIDUSHAKA—Well, friend, what do you see yonder at the edge of the pleasure-mound near the Pramadavana?

राजा—[ उत्थाय ] भगवन् वसन्तप्रिय दक्षिणवायो ।

वासार्थं हर संभृतं सुरभिणा पौष्पं रजो वीरुधां
किं मिथ्या भवतो हृतेन दयितास्नेहस्वहस्तेन मे ।
जानीते हि मनोविनोदनफलैरेवंविधैर्धारितं
कामार्तं जनमङ्गनां प्रति भवानालक्षितप्रार्थनः ॥२०॥

निपुणिका—भट्टिणि एदस्स एव्व अण्णेसणा वट्टदि । भट्टिनि एतस्यैवान्वेषणा वर्तते ।

देवी—पेक्खामि । पश्यामि ।

विदूषकः—भो मिलाअमाण-केसरच्छविणा मोर-पिच्छेण विप्पलद्धो म्हि । भो म्लायमानकेसरच्छविना मयूरपिच्छेन विप्रलब्धोस्मि ।

राजा—सर्वथा हतोस्मि ।

देवी—[ उपेत्य ] अज्जउत्त अलं आवेएण । एदं तं भुज्जवत्तं । आर्यपुत्र अलमावेगेन । एतत् तद् भूर्जपत्रम् ।

राजा—[ ससंभ्रमम् ] अये देवी । स्वागतं देव्यै ।

विदूषकः—[ अपवार्य ] दुरागदं दाणिं संवुत्तं । दुरागतमिदानीं संवृत्तम् ।

राजा—[ जनान्तिकम् ] सखे किमत्र प्रतिविधेयम् ।

विदूषकः—लोत्तेण गहिदस्स कुम्भीलअस्स अत्थि वा पडिवअणं । लोत्रेण गृहीतस्य कुम्भीरकस्य अस्ति वा प्रतिवचनम् ।

राजा—देवि नेदं मया मृग्यते । स खलु परसमन्वेषणार्थमारम्भोयम् ।

देवी—जुज्जदि अत्तणो सोहग्गं पच्छादेदुं । युज्यत आत्मनः सौभाग्यं प्रच्छादयितुम् ।

KING—( *Rising* ). Noble breeze of the south, the friend of spring,

You may remove from the plants the flowery-pollen produced by spring for (scattering). perfume; but why vainly rob me of those characters written through love by my beloved with her own hand? For surely you, who are known to have loved Anjana, know that a love-afflicted person lives on such means intended to solace his heart. [20]

NIPUNIKA—Mistress, they are searching this very thing.

QUEEN—I see.

VIDUSHAKA—O, I was deceived by a peacock-feather of the colour of a faded Kesara flower.

KING—So I am ruined everyway!

QUEEN—( *Approaching* ). Noble Lord do not grieve. Here is the Bhurja-leaf.

KING—( *Confusedly* ) Oh, the Queen. Welcome, Queen.

VIDUSHAKA—(But) now it is the reverse of welcome.

KING—( *Aside* ). Friend, how to meet the present ( situation )?

VIDUSHAKA—How can a thief answer for himself, when caught with a portion of the stolen article on his person?

KING—Queen, this was not the object of my search; but I was searching some other object.

QUEEN—It is but proper to conceal one's good fortune.

विदूषकः—भोदि तुवरेहि से भोअणं जं पित्तोवसमणसमत्थं होदि। भवति त्वरयास्य भोजनं यत् पित्तोपशमनसमर्थं भवति।

देवी—णिउणिए सोहणं खु बम्हणेण आसासिदो वअस्सो। निपुणिके शोभनं खलु ब्राह्मणेन आश्वासितो वयस्यः।

विदूषकः—भोदि णं पेक्ख आसासिदो पिसाओ वि भोअणेण। भवति ननु पश्य आश्वासितः पिशाचोपि भोजनेन।

राजा—मूर्ख बलादपराधिनं मामापादयसि।

देवी—णत्थि भवदो अवराहो। अहं एव्व एत्थ अवरद्धा। जा पडिऊल-दंसणा भविअ अग्गदो दे चिट्ठामि। इदो अहं गमिस्सं। [कोपं नाटयित्वा प्रस्थिता।] नास्ति भवतोपराधः। अहमेवात्र अपराद्धा। या प्रतिकूलदर्शना भूत्वा अग्रतस्ते तिष्ठामि। इताह गमिष्यामि।

राजा—

अपराधी नामाहं प्रसीद रम्भोरु विरम संरम्भात्।
सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः ॥२१॥

[इति पादयोः पतति।]

देवी—[आत्मगतम्] मा खु लहु-हिअआ अहं अणुणअं बहु मण्णे। किं दु अदक्खिण्ण-किदस्स पच्छादावस्स भाअमि। [राजानमपहाय सपरिवारा निष्क्रान्ता।] मा खलु लघुहृदयाहमनुनयं बहु मन्ये। किं तु अदाक्षिण्यकृतात् पश्चातापाद् बिभेमि

विदूषकः—पाउस-णदी विअ अप्पसण्णा गदा देवी। उट्ठेहि। प्रावृण्नदीव अप्रसन्ना गता देवी। उत्तिष्ठ।

राजा—[उत्थाय] वयस्य नेदमनुपपन्नम्। पश्य

प्रियवचनशतोपि योषितां
दयितजनानुनयो रसादृते।

VIDUSHAKA—Madam, quickly get ready his dinner, which will be an effectual remedy for his bile.

QUEEN—Nipunika, how well has the Brahmin consoled his friend!

VIDUSHAKA—Madam, don't you see even a ghost is laid by dinner.

KING—Blockhead, how falsely you represent me as guilty!

QUEEN—It is not your fault. It is I that am at fault, since I stand before you even when my presence is disagreeable. I will go from hence.

(*Gesticulates anger and starts to go*).

KING—I confess my guilt; be pleased, O fair one, curb your resentment; for when the master is angry it cannot be but that the servant is at fault. [21]

(*Prostrates himself at her feet*).

QUEEN—(*To himself*). I am not so light-hearted as to take his importunities seriously. But I am afraid of the remorse that would be caused by my incivility

(*Leaves the King, and departs along with her retinue*).

VIDUSHAKA—Like a turbid river in the rains, Her Majesty has gone off in (high) dudgeon. Rise.

KING—(*Rising*). Friend, this is not unreasonable.

The solicitations of a favoured person although full of hundreds of flattering compliments will not

प्रविशति हृदयं न तद्विदां
मणिरिव कृत्रिमरागयोजितः ॥ २२ ॥

विदूषकः—अणुऊलं एत्थभवदो एदं । ण हु अक्खि-दुक्खिदो अहिमुहे दीव-सिहं सहेदि । अनुकूलमत्रभवत एतत् । न खल्वक्षिदुःखितः अभिमुखे दीपशिखां सहते ।

राजा—मा मैवम् । उर्वशीगतमनसोऽपि मे स एव देव्यां बहुमानः । किं तु प्रणिपातलङ्घनादहमस्यां धैर्यमवलम्बिष्ये ।

विदूषकः—चिट्ठदु दाव भवदो धीरदा । बुभुक्खिदस्स बम्हणस्स जीविदं अवलम्बदु भवं । समओ खु ण्हाण-भोअणं सेविदुं । तिष्ठतु तावद् भवतो धीरता । बुभुक्षितस्य ब्राह्मणस्य जीवितमवलम्बतां भवान् । समयः खलु स्नानभोजनं सेवितुम् ।

राजा—[ ऊर्ध्वमवलोक्य ] गतमर्धं दिवसस्य ।

उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्यालीयते षट्पदः ।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते ॥२३॥

[ इति निष्क्रान्ताः सर्वे । ]

इति द्वितीयोऽङ्कः ।

touch a woman's heart in the absence of (real) love; just as a gem artificially coloured finds little favour with those who are the connoisseurs (of that art). [22]

VIDUSHAKA—This is quite agreeable to you. For a person whose eyes are dazzled will not bear the lamp-flame in his face.

KING—Do not think thus. Although my heart is given to Urvashi, yet I retain my former regard for the Queen. Only I will face her courageously now, since she has so disdained my prostrations.

VIDUSHAKA—Talk not of your courage. But please to sustain the life of a famished Brahmin It is indeed (high) time to bathe and eat.

KING—(*Looking upwards*). Half the day is over.

Exhausted by the heat the peacock now rests in the cool basin round the root of (yonder) tree; the bees lie snugly inside the Karnikara buds, having forced them open at the top, the water-fowl leaves the heated water and lurks in the lotus-plant on the brink; while the drooping parrot in its cage in the pleasure-house calls for water. [23]

(*Exeunt Omnes*)

HERE ENDS THE SECOND ACT

# तृतीयोऽङ्कः ।

[ ततः प्रविशतो भरतशिष्यौ । ]

प्रथमः—सखे पल्लव महेन्द्रसदनं गच्छतोपाध्यायेन त्वमासनं प्रतिग्राहितः । अग्निशरणसंरक्षणाय स्थापितोऽहम् । अतः खलु पृच्छामि । अपि गुरोः प्रयोगेण दिव्या परिषदाराधिता ।

द्वितीयः—गालव ण आणे आराहिदा ण वेत्ति । तस्सिं उण सरस्सई-किद-कव्व-बन्धे लच्छी-सअंवरे तेसु तेसु रसन्तरेसु तम्मआ आसि । किं तु—गालव न जाने आराधिता न वेति । तस्मिन् पुनः सरस्वतीकृतकाव्यबन्धे लक्ष्मी-स्वयंवरे तेषु तेषु रसान्तरेषु तन्मयी आसीत् । किं तु—

प्रथमः—सदोषावकाश इव ते वाक्यशेषः ।

द्वितीयः—आम । तहिं उव्वसीए वअणं पमाद-क्खलिदं आसि । आम् । तस्मिन्नुर्वश्या वचनं प्रमादस्खलितमासीत् ।

प्रथमः—कथमिव ।

द्वितीयः—लच्छी-भूमिआए वट्टमाणा उव्वसी वारुणी-भूमिआए वट्टमाणाए मेणआए पुच्छिदा । सहि समाअदा एदे तेलोक्कसुपुरिसा सकेसवा लोअ-वाला । कदमस्सिं दे भावाहिणिवेसो त्ति । लक्ष्मीभूमिकायां वर्तमाना उर्वशी वारुणीभूमिकायां वर्तमानया मेनकया पृष्टा । सखि समागता एते त्रैलोक्यसुपुरुषाः सकेशवा लोकपालाः । कतमस्मिंस्ते भावाभिनिवेश इति ।

प्रथमः—ततस्ततः ।

द्वितीयः—तदो ताए पुरिसोत्तमे त्ति भणिदव्वे पुरूरवे

## ACT III

(*Enter two disciples of Bharata*).

FIRST—Friend Pallava, you were asked to carry the seat by our preceptor when he had gone to Indra's palace, while I was left behind to keep watch over the holy fire. That is why I ask: Was the assembly of the Immortals pleased with the performance of our master?

SECOND—I do not know whether it was pleased or not. But then it quite lost itself in the various emotions of that play of Lakshmisvayamvara composed by Sarasvati. But—

FIRST—The rest of your sentence seems to imply that there is something wrong.

SECOND—Yes, for Urvashi stumbled in her part.

FIRST—How was it?

SECOND—Urvashi who played the part of Lakshmi was questioned by Menaka who played Varuni's part: Friend here are assembled the best men in the three worlds—the guardians of the spheres together with Keshava To whom inclines your heart?

FIRST—What then?

SECOND—Her reply should have been 'to Purushotta-

त्ति णिग्गदा वाणी। ततस्तस्याः पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी।

प्रथमः—भवितव्यानुविधायीनीन्द्रियाणि। न खलु तामभिक्रुद्धो गुरुः।

द्वितीयः—सा खु सत्ता उवज्झाएण। महिन्देण उण अणुगहिदा। सा खलु शप्ता उपाध्यायेन। महेन्द्रेण पुनरनुगृहीता।

प्रथमः—कथमिव।

द्वितीयः—जेण मम उवदेसो तुए लङ्घिदो तेण ण दे दिव्वं ठाणं हविस्सदि त्ति उवज्झाअस्स सावो। महिन्देण उण पेक्खणावसाणे लज्जावणद-मुही भणिदा अस्सि बद्धभावा सि तस्स मे रण-सहाअस्स राएसिणो पिअं वत्थ करणिज्जं। सा तुमं जहा-कामं पुरूरवसं उवचिट्ठ जाव सो तुइ दिट्ठसंताणो भोदि त्ति। येन ममोपदेशस्त्वया लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यतीति उपाध्यायस्य शापः। महेन्द्रेण पुनः प्रेक्षणावसाने लज्जावनतमुखी भणिता यस्मिन् बद्धभावासि तस्य मे रणसहायस्य राजर्षेः प्रियमत्र करणीयम्। सा त्वं यथाकामं पुरूरवसमुपतिष्ठस्व यावत्स त्वयि दृष्टसंतानो भवेदिति।

प्रथमः—सदृशं पुरुषान्तरविदो महेन्द्रस्य।

द्वितीयः—[ सूर्यमवलोक्य ] कहा-पसङ्गेण अम्हेहिं अवरद्धा अहिसेअ-वेला क्खु उवज्झाअस्स। ता एहि से पास-परिवत्तिणो होम। कथाप्रसङ्गेन अस्माभिरपराद्धा अभिषेकवेला खलूपाध्यायस्य। तदेह्यस्य पार्श्वपरिवर्तिनौ भवावः।

[ इति निष्क्रान्तौ। ]

मिश्रविष्कम्भकः॥

ma,' but instead, the words 'to Pururavas' escaped her lips.

FIRST—The senses are but the slaves of destiny. Was not our preceptor highly displeased with her

SECOND—Yes, he denounced a curse upon her, but she found favour with Mahendra.

FIRST—How so?

SECOND—'Since you have forgotten my instruction, you shall lose your divine place;' that was the curse of the preceptor; Mahendra, however, at the end of the performance said to her as she stood with her face bowed in shame, "The royal sage on whom you have set your heart, my ally in battles, is entitled to my favour. Do you, then, as you desire, remain with Pururavas till he beholds the child you will bear him."

FIRST—This was like Mahendra who knows other men's hearts.

SECOND—(*Looking at the Sun*). In the course of the talk, we have indeed passed over our preceptor's time of bathing. Come, then, let us approach him. (*Exeunt*)

END OF THE INTRODUCTORY SCENE

[ ततः प्रविशति कञ्चुकी ।

कञ्चुकी—

सर्वः कल्ये वयसि यतते लब्धुमर्थान् कुटुम्बी
पश्चात्पुत्रैरपहृतभरः कल्पते विश्रमाय ।
अस्माकं तु प्रतिदिनमियं साधयन्ती शरीरं
सेवाकारा परिणतिरहो स्त्रीषु कष्टोऽधिकारः ॥ १ ॥

[परिक्रम्य ।] आदिष्टोऽस्मि सनियमया काशीराजपुत्र्या व्रतसंपादनार्थं मया मानमुत्सृज्य निपुणिकामुखेन पूर्वं याचितो महाराजः । तदेव मद्वचनाद् विज्ञापयेति । यावदिदानीमवसितसंध्याजाप्यं महाराजं पश्यामि । [ परिक्रम्य अवलोक्य च ] रमणीयः खलु दिवसावसानवृत्तान्तो राजवेश्मनि । इह हि

उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणो
धूपैर्जालविनिःसृतैर्वलभयः संदिग्धपारावताः ।
आचारप्रयतः सपुष्पबलिषु स्थानेषु चार्चिष्मतीः
संध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धो जनः ॥२॥

[ नेपथ्याभिमुखं दृष्ट्वा ] अये इत एव प्रस्थितो देवः ।

परिजनवनिताकरार्पिताभिः
परिवृत इव विभाति दीपिकाभिः ।
गिरिरिव गतिमानपक्षलोपा-
दनुतटपुष्पितकर्णिकारयष्टिः ॥ ३ ॥

यावदेनमवलोकनमार्गे स्थितः प्रतिपालयामि ।

[ ततः प्रविशति यथानिर्दिष्टो राजा विदूषकश्च । ]

राजा—[ आत्मगतम् ]

*( Then Enter a Chamberlain )*

CHAMBERLAIN—As long as life is vigorous, a married man strives to acquire wealth, and afterwards relieved by his sons of the burden ( of family cares ) he takes rest ; but to persons like us old age is a veritable servitude that saps the body every day ! Alas, for the duty of watching over women ! [ I ]

( *Walking about* ), I have been told by the daughter of the King of Kashi who has engaged herself in a vow, that for the fulfilment of that vow she having laid aside all sense of pride, has already requested His Majesty's presence through Nipuṇika. I have been now asked to make the same request on her behalf. So I will see my Lord who has now finished his evening prayer.

( *Walking about and observing* ). The scene at the palace at the close of the day is certainly so delightful For here.

The peacocks drowsing at the approach of night look like sculptured ( figures ) on their perches ; the pigeons on the terrace-tops are scarcely distinguishable from the incense that flows through the lattices : and the old matrons of the inner apartment ready to perform the customary acts (of the hour) are distributing in places adorned with flower-offerings the auspicious lights of evening that are burning brightly. [ 2 ]

(*Looking towards the curtain*)–Ah My Lord is coming hither.

Surrounded by the torches borne in their hands by the female attendants, he looks like a mountain moving because its wings are unclipt, that has the tall, thin, Karnikara trees in full blossom on both its sides. [ 3 ]

I shall, therefore, keeping him within sight, wait for him.

( *Enter King as described and Vidushaka* ).

KING—( *To himself* ).

कार्यान्तरितोत्कण्ठं दिनं मया नीतमनतिकृच्छ्रेण ।
अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या ॥ ४ ॥

कञ्चुकी—[ उपगम्य ] जयतु जयतु देवः । देवी विज्ञापयति मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः । तत्र संनिहितेन देवेन प्रतिपालयितुमिच्छामि यावद् रोहिणीसंयोग इति ।
राजा—आर्य लातव्य विज्ञाप्यतां देवी यत्ते छन्द इति ।
कञ्चुकी—यदाज्ञापयति देवः ।

[ इति निष्क्रान्तः ]

राजा—वयस्य किं परमार्थत एव देव्या व्रतनिमित्तोऽयमारम्भः स्यात् ।
विदूषकः—भो तक्केमि जाद-पच्छादावा तत्तभोदी वदावदेसेण भवदो पणिपाद-लङ्घणं पमज्जिदु-काम त्ति । भोः तर्कयामि जातपश्चात्तापा तत्रभवती व्रतापदेशेन भवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति ।
राजा—उपपन्नं भवानाह । तथा हि

अवधूतप्रणिपाताः पश्चात्संतप्यमानमनसोऽपि ।
निभृतैर्व्यपत्रपन्ते दयितानुनयैर्मनस्विन्यः ॥ ५ ॥

तदादेशय मणिहर्म्यपृष्ठमार्गम् ।
विदूषकः—इदो इदो भवं । इमिणा गङ्गा-तरङ्ग-सस्सिरीएण फलिहमणि-सोवाणेण आरोहदु भवं पदोसावसररमणिज्जं मणिहम्मिअं । इत इतो भवान् । एतेन गङ्गातरङ्गसश्रीकेण स्फटिकमणिसोपानेन आरोहतु भवान् प्रदोषावसररमणीयं मणिहर्म्यम् ।
राजा—आरोहाग्रतः ।

[ सर्वे सोपानोपसर्पणं रूपयन्ति । ]

विदूषकः—[ विलोक्य ] भो पच्चासण्णेण चन्दोदएण

I could pass the day without much difficulty as the cares of state drowned all anxious thoughts of love; but how am I to pass the night which, on account of the absence of any diversion, will be ( drearily ) long in its watches? [4]

CHAMBERLAIN—(*Approaching.*) Glory to our Lord! Her Majesty requests: "The terrace of the crystal pavilion affords a glorious view of the Moon; so in the presence of My Lord I desire to wait there till the Moon enters the asterism Rohini."

KING—Noble Latavya, say to the Queen, "(Do) as it pleases you."

CHAMBERLAIN—As Your Majesty commands.

( *Exit*).

KING—Friend, do you think it is really on account of a vow that the Queen undertakes these proceedings?

VIDUSHAKA—Well, my view is that her ladyship, stung with remorse, wishes to efface the indignity with which she treated your prostration, under the pretext of her (present) vow.

KING—You speak the truth; for,

Proud women having slighted the prostrations of their lord, are subsequently filled with repentence; yet with all this they are secretly ashamed of doing any acts conciliating their beloved ones. [5]

VIDUSHAKA—This way, this way, sir. Here, up the flight of crystal steps gleaming ( white ) like the waves of the Ganges, do you, sir, ascend the crystal palace which looks so lovely at eventide.

KING—Do you ascend first.

( *All act ascending the flight of steps* ).

होदव्वं । अह तिमिर-रेईअमाणं पुव्व-दिसा-मुहं आ-लोअ-सुहअं दीसदि । भोः प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम् ।
१२ यथा तिमिररिंच्यमानं पूर्वदिशामुखमालोकसुभगं दृश्यते ।

राजा—सम्यगाह भवान् ।

उदयगूढशशाङ्कमरीचिभिस्तमसि दूरमितः प्रतिसारिते ।
अलकसंयमनादिव लोचने हरति मे हरिवाहनदिङ्मुखम् ॥६॥

विदूषकः—ही ही । भो एसो खण्ड-मोदअ-सस्सिरीओ उदिदो राआ दुआदीणं । ही ही । भोः एष खण्डमोदकसश्रीक उदितो राजा द्विजातीनाम् ।

राजा—[ सस्मितम् ] सर्वत्रौदरिकस्य अभ्यवहार्यमेव विषयः [ प्राञ्जलिः प्रणिपत्य ] भगवन्क्षपानाथ

रविमावसते सतां क्रियायै सुधया तर्पयते सुरान् पितॄंश्च ।
तमसां निशि मूर्छतां निहन्त्रे हरचूडानिहितात्मने नमस्ते ॥७॥

[ उत्तिष्ठति ]

विदूषकः—भो बम्हणसंकामिदक्खरेण दे पिदामहेण
३ अब्भणुण्णादो आसण-ट्ठिदो होहि जाव अहं पि सुहा-सीणो होमि । भोः ब्राह्मणसंक्रामिताक्षरेण ते पितामहेन अभ्यनुज्ञात आसनस्थितो भव यावदहमपि सुखासीनो भवामि ।

६ राजा—[ विदूषकवचनं परिगृह्य उपविष्टः । परिजनं विलोक्य ] अभिव्यक्तायां चन्द्रिकायां किं दीपिकापौनरुक्त्येन । विश्राम्यन्तु भवत्यः ।

परिजनः—जं देवो आणवेदि । यद् देव आज्ञापयति ।

[ इति निष्क्रान्तः ]

VIDUSHAKA—O, the Moon is just about to rise since the Eastern horizon, relieved of darkness is so lovely to view.

KING—You spoke the truth.

For, now that the (evening) gloom retires before the rays of the Moon that is hid behind the rising mountain, the face of the East captivates my eyes as though her (masses of) hair are pound up. [6]

VIDUSHAKA—Ha! Ha! Yonder riseth the King of the twice-born, looking like a broken ball of sweets!

KING—(*Smiling*). A gourmet thinks of nothing else but food everywhere.

(*Bowing with folded hands*) Divine Lord of the Night

Bow to you who dwell in the sun to enable the righteous to perform the religious rites; who regale the gods and the Manes with ambrosia; who destroy darkness prevailing at night, and who have placed yourself in the crest of Hara. [7]

(*Rises*)

VIDUSHAKA—Sir, through this Brahmin to whom he communicates his words, your grand-sire bids you sit, that I too, may repose myself.

KING—(*Saying 'yes sits; looking at the attendants*). When the Moon shines splendidly, why the superfluous light of lamps? Rest ye.

ATTENDANTS—As Your Majesty commands.

(*Exeunt*)

राजा—[ चन्द्रमसमवलोक्य ] वयस्य परं मुहूर्तादागमनं देव्याः । तद् विविक्ते कथयिष्यामि स्वामवस्थाम् ।

विदूषकः—णं दीसदि एव्व सा किं दु तारिसं अणुराअं पेक्खिअ सक्कं आसा-बन्धेण अत्ताणं धारेदुं । ननु दृश्यत एव सा किं तु तादृशमनुरागं दृष्ट्वा शक्यमाशाबन्धेन आत्मानं धारयितुम् ।

राजा—एवमेतत् । बलवान् पुनर्मम मनसोभितापः ।

नद्या इव प्रवाहो विषमशिलासंकटस्खलितवेगः ।
विघ्नितसमागमसुखो मनसिशयः शतगुणोभवति ॥८॥

विदूषकः—जहा परिहीयमाणेहिं अङ्गेहिं अहिअं सोहसि तहा अदूरे पिअ-समागमं ते पेक्खामि । यथा परिहीयमानैरङ्गैरधिकं शोभसे तथा अहं प्रियासमागमं ते पश्यामि ।

राजा—[ निमित्तं सूचयित्वा ] वयस्य

वचोभिराशाजननैर्भवानिव गुरुव्यथम् ।
अयं मां स्पन्दितैर्बाहुराश्वासयति दक्षिणः ॥ ९ ॥

विदूषकः—ण हु अण्णहा बम्हणस्स वअणं । न खलु अन्यथा ब्राह्मणस्य वचनम् ।

[ राजा सप्रत्याशस्तिष्ठति ]

[ प्रविश्य आकाशयानेन अभिसारिकावेषा उर्वशी चित्रलेखा च । ]

उर्वशी—[ आत्मानं विलोक्य ] हला चित्तलेहे अवि रोअदि दे अअं मे अप्पाभरण-भूसिदो णीलंसुअ-परिग्गहो अहिसारिआ-वेसो । हला चित्रलेखे अपि रोचते तेऽयं मे अल्पाभरणभूषितो नीलांशुकपरिग्रहोऽभिसारिकावेषः ।

चित्रलेखा—णत्थि मे वाआ-विहवो पसंसिदुं । इदं तु

KING—( *Looking at the Moon* ). Friend, the Queen will be coming after a while; so now, in this solitude I will describe to you my condition.

VIDUSHAKA—Why, that is so manifest. But it is possible to keep up your spirits with hope considering the intensity of Urvashi's love for you.

KING—That is true; and yet severe is the agony of my heart.

> My fond desire becomes more fervid as ( fresh ) impediments obstruct the pleasure of union, as the current of a river checked by uneven rocks, splits itself into hundred streams. [8]

VIDUSHAKA—Since even with limbs attenuated you look more handsome, therefore, I argue that your meeting with the beloved is not far distant.

> KING—(*Showing that he perceives an omen.*) Friend my right arm by its pulsations soothes me that am heavily suffering, like you with hope-inspiring words. [9]

VIDUSHAKA--Surely the words of a Brahmin will never be falsified

( *The King is filled with hope revived* ).

( *Enter in the air Urvashi dressed as an Abhisarika and Chitralekha* ).

URVASHI—( *Looking at herself* ). Now dear Chitralekha, what say you to these blue robes of an Abhisarika thus scantily trimmed with ornaments?

चिन्तेमि । अवि णाम अहं पुरूरवा भवेअं त्ति । नास्ति मे वाग्विभवः प्रशंसितुम् । इदं तु चिन्तयामि । अपि नामाहं
१२ पुरूरवा भवेयमिति ।

उर्वशी—सहि मदणो क्खु तुमं आणवेदि ! सिग्घं णेहि मं तस्स सुहअस्स वसदिं । सखि मदनः खलु त्वामाज्ञापयति ।
१६ शीघ्रं नय मां तस्य सुभगस्य वसतिम् ।

चित्रलेखा—णं एदं परिवत्तिदं विअ केलास-सिहरं पिअदमस्स दे भवणं उवगद म्ह । नन्वेतत् परिवर्तितमिव
१८ कैलासशिखरं प्रियतमस्य ते भवनमुपगते स्वः ।

उर्वशी—तेण हि पहावदो जाणाहि दाव कहिं सो मम हिअअचोरो किं वा अणुचिट्ठदि त्ति । तेन हि प्रभावात्
२१ जानीहि तावत् क स मम हृदयचोरः किं वानुतिष्ठतीति ।

चित्रलेखा—[ ध्यात्वा । आत्मगतम् ] भोदु कीलिस्सं दाव एदाए । [ प्रकाशम् ] हला एसो मणोरह-लद्ध-पिआ-समा-
२४ अम-सुहं अणुहवन्तो उवहोअ-क्खमे ओआसे चिट्ठदि । भवतु क्रीडिष्यामि तावदेतया । हला एष मनोरथलब्धप्रियासमागम-सुखमनुभवन्नुपभोगक्षमेऽवकाशे तिष्ठति ।

२७ [ उर्वशी विषादं नाटयति । ]

चित्रलेखा—मुद्धे का उण अण्णा चिन्ता पिआ-समाअमस्स । मुग्धे का पुनरन्या चिन्ता प्रियासमागमस्य ।

३० उर्वशी—[ सोच्छ्वासम् ] अदक्खिणं संदेहदि मे हिअअं । अदक्षिणं संदिग्धे मे हृदयम् ।

चित्रलेखा—[ विलोक्य ] एसो मणि-हम्मिअ-गदो वअस्स
३३ मेत्त-सहाओ राएसी । ता एहि उवसप्पाम णं । एष मणिहर्म्यगतो वयस्यमात्रसहायो राजर्षिः । तदेहि । उपसर्पाव एनम् ।

३६ उभे अवतरतः ।

राजा—वयस्य रजन्या सह विजृम्भते मदनबाधा ।

CHITRALEKHA—Words fail me to describe it. But this is what is in my mind Would that I were Pururavas!

URVASHI—Dear, Love himself bids you-take me quick to that loved one's dwelling.

CHITRALEKHA—Here we come to your lover s palace which looks like the summit of Kailasa changed into another form

URVAS —Know, then, through your power where he is, that thief who-has stolen my heart, and what employs him.

CHITRALEKHA—(*Contemplating to herself*). Well, I shall chaff her a bit. (*Aloud*) Friend, here he is in a place fit for enjoyment, happy in the company of his beloved whom he has obtained according to his wishes.

(*Urvashi expresses despair*).

CHITRALEKHA—Child, but why any other thought about the company of the beloved?

URVASHI—(*Sighing*). My unkind heart becomes suspicious.

CHITRALEKHA—Here is the royal sage with his friend as his only attendant in the crystal palace. So come let us advance towards him.

(*They descend*).

KING—Friend, how do the torments of Love increase with the night!

उर्वशी—अणिब्भिण्णत्थेण इमिणा वअणेण आकम्पिदं मे हिअअं। अन्तरिदा एव्व सुणाम से सेरालावं जाव णो संसअ-च्छेदो होदि। अनिर्भिन्नार्थेन अनेन वचनेन आकम्पितं मम हृदयम्। अन्तरिते एव शृणुवः अस्य स्वैरालापं यावन्नौ संशयच्छेदो भवति।

चित्रलेखा—जं दे रोअदि। यत् ते रोचते।

विदूषकः—णं इमे अमिअ-गब्भा सेवीअन्तु चन्द-वादा। नन्वेते अमृतगर्भाः सेव्यन्तां चन्द्रपादाः।

राजा—वयस्य व्रणमाद्भिरनुपक्रम्योयमातङ्कः। पश्य।

कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो
न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः।
मनसिजरुजं सा वा दिव्या समालघयोहितुम्-

उर्वशी—का वा अवरा। का वापरा।

राजा—

रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥ १० ॥

उर्वशी—हिअअ दाणिं मं उज्झिअ इदो संकन्तेण तुए फलं उवलद्धं। हृदय इदानीं मामुज्झित्वा इतः संक्रान्तेन त्वया फलमुपलब्धम्।

विदूषकः—आम। अहंपि जदा मिट्ठ-हरिणी-मंस-भोअणं ण लहे तदा णं पत्थअन्तो संकित्तअन्तो आसासेमि। आम्। अहमपि यदा मिष्टहरिणीमांसभोजनं न लभे तदा एतत् प्रार्थयमानः संकीर्तयन्नाश्वसिमि।

राजा—संपद्यत इदं भवतः।

विदूषकः—भवं पि तं अचिरेण पाविस्सदि। भवानपि तामचिरेण प्राप्स्यति।

URVASHI—My heart is all in a flutter at these dubious words; let us, therefore, remain invisible and overhear his unreserved utterances till doubt be all dispersed.

CHITRALEKHA—Just as you please.

VIDUSHAKA—You should enjoy the rays of the Moon that are charged with ambrosia.

KING—Friend, small is the power of such remedies to mitigate this malady. Mark,

> Neither fresh flower-beds, nor the rays of the Moon, nor sandal-smearing all over the body nor jewel-necklaces will allay the pangs of Love; she alone—that woman divine can do it——

URVASHI—And who else?

> KING—Or secret converse regarding her can mitigate (the suffering). [10]

URVASHI—My heart, now have you reaped the fruit of having gone over to him after deserting me.

VIDUSHAKA—Quite so. I too, when I do not get a dinner of dainty venison, but feel a desire for it, take comfort in speaking about it.

KING—But you get that.

VIDUSHAKA—And you too will get it in a short time.

राजा—सखे एवं मन्ये-

चित्रलेखा—सुणु असंतुट्ठे सुणु । शृणु असंतुष्टे शृणु ।

विदूषकः—कहं विअ । कथमिव ।

राजा—

अयं तस्या रथक्षोभादंसेनांसो निपीडितः ।
एकः कृती शरीरेऽस्मिन् शेषमङ्गं भुवो भरः ॥ ११ ॥

चित्रलेखा—किं दाणिं विलम्बीअदि । किमिदानीं विलम्ब्यते ।

उर्वशी—[ सहसोपसृत्य ] हला अग्गदो वि मम गदाए उदासीणो विअ महाराओ । हला अग्रतोपि मम गताया उदासीन इव महाराजः ।

चित्रलेखा—[ सस्मितम् ] अदितुवरिदे अणुक्खित्त-तिरक्करिणीआ सि । अतित्वरिते अनुत्क्षिप्ततिरस्करिणीकासि ।

[ नेपथ्ये । ] इदो इदो भट्टिणी । इत इतो भर्त्री ।

[ सर्वे कर्णं ददति । ]

[ उर्वशी सह सख्या विषण्णा । ]

विदूषकः—अविहा अविहा उवट्ठिदा देवी । ता वाअंजमो होहि । अविहा अविहा उपस्थिता देवी । तद् वाचंयमो भव ।

राजा—भवानपि संवृताकारमास्ताम् ।

उर्वशी—हला किं एत्थ करणिज्जं । हला किमत्र करणीयम् ।

चित्रलेखा—अलं आवेएण । अन्तरिदा वयं । उववास-णिअमवेसा राअसि-महिसी दीसदि । ता ण एसा चिरं चिट्ठिस्सदि । अलमावेगेन । अन्तर्हिते आवाम् । उपवासनियमवेषा राजर्षिमहिषी दृश्यते । तन्नैषा इह चिरं स्थास्यति ।

[ ततः प्रविशति औपहारिकहस्तपरिजना देवी । ]

देवी—[ परिक्रम्य अवलोक्य च ] हञ्जे णिउणिए एसो रोहिणी-संजोएण अहिअं सोहदि भअवं मिअ-लञ्छणो ।

KING—Friend, I think that-

CHITRALEKHA—Hear, unsatisfied that you are, hear.

VIDUSHAKA—What ?

KING—This shoulder that was pressed by hers owing to the jolting of the chariot is the only limb that exists with reason; the rest is a mere burden to the earth. [11]

CHITRALEKHA—Why do you delay now ?

URVASHI—(*Suddenly advancing*) Friend, although I stand in his presence, he deigns not to regard me !

CHITRALEKHA—(*Smiling*). O impatient one, you have not put off the Tiraskarini.

(*Behind the Scenes*).

This way, mistress, this way,

(*All Listen*).

(*Urvashi and her friend feel despair*).

VIDUSHAKA—Holla, the Queen is here: you had better be mute.

KING—You, too, should conceal the expression of your face

URVASHI—What may we do now, dear ?

CHITRALEKHA—Don't you worry. We are invisible. The Queen of the royal sage wears a dress befitting the observance of a fast: she will, therefore, not tarry here long.

(*Enter Queen with attendants carrying materials of worship*).

QUEEN—(*Walking about and seeing*). Girl Nipunika

हञ्जे निपुणिके एष रोहिणीसंयोगेन अधिकं शोभते भगवान् मृगलाञ्छनः ।

चेटी—णं देवी-सहिदो भट्टा विसेस-रमणिज्जो [परिक्रामति]
ननु देवीसहितो भर्ता विशेषरमणीयः ।

विदूषकः—[ दृष्ट्वा ] भो ण आणामि सोत्थि-वाअणं देइ त्ति आदु भवदो वद-ववदेसेण मुक्क-रोसा पणिपाद-लङ्घणं पमज्जिदुकाम त्ति अज्ज मे अच्छीणं सुह-दंसणा देवी । भो न जानामि स्वस्तिवाचनं ददातीति अथवा भवतो व्रतव्यपदेशेन मुक्तरोषा प्रणिपातलङ्घनं प्रमार्ष्टुकामेति अद्य ममाक्ष्णोः शुभदर्शना देवी ।

राजा—[ सस्मितम् ] उभयमपि घटते । तथापि भवता यत् पश्चादभिहितं तन्मां प्रति भाति । यदत्रभवती

सितांशुका मङ्गलमात्रभूषणा
पवित्रदूर्वाङ्कुरलाञ्छितालका ।
व्रतापदेशोज्झितगर्ववृत्तिना
मयि प्रसन्ना वपुषैव लक्ष्यते ॥ १२ ॥

देवी—[ उपगम्य ] जेदु जेदु अज्जउत्तो । जयतु जयतु आर्यपुत्रः ।

परिजनः—जेदु जेदु भट्टा । जयतु जयतु भर्ता ।

विदूषकः—सत्थि भोदीए । स्वस्ति भवत्यै ।

राजा—स्वागतं देव्यै [ तां हस्तेन गृहीत्वा उपवेशयति ]

उर्वशी—हला ठाणे इमं देवी-सद्देण उवअरीअदि । ण किं पि परिहीअदि सचीए ओजस्सिदाए । हला स्थाने इयं देवीशब्देनोपचर्यते । न किमपि परिहीयते शच्या ओजस्वितया ।

this union with the constellation of Rohini yields new brilliance to the divine Moon.

ATTENDANT—Does not His Majesty in the company of the Queen look so beautiful?

VIDUSHAKA—I do not know whether because she is to offer a present, or because using the occasion of the vow to lay aside her anger she (in fact) wishes to obliterate the recollection of her contemptuous treatment of your prostration–but Her Majesty to my eyes looks very charming to-day.

KING—(*Looking*). Both are likely; but what you said last appears to my mind to be the truth; her ladyship,

> Clad in white garments, wearing only (a few) auspicious ornaments, and with the tresses of her hair marked by the sprouts of holy Durva grass, appears to be reconciled to me by her very bodily appearance which has dismissed its haughty bearing under the pretext of a vow. [12]

QUEEN—(*Approaching*) Glory to my noble Lord!

ATTENDANTS—Glory to our Lord!

VIDUSHAKA—Prosperity attend your Ladyship!

KING—Queen, welcome. (*Takes her by the hand and leads her to a seat*).

URVASHI—Friend, how properly is she called "Devi"; for she does not fall short of Shachi in dignity.

चित्रलेखा—साहु असूआ-परम्मुहं मन्तिदं । साधु असूयापराङ्मुखं मन्त्रितम् ।

देवी—अज्जउत्तं पुरो करिअ को वि वद-विसेसो मए संपादणीओ । ता मुहुत्तं उवरोहो सहीअदु । आर्यपुत्रं पुरस्कृत्य कोपि व्रतविशेषो मया संपादनीयः । तन् मुहूर्तमुपरोधः सह्यताम् ।

राजा—मा मैवम् । अनुग्रहः खलु नोपरोधः ।

विदूषकः—ईरिसो सोत्थि-वाअणवन्तो उवरोहो बहुसो होदु । ईदृशः स्वस्तिवायनवानुपरोधो बहुशो भवतु ।

राजा—किंनामधेयमेतद् देव्या व्रतम् ।

[ देवी निपुणिकामवेक्षते । ]

निपुणिका—भट्टा पिआणुप्पसादणं णाम । भर्तः प्रियानुप्रसादनं नाम ।

राजा—[ देवीं विलोक्य ] यद्येवम्

अनेन कल्याणि मृणालकोमलं
व्रतेन गात्रं ग्लपयस्यकारणम् ।
प्रसादमाकाङ्क्षति यस्तवोत्सुकः
स किं त्वया दासजनः प्रसाद्यते ॥ १३ ॥

उर्वशी—महन्तो खु से इमस्सि बहु-माणो । महान् खल्वस्य एतस्यां बहुमानः ।

चित्रलेखा—अइ मुद्धे अण्ण-संकन्त-प्पेम्माणो णाअरिआ अहिअं दक्खिणा होन्ति । अयि मुग्धे अन्यसंक्रान्तप्रेमाणो नागरिका अधिकं दक्षिणा भवन्ति ।

देवी—[ सस्मितम् ] णं इमस्स वद-परिग्गहस्स अअं पहावो जं एत्तिअं मन्ताविदो अज्जउत्तो । नन्वेतस्य व्रतपरिग्रहस्य अयं प्रभावः यदेतावद् मन्त्रित आर्यपुत्रः ।

CHITRALEKHA—Good, you speak without envy.

QUEEN—I have to fulfil a certain vow with my noble Lord's help: bear with the moment's inconvenience it may cause.

KING—Do not speak thus. It is, indeed, a favour and no inconvenience.

VIDUSHAKA—Would that such inconvenience often befall, that I might each time receive presents!

KING—What is the name of the Queen's vow?

(*Queen looks at Nipunika*).

NIPUNIKA—My Lord, the conciliation of the beloved.

KING—(*Looking to the Queen*). If that is so,

Then it is needless, O fair one, to wear this form, delicate as the lotus-stem, with this vow. How, do you propitiate this slave of yours who eagerly seeks your favour! (13)

URVASHI—Great indeed is his regard for her.

CHITRALEKHA—You simple one, these citizens when they transfer their affections to other women, become, indeed, very courteous (to their wives).

QUEEN—(*Smiling*). Such the effect of the vow that My Lord is made to speak thus.

विदूषकः—विरमदु भवं । ण जुत्तं सुहासिदं पच्चाचरिदुं । विरमतु भवान् । न युक्तं सुभाषितं प्रत्याचरितुम् ।

देवी—दारिआओ उवणेध ओवहारिअं जाव मणिहम्मिअ-गदे चन्द-पादे अच्चेमि । दारिका उपनयत औपहारिकं यावद् मणिहर्म्यगतांश्चन्द्रपादानर्चामि ।

परिजनः—एसो गन्ध-कुसुमादिउवहारो । एष गन्धकुसुमाद्युपहारः ।

देवी—[ नाटयेन गन्धपुष्पादिभिश्चन्द्रपादानभ्यर्च्य ] हञ्जे हञ्जे ओवहारिअ-मोदए अज्ज-माणवअं लम्भावेहि । हञ्जे एतानौपहारिकमोदकानार्यमाणवकं लम्भय ।

परिजनः—जं देवी आणवेदि । अज्ज-माणवअ एदं दावे दे । यद् देवी आज्ञापयति । आर्यमाणवक एतत् तावत् ते ।

विदूषकः—[ मोदकशरावं गृहीत्वा ] सोत्थि भोदीए । बहु-फलो दे उववासो होदु । स्वस्ति भवत्यै । बहुफलस्तवोपवासो भवतु ।

देवी—अज्जउत्त इदो दाव । आर्यपुत्र इतस्तावत् ।

राजा—अयमस्मि ।

देवी—[ राज्ञः पूजामभिनीय प्राञ्जलिः प्रणिपत्य ] एसा अहं देवदामिहुणं रोहिणी-मिअ-लञ्छणं सक्खी-करिअ अज्ज-उत्तं अणुप्पसादेमि । अज्ज-प्पहुदि जं इत्थिअं अज्जउत्तो पत्थेदि जा अज्जउत्तस्स समाअमप्पणइणी ताए मए पीदि-बन्धेण वत्तिदव्वं त्ति । एषाहं देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्य आर्यपुत्रमनुप्रसादयामि । अद्यप्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते या आर्यपुत्रस्य समागमप्रणयिनी तया मया प्रीतिबन्धेन वर्तितव्यमिति ।

VIDUSHAKA—Forbear, my friend. You ought not to oppose auspicious words.

QUEEN—Girls, bring to me the materials of worship, that I may worship the rays of the Moon that have streamed into this crystal palace.

ATTENDANT—Here are materials of worship—sandal, flowers and others.

QUEEN—(*Acting worshipping the rays of the Moon with sandal, flowers etc.*). Girl, offer these sweets used in the worship to the noble Manavaka.

ATTENDANT—As the Queen commands. Noble Manavaka, this is for you.

VIDUSHAKA—(*Taking the platter of the Sweets*). Prosperity attend your Ladyship! May your fast bear manifold fruits!

QUEEN—My Lord, please to come here.

KING—Here I come.

QUEEN—(*Acting worshipping the King, and bowing with folded hands*). In the presence of these twin divinities—Rohini and the Moon—I now conciliate my noble Lord: henceforth whatever woman attracts my Lord's regard, or desires union with him, will be treated by me with kind complacency.

उर्वशी—अम्हहे ण आणे किं-परं से वअणं ति। मम उण वीसास-विसदं हिअअं संवुत्तं। अहो न जाने किंपरमस्या वचनमिति। मम पुनर्विश्वासविशदं हृदयं संवृत्तम्।

चित्रलेखा—सहि महाणुहावाए पदिव्वदाए अब्भणुण्णादो अणन्तराओ दे पिअ-समाअमो हविस्सदि। सखि महानुभावया पतिव्रतया अभ्यनुज्ञातः अनन्तरायस्ते प्रियसमागमो भविष्यति।

विदूषकः—[ अपवार्य ] छिण्ण-हत्थो मच्छे पलाइदे णिव्विण्णो धीवरो भणादि धम्मो मे हविस्सदि त्ति। [ प्रकाशम् ] भोदि किं तारिसो पिओ तत्तभवं। छिन्नहस्तो मत्स्ये पलायिते निर्विण्णो धीवरो भणति धर्मो मे भविष्यतीति। भवति किं तादृशः प्रियस्तत्रभवान्।

देवी—मूढ अहं खु अत्तणो सुहावसाणेण अज्जउत्तं णिव्वुदसरीरं कादुं इच्छामि। एत्तिएण चिन्तेहि दाव पिओ ण व त्ति। मूढ अहं खलु आत्मनः सुखावसानेन आर्यपुत्रं निर्वृतशरीरं कर्तुमिच्छामि। एतावता चिन्तय तावत् प्रियो न वेति।

राजा—

दातुं वा प्रभवसि मामन्यस्मै कर्तुमेव वा दासम्।
नाहं पुनस्तथा त्वं यथा हि मां शङ्कसे भीरु॥ १४॥

देवी—होदि वा मा वा। जधा-णिद्दिट्ठं संपादिदं पिआणुप्पसादणं वदं। दारिआओ एध गच्छम्ह। [ प्रस्थिता देवी ] भवतु वा मा वा। यथानिर्दिष्टं संपादितं प्रियानुप्रसादनं व्रतम्। दारिका एत गच्छामः।

राजा—प्रिये न खलु प्रसादितोऽस्मि यदि संप्रति विहाय गम्यते।

URVASHI—Well, I am scarce able to divine her purport, yet mightily do these words assuage the apprehensions of my heart.

CHITRALEKHA—Friend, nothing will anymore impede your union with your love, now that it is assented to by this lady of such an exalted spirit, who is such a devoted wife.

VIDUSHAKA—(*Aside*). When the fish has broken loose from his hand the fisherman in despair says 'A meritorious deed would be recorded in my favour. (*Aloud*). What! Is His Majesty dear to you in that manner?

QUEEN—Fool, desiring to promote my Lord's happiness I have resigned my own. Think from this whether he was dear to me or not.

KING—Yours the power to give me away or
make me a slave to another. But I am indeed not
what you—O timid one–doubt me to be. [14]

QUEEN—You may be so or may not be so. I have accomplished the vow 'conciliation of the loved one' as prescribed. Girls, now, come along. (*Queen starts to go*).

KING—My dear, I am indeed not pleased if you leave me now and go.

देवी—अज्जउत्त अलङ्घिद-पुव्वो मए णिअमो । आर्यपुत्र अलङ्घितपूर्वो मया नियमः ।

[ निष्क्रान्ता सपरिवारा देवी ]

उर्वशी—हला पिअ-कलत्तो राएसी । ण उण हिअअं णिवत्तेदुं सक्कुणोमि । हला प्रियकलत्रो राजर्षिः । न पुनर्हृदयं निवर्तयितुं शक्नोमि ।

चित्रलेखा—किं उण तुए णिरासाए णिवत्तीअदि । किं पुनस्त्वया निराशया निवर्त्यते ।

राजा—[ आसनमुपेत्य ] वयस्य न खलु दूरं गता देवी ।

विदूषकः—भण वीसद्धं जं सि वत्तु-कामो । असज्झो त्ति वेज्जेण आदुरो विअ सेरं मुक्को भवं तत्तहोदीए । भण विश्रब्धं यदसि वक्तुकामः । असाध्य इति वैद्येनातुर इव स्वैरं मुक्तो भवांस्तत्रभवत्या ।

राजा—अपि नामोर्वशी—

उर्वशी—अज्ज किदत्था भवे । अद्य कृतार्था भवेत् ।

राजा—

गूढं नूपुरशब्दमात्रमपि मे कान्तं श्रुतौ पातयेत्<br>पश्चादेत्य शनैः कराम्बुजवृते कुर्वीत वा लोचने ।<br>हर्म्येऽस्मिन्नवतीर्य साध्वसवशान्मन्दायमाना<br>बलान्नीयेत पदात् पदं चतुरया सख्या ममोपान्तिकम् ॥१५॥

उर्वशी—हला इमं दाव से मणोरहं संपादइस्सं । [ पृष्ठतो गत्वा राज्ञो नयने संवृणोति ] हला इमं तावदस्य मनोरथं संपादयिष्यामि ।

[ चित्रलेखा विदूषकं संज्ञापयति । ]

राजा—[ स्पर्शं रूपयित्वा ] सखे नारायणोरुसंभवा सेयं वरोरुः ।

QUEEN—My noble Lord, never before have I broken a sacred rule.

*( Exit Queen with retinue ).*

URVASHI—Friend, the royal sage is fond of his wife. and yet I am not able to reclaim my heart.

CHITRALEKHA—But why should you despair and withdraw ?

KING—*( Approching his seat ).* Friend, the Queen indeed has not gone far.

VIDUSHAKA—You may say whatever you wish, safely enough. You are fairly given over by her ladyship, like a sick man in despair by his physician.

KING—Would that Urvashi—

URVASHI—Find her happiness to day !

KING—Herself concealed let fall the sweet music of her anklets in mine ear ! Or that with her lotus-hands, as lightly she stole behind me, she veiled my eyes ! Or descending to this palace and yet delaying to come through fear she were brought to me, step after step, with ( welcome ) violence by some clever friend ! [ 15 ]

URVASHI—Friend, let me grant him his desire.

*( Going behind him, covers the King's eyes ).*

*( Chitralekha makes a sign to the Vidushaka ).*

KING—*( Showing that he feels the touch ).* Friend, this is that fair lady sprung from the lap of the sage Narayana .

विदूषकः—कहं भवं अवगच्छदि । कथं भवानवगच्छति ।

राजा—किमत्र ज्ञेयम् ।

अङ्गमनङ्गक्लिष्टं सुखयेदन्या न मे करस्पर्शात् ।
नोच्छ्वसिति तपनकिरणैश्चन्द्रस्येवांशुभिः कुमुदम् ॥१६॥

उर्वशी—[ हस्तावपनीय उत्तिष्ठति । किंचिदपसृत्य ] जेदु जेदु महाराओ । जयतु जयतु महाराजः ।

राजा—सुन्दरि स्वागतम् [ एकासने उपवेशयति ]

चित्रलेखा—अवि सुहं वअस्सस्स । अपि सुखं वयस्यस्य ।

राजा—नन्वेतदुपपन्नम् ।

उर्वशी—हला देवीए दिण्णो महाराओ । तदो से पणअवदी विअ सरीर-संपक्कं गद म्हि । मा खु मं पुरोभाइणिं समत्थेहि । हला देव्या दत्तो महाराजः । ततोऽस्य प्रणयवतीव शरीरसंपर्कं गतास्मि । मा खलु मां पुरोभागिनीं समर्थयस्व ।

विदूषकः—कहं इह ज्जेव तुम्हाणं अत्थमिदो सुज्जो । कथमिहैव युवयोरस्तमितः सूर्यः ।

राजा—[ उर्वशीमवलोक्य ]

देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन् ।
प्रथमं कस्यानुमते चोरितमेतत् त्वया हृदयम् ॥१७॥

चित्रलेखा—वअस्स णिरुत्तरा एसा । संपदं मह विण्णप्पं सुणीअदु । वयस्य निरुत्तरैषा । साम्प्रतं मम विज्ञाप्यं श्रूयताम् ।

राजा—अवहितोस्मि ।

चित्रलेखा—वसन्ताणन्तरे उण्ह-समए भअवं सुज्जो मए उवअरिदव्वो । ता जहा इअं मे पिअ-सही सग्गास्स ण उक्कण्ठेदि तहा वअस्सेण कादव्वं । वसन्तानन्तरे उष्णसमये भगवान् सूर्यो मयोपचरितव्यः । तद् यथेयं मे प्रियसखी स्वर्गाय नोत्कण्ठते तथा वयस्येन कर्तव्यम् ।

VIDUSHAKA—How do you know?

KING—What is there to be known!

None else would give such delight to the body, afflicted by love, through the touch of her hand. The Kumuda wakes not at the touch of the solar ray as at the touch of moonbeams. [16]

URVASHI—(*Removing her hands and rising—slightly approaching*). Glory to the King!

KING—Welcome, fair one.

(*Makes her share his seat*).

CHITRALEKHA—I hope my friend feels happiness.

KING—Why it just comes to me.

URVASHI—Friend the Queen has given (me) His Majesty. So I approach his person-like his loving wife. You will not regard me as officious—will you?

VIDUSHAKA—How, has the Sun set to you even here?

KING—(*Looking at Urvashi*).

If you approach my person, because the Queen has presented me to you, who was it that first granted you permission to rob me of my heart? [17]

CHITRALEKHA—Friend, she can proffer no reply. Now listen to my prayer.

KING—I am all attention.

CHITRALEKHA—After spring, in summer, I have to wait upon the divine Sun. See to it, therefore, that you behave in such a manner that my dear friend does not long for heaven.

विदूषकः—किं वा सग्गे सुमरिदव्वं। ण वा अण्हीअदि ण वा पीअदि। केवलं अणिमिसेहिं णअणेहिं मीणा विडम्बीअन्ति। किं वा स्वर्गे स्मर्तव्यम्। न वा अश्यते न वा पीयते। केवलमनिमिषैर्नयनैर्मीना विडम्ब्यन्ते।

राजा—भद्र

अनिर्देश्यसुखः स्वर्गः कस्तं विस्मारयिष्यति।
अनन्यनारीसामान्यो दासस्त्वस्याः पुरूरवाः॥ १८॥

चित्रलेखा—अणुगहिद म्हि। हला उव्वसि अकादरा भविअ विसज्जेहि मं। अनुगृहीतास्मि। हला उर्वशि अकातरा भूत्वा विसर्जय माम्।

उर्वशी—[ चित्रलेखां परिष्वज्य ] सहि मा खु मं विसुमरेहि। सखि मा खलु मां विस्मर।

चित्रलेखा—[ सस्मितम् ] वअस्सेण संगदा तुमं एव्व एदं मए जाचिदव्वा। वयस्येन संगता त्वमेव एतद् मया याचितव्या।

विदूषकः—दिट्ठिआ मणोरह-संपत्तीए वड्ढदि भवं। दिष्ट्या मनोरथसंपत्त्या वर्धते भवान्।

राजा—इयं तावद् वृद्धिर्मम। पश्य।

सामन्तमौलिमणिरञ्जितशासनाङ्क-
मेकातपत्रमवनेर्न तथा प्रभुत्वम्।
अस्याः सखे चरणयोरहमद्य कान्त-
माज्ञाकरत्वमधिगम्य यथा कृतार्थः॥ १९॥

उर्वशी—णत्थि मे विहवो अदो पिअदरं मन्तिदुं। नास्ति मे विभवः अतः प्रियतरं मन्त्रयितुम्।

राजा—[ उर्वशीं हस्तेनावलम्ब्य ] अहो विरुद्धसंवर्धन ईप्सितकामो नाम।

VIDUSHAKA—What is there to remember of heaven? They neither eat nor drink in that place; but they only mock the fish by not closing their eyes even for a twinkle.

KING—Fair lady,

> The heaven is a place of joy ineffable; who can efface its memory? But Pururavas will be a slave unto no other woman than her. [18]

CHITRALEKHA—I am beholden to you. Friend Urvashi, summon up courage and bid me adieu.

URVASHI—( *Embracing Chitralekha* ). Friend, you will not forget me?

CHITRALEKHA—(*Smiling*). That I should rather beg of you now that you are united to my friend.

( *Bowing to the King, departs* ).

VIDUSHAKA—I congratulate you on the accomplishment of your desire.

> KING—It is true, I reach the height of joy. See, I do not feel so blest by the sovereignty of the earth in which none holds the royal umbrella save myself and in which the royal edicts are illumined by the light of the jewels in the crests of the feudatories, as I do by obtaining the fair position of a slave to her feet! [19]

URVASHI—I have no words to give expression to sentiments dearer than these.

KING—(*Holding Urvashi by the hand*). How wonderful is the accomplishment of one's wishes, giving rise to contraries!

पादास्त एव शशिनः सुखयन्ति गात्रं
बाणास्त एव मदनस्य मनोऽनुकूलाः ।
संरम्भरूक्षमिव सुन्दरि यद्यदासीत्
त्वत्संगमेन मम तत्तदिवानुनीतम् ॥ २० ॥

उर्वशी—अवरद्धम्हि चिर-कारिआ अज्जउत्तस्स । अपराद्धास्मि चिरकारिका आर्यपुत्रस्य ।

राजा—मा मैवम् ।

यदेवोपनतं दुःखात् सुखं तद् रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ २१ ॥

विदूषकः—भो सेविदा पदोस-रमणीआ चन्द-पादा । समओ खु दे वास-घर-पवेसस्स । भोः सेविताः प्रदोषरमणीयाश्चन्द्रपादाः । समयः खलु ते वासगृहप्रवेशस्य ।

राजा—तेन हि सख्यास्ते मार्गमादेशय ।

विदूषकः—इदो इदो भवदी । [ इति निष्क्रामन्ति ] इत इतो भवती ।

राजा—सुन्दरि इयमिदानीमभ्यर्थना ।

उर्वशी—कहं विअ । कथमिव ।

राजा—

अनधिगतमनोरथस्य पूर्वं
शतगुणितेव गता मम त्रियामा ।
यदि तु तव समागमे तथैव
प्रसरति सुभ्रु ततः कृती भवेयम् ॥ २२ ॥

[ इति निष्क्रान्ताः सर्वे ]

तृतीयोऽङ्कः समाप्तः ॥

Those very moon-beams soothe my body, those very shafts of love are now agreeable to my mind; whatever, O fair one, was harsh (as if) through anger seems now to be reconciled to me through your union. [20]

URVASHI—I have wronged my Lord by causing delay.

KING—No, not so.

The joy that follows grief gains richer zest; the traveller who has been schorched by the fierce day can better tell how sweet is the shelter of the tree. [21]

VIDUSHAKA—Well, sir, we have enjoyed the moon-light so lovely at night. It is high time now for you to retire to the inner apartment.

KING—Well then show your friend the way.

VIDUSHAKA—This way, this way, your ladyship. (*They leave*).

KING—Beloved. this is my request now.

URVASHI—What is it?

KING-Dearest, before the fruition of my most cherished desires a hundredfold were my nights prolonged! If that were the case now that we are together, I would be happy indeed. [22]

(*Exeunt Omnes.*)

END OF ACT III.

# चतुर्थोऽङ्कः ।

[ ततः प्रविशति विमनस्का चित्रलेखा सहजन्या च । ]

**सहजन्या**—[ चित्रलेखां विलोक्य ] **सहि मिलाअमाण-सद-वत्तस्स विअ दे मुहस्स छाआ हिअअस्स अस्सत्थदं सूएदि। ता कहेहि णिव्वेद-कारणं। सम-दुक्खा भविदुं इच्छामि।** सखि म्लायमानशतपत्रस्येव ते मुखस्य च्छाया हृदयस्य अस्वस्थतां सूचयति। तत् कथय निर्वेदकारणम्। समदुःखा भवितुमिच्छामि।

**चित्रलेखा—अच्छरा-वार-पज्जाअण इह भअवदो सुज्जस्स पाद-मूलोवट्ठाणं वट्टदि त्ति बलिअं खु उव्वसीए उक्कण्ठिद म्हि।** अप्सरोवारपर्यायेण इह भगवतः सूर्यस्य पादमूलोपस्थानं वर्तत इति बलवत् खलूर्वश्यामुत्कण्ठितास्मि।

**सहजन्या— जाणे वो अण्णोण्ण-सिणेहं। तदो तदो।** जाने युवयोरन्योन्यस्नेहम्। ततस्ततः।

**चित्रलेखा—तदो इमाइं दिवसाइं को णु खु वुत्तन्तो त्ति पणिधाण-ट्ठिदाए मए अच्चाहिदं उवलद्धं।** तत एतेषु दिवसेषु को नु खलु वृत्तान्त इति प्रणिधानस्थितया मया अत्याहितमुपलब्धम्।

**सहजन्या**—[ सावेगम् ] **कीरिसं विअ।** कीदृशमिव।

**चित्रलेखा—उव्वसी किल तं रदि-सहाअं राएसिं अमच्चेसु णिवेसिद-रज्ज-धुरं गेण्हिअ गन्धमादण-वणं विहरिदुं गदा।** उर्वशी किल तं रतिसहायं राजर्षिममात्येषु निवेशितराज्यधुरं गृहीत्वा गन्धमादनवनं विहर्तुं गता।

## Act IV

( *Enter Chitralekha dejected in mind and Sahajanya).*

SAHAJANYA—(*Looking at Chitralekha*) Your face, looking like a faded lotus-flower, speaks the sadness of your heart. Tell me, then, the cause of your distress. I wish to share half your grief.

CHITRALEKHA—By the turn of service incumbent upon the nymphs, I was engaged in attending upon the Sun, and, therefore, I felt a deep longing for Urvashi.

SAHAJANYA–I know your mutual love. Well what then?

CHITRALEKHA—Then desiring to know how it with her during all these days I put myself in contemplation and discerned a calamity.

SAHAJANYA—(*Feelingly*). Of what sort?

CHITRALEKHA—Urvashi took with her the King, her companion in her pleasures, who had put the yoke of the kingdom upon his ministers, and went to disport in the Gandhamadana Groves.

सहजन्या—सो णाम संभोओ जो तारिसेसु पदेसेसु । तदो तदो । स नाम संभोगो यत्ताहशेषु प्रदेशेषु । ततस्ततः ।

चित्रलेखा—तहिं क्खु मन्दाइणीए पुलिणेसु गदा सिअदा-पव्वद-केलीहिं कीलमाणा विज्जाहर-दारिआ उदयवदी णाम तेण राएसिणा णिज्झाइद त्ति कुविदा उव्वसी। तत्र खलु मन्दाकिन्याः पुलिनेषु गता सिकतापर्वतकेलीभिः क्रीडन्ती विद्याधरदारिका उदयवती नाम तेन राजर्षिणा निध्यातेति कुपिता उर्वशी।

सहजन्या—होदव्वं । दूरारूढो क्खु पणओ असहणो । तदो तदो । भवितव्यम् । दूरारूढः खलु प्रणयः असहनः । ततस्ततः।

चित्रलेखा—तदो भट्टिणो अणुणअं अपडिवज्जमाणा गुरु-साव-संमूढ-हिअआ इत्थिआ-जण-परिहरणिज्जं कुमार-वणं पविट्ठा । पवेसाणन्तरं च काणणोवन्त-वत्ति-लदाभा-वेण परिणदं से रूवं । ततो भर्तुरनुनयमप्रतिपद्यमाना गुरुशाप-संमूढहृदया स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा । प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम् ।

सहजन्या—णत्थि विहिणो अलङ्घणिज्जं । तस्स अणुरा-अस्स अअं णाम एक्क-पदे ईरिसो अणत्थो । अह किम-वत्थो सो राएसी । नास्ति विधेरलङ्घनीयम् । तस्यानुरागस्य अयं नाम एकपद ईदृशोऽनर्थः । अथ किमवस्थः स राजर्षिः ।

चित्रलेखा—तस्सिं एव्व काणणे पिअदमं विचिणन्तो अहोरत्ते अदिवाहेदि । इमिणा उण णिव्वुदाणं पि उक्कण्ठा-कारिणा मेहोदएण अणत्थाहीणो हविस्सदि। तस्मिन्नेव कानने प्रियतमां विचिन्वन्नहोरात्रानतिवाहयति । एतेन पुन-र्निर्वृतानामपि उत्कण्ठाकारिणा मेघोदयेन अनर्थाधीनो भविष्यति ।

सहजन्या—सहि तारिसा आकिदि-विसेसा चिरं दुक्ख-भाइणो ण होन्ति । अवस्सं किं पि अणुग्गह-णिमित्तं

SAHAJANYA—That is indeed enjoyment as is obtained in such places. What then?

CHITRALEKHA—There, the royal sage looked intently at Udayavati, a Vidyadhara damsel playing with (making) mountains of sand on the banks of the Mandakini, and that angered Urvashi.

SAHAJANYA—That is possible; for intense love is so intolerant. What next?

CHITRALEKHA—Then not accepting the apologies of her husband and with her mind darkened by the curse the preceptor had denounced her with, she entered the grove sacred to Kumara, which is forbidden to women. And after she had entered it, she was transformed into a creeper on the skirt of the grove.

SAHAJANYA—There is nothing that fate may not assail. Alas! that such dire calamity should have all of a sudden befallen such affection! And, pray, what is the condition of the royal sage?

CHITRALEKHA—He is in that same forest passing days and nights in searching her.

SAHAJANYA—Friend, but such excellent forms do not undergo misery for long. Surely there will befall some

भूओ वि समाअम-कारणं हविस्सदि । ता एहि उद-उम्मुहस्स भअवदो सुज्जस्स उवट्ठाणं करेम्ह । सखि
५२ तादृशा आकृतिविशेषाश्चिरं दुःखभागिनो न भवन्ति । अवश्यं किमपि अनुग्रहनिमित्तं भूयोपि समागमकारणं भविष्यति । तदेहि उदयोन्मुखस्य भगवतः सूर्यस्य उपस्थानं कुर्वः ।

५५ [ इति निष्क्रान्ते । ]

प्रवेशकः ॥

[ ततः प्रविशति उन्मत्तवेषो राजा । ]

५८ राजा—आः दुरात्मन् रक्षस्तिष्ठ तिष्ठ । क्व मे प्रियतमामादाय गच्छसि । हन्त शैलशिखराद् गगनमुत्पत्य बाणैर्मामभिवर्षति । [ विभाव्य ]

नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरंपरा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥१॥

[ विचिन्त्य ] । क्व नु खलु रम्भोरूर्गता स्यात्

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमदर्शनं नयनयोर्यातेति कोऽयं विधिः ॥२॥

[ दिशोऽवलोक्य । सनिःश्वासम् । ] अये परावृत्तभागधेयानां दुःखं दुःखानुबन्धि । कुतः ।

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥३॥

event making for reunion caused by some favourable circumstances. So come along, let us worship the divine Sun, that is just about to rise. (*Exeunt*).

END OF THE INTRODUCTORY SCENE.

( *Enter King dressed as an insane person* ).

KING—Hold, you wicked fiend, hold Where are you going, taking my beloved? Ha, from the mountain-peak up-flying he rains showers of arrows on me. (*Looking closely*).

This is a fresh cloud ready to shower, and not a haughty fiend girt in armour. This here is the heavens rainbow striding a vast length and not a (warrior's) bow stretched out; and this a pelting shower of rain that is so sharp and not a velley of arrows; while this is only a flash of lightning gleaming like a streak of gold on the touch-stone, and not my beloved Urvashi. [1]

(*Reflecting*)—Where can the fair one have gone?

Has she through her power remained invisible in anger? But she will not be angry long. Has she flown up to the heavens? But her heart yearns in ever fresh love for me. While even the foes of the immortals cannot wrest her, while in my presence. And yet she is quite invisible to mine eyes! What fate is this? [2]

(*Looking into space, sighing*). Ah! How one upon another calamities whelm those whom once misfortune has assailed! For,

While all of a sudden I have suffered severence from my beloved which is unbearably painful, here the fresh clouds appear making the days so genial by mitigating their intense heat. [3]

[ विहस्य ] मुधैव खलु मनसः परितापवृद्धिरुपेक्ष्यते ।
यथा मुनयोऽपि व्याहरन्ति राजा कालस्य कारणमिति ।
१ तत् किमहं अलब्धसमयं न प्रत्यादिशामि । अथ वा
प्रावृषेण्यैरेव लिङ्गैर्मम राजोपचारः संप्रति । कथमिव ।

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।
घर्मच्छेदात् पटुतरगिरो बन्दिनो नीलकण्ठा
धारासारोपनयनपरा नैगमाश्चाम्बुवाहाः ॥ ४ ॥

भवतु । किमेवं परिच्छदश्लाघया । यावदस्मिन् कानने
तां प्रियामन्वेषयामि [ विलोक्य ] हन्त व्यवसितस्य मे
२ संदीपनमिव संवृत्तम् । कुतः

आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥ ५ ॥

इतो गतेति कथं नु तत्रभवती मया सूचयितव्या ।

पद्भ्यां स्पृशेद् वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्बतया ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥ ६ ॥

[ परिक्रम्य अवलोक्य च सहर्षम् । ] उपलब्धमुपलक्षणं येन
तस्याः कोपनाया मार्गोऽनुमीयते ।

हृतोष्ठरागैर्नयनोदबिन्दुभि-
र्निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं
शुकोदरश्याममिदं स्तनांशुकम् ॥ ७ ॥

(*Laughing*). Or, in vain do I bear all these troubles of my mind. For even the wise say that the King is the lord of time. Why should I not countermand the rainy season? Or rather the signs of the rainy season are the only insignia that are doing me royal honour.

Here the clouds spread my splendid canopy, shot with the gold of lighting streaks; The Nichula trees wave their (tufted) blossoms as *chowries*; the peacocks growing clamorous, now that summer is gone, are my bards; while the clouds are the (rich) merchants that proffer me tribute of rain-showers. [4]

But let it be. Why should I laud my paraphernalia? So I will search that love of mine in this forest.

(*Looking*).—Dear me? As I set about it here is something that aggravates (my troubles). For,

This fresh Kandali plant with its flowers streaked with red veins, and with water inside them painfully reminds me of her eyes with the tears starting inside them. [5]

How am I to know that her ladyship has gone hence

If she were to touch the earth with her feet here in these woodland spots whose sandy soil is showered over by the clouds, then would I trace her lovely footprints marked with the Alaktaka dye, pressed deep in the soil at the back owing to the heaviness of her hips. [6]

(*Walking about and looking with joy*).—Here have I found a sign by which I can infer the way, the irate one has gone

Here is the scarf covering her breasts, dark-green like a parrot's belly, which assuredly must have slipped down as in anger she stumbled on, and marked by the tears of that fair one with a deep navel—tears which falling first upon her lips carried with them their red paint. [7]

[विभाव्य ।] कथम् । सेन्द्रगोपं नवशाद्वलमिदम् । कुतो नु खलु निर्जने वने प्रियाप्रवृत्तिरवगमयितव्या [ दृष्ट्वा ] अये आसारोच्छ्वसितशैलेयस्थलीपाषाणमारूढः

आलोकयति पयोदान् प्रबलपुरोवातनर्तितशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥ ८ ॥

[ उपेत्य ।] यावदेनं पृच्छामि ।

नीलकण्ठ ममोत्कण्ठा वनेऽस्मिन् वनिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग दृष्टा दृष्टिक्षमा भवेत् ॥ ९ ॥

कथमदत्त्वा प्रतिवचनं नर्तितुं प्रवृत्तः । किं नु खलु हर्षकारणमस्य । [ विचिन्त्य ] भवतु । विदितमेतत् ।

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे किं करोत्येष बर्ही ॥ १० ॥

भवतु । परव्यसननिर्वृतं न खल्वेनं पृच्छामि [परिक्रम्य] इयमातपान्तसंक्षुभितमदा जम्बूविटपमध्यास्ते परभृता । विहंगमेषु पण्डिता जातिरेषा । यावदेनामभ्यर्थये । भवति

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ॥ ११ ॥

[आकाशे ।] किमाह भवती । कथं त्वामेवमनुरक्तं विहाय गतेति । शृणोतु भवती ।

(*Looking closely*).—How, this is fresh sward with the Indragopa insects! Where indeed can I get the intelligence of my love in this lonesome wild?

(*Seeing*).—Ah, here, perched on a stone in the rocky soil, bright-looking on account of rain-showers, is a peacock,

That looks (proudly) at the clouds with neck out-stretched and clamorous with rapture, his crest waved by the breezes blowing in his face. [8]

(*Approching*).—So I will inquire of him.

O blue-necked peacock, with eyes white in the corners, have you seen my love-lorn lady of broad big eyes in this forest? For her charms deserve your gaze. [9]

How he deigns no answer but simply treads a measure. What could have exhilerated him? (*Reflecting*) Well I have it.

Owing to the disappearance of my love, his beautiful, thick plumage, divided by the gentle breeze, is now without a rival; but where would be his boast, before the excellent tresses of her hair decked with flowers, when loosened in amorous sport? [10]

Let be.—I shall not ask him, who seems to be happy in another's misfortune. (*Walking about*). Here is a Koil sitting on the Jambu tree, her passions inflamed at the end of summer. She is a wise bird among the winged flock. So I will request her.

They call you the lover's messenger of love—the unfailing missile able to break down pride; do you, O sweet-tongued, bring my dearest to me, or lead me to where she is. [11]

What do you say? 'How did she leave you when you were so devoted to her?' Hear,

कुपिता न तु कोपकारणं सकृदप्यात्मगतं स्मराम्यहम् ।
प्रभुता रमणेषु योषितां न हि भावस्खलितान्यपेक्षते ॥१२॥

कथं कथाच्छेदकारिणी स्वकार्य एव सक्ता ।

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिमुखपाकं राजजम्बूद्रुमस्य ॥ १३ ॥

एवंगतेऽपि प्रियेव मे मञ्जुस्वनेति न कोपोऽस्याम् ।
इतो वयम्–[ परिक्रामितकेन । कर्णं दत्त्वा ] अये दक्षिणेन
१ प्रियाचरणनिक्षेपशंसी नूपुररवः । यावदत्र गच्छामि ।
[ परिक्रम्य ] अहो धिक् धिक् ।

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसाम् ।
कूजितं राजहंसानां नेदं नूपुरशिञ्जितम् ॥ १४ ॥

भवतु । यावदेते मानसोत्सुकाः पतत्त्रिणः सरसो नोत्पतन्ति तावदेतेभ्यः प्रियाप्रवृत्तिरवगमयितव्या । [ उपेत्य ]
२ भो भो जलविहंगमराज

पश्चात् सरः प्रति गमिष्यसि मानसं तत्
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात् सतां गुरुतरा प्रणयिक्रियैव ॥ १५ ॥

यथोन्मुखो विलोकयति मानसोत्सुकेन मया न लक्षितेत्येवं वचनमाह ।

Angry I find her, but I do not remember to have even for once given her any cause for offence. The fond tyranny that women exercise over those who love them does not require any deviation from love for them to get angry. [12]

How now! She seems to mind her own business and not heed our conversation.

It is well said that howsoever great another's woe, a stranger will not be in the least affected by it Thus she disregards my request and lo! speeds to yon excellent Jambu tree to drink the (luscious) juice of its now ripe fruit, as one intoxicated (by the draught of love) to sip the honey of (roseate) lips. [13]

Although it is thus, yet I scarcely feel angry with her as she has the sweet voice of my love. Hence we— (*Going about and listening*). Ah! from the South I hear the jingle of anklets indicating the tread of my Love's feet. So I will proceed thither (*Moving about*). Oh, fie!

This is not the chime of tinkling anklets, but the cooing of swans who, seeing the space darkened with clouds, are filled inwardly with a longing to go to the Manasa lake. [14]

Well, while these birds, filled as they are with a (passionate) yearning for the Manasa lake, are not flown from the lake, let me get from them news about my Love. (*Approaching*). You, prince of aquatic birds,

After a while, you will begin your journey to the Manasa lake; forego the provender of lotus-stem; you will have that again. Do you first redeem me from despair by imparting some tidings of my beloved; for the good regard it worthier to render kindly offices to the suppliants than be mindful of one's own business. [15]

Since he looks up he seems to say that in his longing for the Manasa, he has not marked her.

यदि हंस गता न ते नतभ्रूः
सरसो रोधसि दर्शनं प्रिया मे ।
मदखेलपदं कथं नु तस्याः
सकलं चोर गतं त्वया गृहीतम् ॥ १६ ॥

अतश्च—

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥ १७ ॥

[ विहस्य ] । एष चोरानुशासी राजेति भयादुत्पतितः । [परिक्रम्य ] अयमिदानीं प्रियासहायश्चक्रवाकः । तावदेनं पृच्छामि ।

रथाङ्गनामन् वियुतो रथाङ्गश्रोणिबिम्बया ।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः ॥ १८ ॥

कथं कः क इत्याह । मा तावत् । न खलु विदितोऽह

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥१९॥

कथं तूष्णीं स्थितः । भवतु । उपालप्स्ये तावदेनम् ।

सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां
ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः ।
इति च भवतो जायास्नेहात् पृथक्स्थितिभीरुता
मयि च विधुरे भावः कान्ताप्रवृत्तिपराङ्मुखः ॥२०॥

सर्वथा मदीयानां भाग्यविपर्ययाणामयं प्रभावः । याव- दस्यकाशमवगाहे । [ पदान्तरे स्थित्वा ] भवतु न तावद् गच्छामि ।

Well, O swan, if you have not seen my love with her arched eye-brows, on the bank of the lake, how could you, O thief, have wholly taken her gait, elegant through youthful pride? [16]

Therefore,

O swan, give me my Love; you have stolen her gait. He who is proved guilty as regards a part should restore the whole of what is claimed. [17]

(*Laughing*).—He has flown up fearing that a King the chastiser of thieves. is here (*Walking about*). Here is the Chakrawaka with his mate. So I will ask him.

O Chakrawaka, this warrior, here severed from his broad-hipped Love and filled with a hundred longings, asks you. [18]

How does he say "Who?" "Who?' Don't do that It seems he knows me not.

The Sun and the Moon are my grandsires on both sides; while I am the self-chosen Lord of Urvashi and the Earth. [19]

How, he keeps quiet! Well, I will remonstrate with him.

If by so much as a lotus-leaf thy mate is screened from sight in the lake, thou wilt pour out thy plaints, all yearning for her, thinking her to be far-removed. Thus art thou apprehensive of thy mate's separation through thy fondness for her. Why, then, friend, dost thou seem so averse to giving me news about my Love, even when I am so distressed? [20]

In every respect my fortune has been so perverse to me. So I will go to another region. (*Stopping after a step*). Well, I will not go

इयं कथंचित् मां पद्ममन्तःकूजितषट्पदम् ।
मया हृताधरं तस्याः ससीत्कारमिवाननम् ॥ २१ ॥

भवतु। अस्मिन्नेव कमलाभ्यासिनि मधुकरे प्रणयित्वं करिष्ये । इतो गतस्यानुशयो मा भूदिति ।

मधुकर मदिराक्ष्याः शंस तस्याः प्रवृत्तिं
[ विभाव्य । ]

वरतनुरथवासौ नैव दृष्टा त्वया मे ।
यदि सुरभिमपास्यस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत् पुण्डरीके किमस्मिन् ॥ २२ ॥

साधयामस्तावत् [ परिक्रामितकेन ] एष नीपस्कन्धनिषण्णहस्तः करिणीसहायो नागराजस्तिष्ठति । अस्मात् प्रियोदन्तमुपलप्स्ये [ विलोक्य ] भवतु न त्वरा कार्या।

अथमांवरोद्धृतपल्लवमुपनीतं प्रियकरेणुहस्तेन ।
अभिलषतु तावदासवसुरभिरसं सल्लकीभङ्गम् ॥ २३ ॥

[क्षणमात्रं स्थित्वा।] हन्त कृताह्निकः संवृत्तः। भवतु पृच्छामि।

मदकल युवतिशशिकला गजयूथप यूथिकाशबलकेशी।
स्थिरयौवना स्थिता ते दूरालोके सुखालोका ॥ २४ ॥

[सहर्षम्।] अनेन स्निग्धमन्द्रेण गर्जितेन प्रियोपलम्भशंसिना समाश्वासितोऽस्मि। साधर्म्याच्च त्वयि मे भूयसी प्रीतिः।

मामाहुः पृथिवीभृतामधिपतिं नागाधिराजो भवान्
अव्युच्छिन्नपृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु ।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा
सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां मानुभूः ॥२५॥

This lotus, here, amidst whose petals the bees are sweetly murmuring, arrests me; it is thus like my beloved's face, murmuring protest at my somewhat rudely sipping its lower lip. [21]

Well then, I shall woo this honey-sipper sitting on the lotus lest I should regret when I go hence.

Bee, give me the intelligence of that fair one with bewitching eyes.

(*Looking closely*).

Or rather, you have not seen that fair Love of mine; for had you tasted the fragrance of her delicious breath, you would certainly have scorned the lotus. [22]

I will leave, then. (*Walking about*). Here is the Lord of elephants with his mate, resting his trunk on the stem of a Nipa tree. I will get news of the dear one from him. (*Looking*). Let him be. I should not be in a hurry.

Let him eat the bough of the Sallaki with its newly-appearing shoots and its rich fragrant juice offered to him by his dear mate. [23]

(*Waiting for a moment*). Well, now he has had his meal; so I will ask him.

Lord of elephants, charming with the pride of youth, have you beheld (even) afar off that beautiful one, blooming with eternal youth, like the crescent Moon among (the stars of) women, her hair decked with the Yuthika flowers? [24]

(*With joy*). I am (mightily) consoled by this kind and gentle roar conveying some intimation of my Love. And great is my love for you because of our likeness.

For while they call me the lord of kings, you are the lord of elephants; your bounty sheds the frontal ichor profusely without break, while my wealth is lavishly showered on the needy; Urvashi is my Love among the jewels of womankind, and this gentle one your mate in the herd; thus everything of yours accords with mine. May you, however, never know the pangs of severence from your beloved. [25]

सुखमास्तां भवान् । स्नाययामस्तावत् । [ पार्श्वतो दृष्टिं दत्त्वा ] अये सुरभिकन्दरो नाम विशेषरमणीयः सानुमानालोक्यते । प्रियश्चायमप्सरसाम् । अपि नाम सुतनुरस्योपत्यकायामुपलभ्येत । [ परिक्रम्य अवलोक्य च ] कथमन्धकारः । भवतु । विद्युत्प्रकाशेनावलोकयामि । हन्त मदीयैर्दुरितपरिणामैर्मेघोऽपि शतह्रदाशून्यः संवृत्तः । तथापि शिलोच्चयमेतमपृष्ट्वा न निवर्तिष्ये ।

अपि वनान्तरमल्पकुचान्तरा श्रयति पर्वत पर्वसु संनता ।
इदमनङ्गपरिग्रहमङ्गना पृथुनितम्ब नितम्बवती तव ॥२६॥

कथं तूष्णीमास्ते । शङ्के विप्रकृष्टो न शृणोतीति । समीपेऽस्य गत्वा पुनरेनं पृच्छामि [ परिक्रम्य ]

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥२७॥

[आकर्ण्य । सहर्षम् ।] कथं यथाक्रमं दृष्टेत्याह । भवानपि अतः प्रियतरं शृणोतु । क्व तर्हि मम प्रियतमा । [ नेपथ्ये तदेवाकर्ण्य ।] हा धिक् । ममैवायं कन्दरमुखविसर्पी प्रतिशब्दः । [ विषादं रूपयित्वा ] श्रान्तोऽस्मि । अस्यास्तावद् गिरिनद्यास्तीरे स्थितस्तरङ्गवातमासेविष्ये । इमां नवाम्बुकलुषामपि स्रोतोवहां पश्यतो मे रमते मनः ।

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरसना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसंधाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥ २८ ॥

May you rest in peace. I will go. (*Looking at his side*). Here is the mountain 'Surabhikandara,' particularly lovely and a loved resort of the nymphs. May it be that the fair one is to be found on it ledges? (*Moving about and observing*). Oh, how is it dark? Well, I will see with the flash of lightning. What a (sad) result of my sins that even the clouds are bereft of lightning! Still I will not return without making inquiry of this mountain.

Does she, of close breasts, and full in the joints, and plump in the hips, resort the interior of this forest, sacred to love, O large-sided mountain? [26]

How is he silent? I am afraid he does not hear me being at a distance. I will approach him and ask him again. (*Walking about*).

O Lord of mountains, have you seen that lovely woman, beautiful in all limbs, in this charming forest, severed from me? [27]

(*Listening; with joy*). How, in the same order, he said 'I have seen'! May you, too, hear sweeter words than these. Where, then, is my beloved? (*Hearing the same words from behind the scenes*). Ah, bless me! This is only my voice reverberating from the mouth of the cave. (*Showing despair*). I am tired. So reposing on the bank of this mountain-stream I shall enjoy the breezes from its waves. My mind is charmed as I look upon this stream although it is turbid with fresh water.

The rippling wave is her arching brow· the fluttering line of birds her girdle; drawing along its foam, which is as it were her garment loosened through anger, it flows meanderingly, avoiding the many obstacles in the way, like my beloved who stumbles along as she remembers my faults; so surely that irascible one has been transformed into this river. [28]

भवतु । याचिष्ये तावदेनाम् । [ अञ्जलिं कृत्वा ]

त्वयि निबद्धरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि
त्यजसि मानिनि दासजनं यतः ॥ १९ ॥

अथ वा परमार्थसरिदेवैषा । न खलूर्वशी पुरूरवसम-
पहाय समुद्राभिसारिणी भविष्यति । भवतु । अनिर्वे-
३ दप्राप्याणि श्रेयांसि । यावदमुमेव प्रदेशं गच्छामि यत्र
मे नयनयोः सुनयना तिरोभूता । [ परिक्रम्य अवलोक्य ]
हन्त दृष्टमुपलक्षणं तस्या मार्गस्य ।

रक्तकदम्बः सोयं प्रियया घर्मान्तशंसि यस्यैकम् ।
कुसुममसमग्रकेसरविषममपि कृतं शिखाभरणम् ॥२०॥

[विलोक्य ।] इमं तावत प्रियाप्रवृत्तिनिमित्तं सारङ्गमासी-
नमभ्यर्थये ।

कृष्णसारच्छविर्योऽसौ दृश्यते काननश्रिया ।
वनशोभावलोकाय कटाक्ष इव पातितः ॥ २१ ॥

[विलोक्य । ] किं नु खलु मामवधीरयन्निव अन्यतोमुखः
संवृत्तः । [ दृष्ट्वा ।]

अस्यान्तिकमायान्ती शिशुना स्तनपायिना मृगी रुद्धा ।
तामयमनन्यदृष्टिर्भुग्नग्रीवो विलोकयति ॥ २२ ॥

हंहो यूथपते

अपि दृष्टवानसि मम प्रियां वने
कथयामि ते तदुपलक्षणं शृणु ।
पृथुलोचना सहचरी यथैव ते
सुभगं तथैव खलु सापि वीक्षते ॥ २३ ॥

Well, I will implore her. (*Folding his hands*).

I am devoted to you, ever speak agreeably to you and have a heart that has never deviated from love so what fault, even the slightest, have I committed that you fly from me so wholly yours? [29]

Or, rather this is really a stream; for surely Urvashi will not quit her Pururavas for the Ocean. So let it be. Fortune crowns those who yield not to despair. So I will go to the place where the fair-eyed one was lost to me. (*Walking about and observing*). Ah, now I see this indication as to the way she took.

Here is the Raktakadamba tree, one of whose flowers, uneven on account of its filaments being incompletely formed and suggesting the end of summer, was used by her to deck her hair. [30]

(*Observing*). I will now request the antelope squatting yonder to give me some intelligence of my love.

That one, seen yonder, of black and variegated hue, looks as if it is a glance cast by the sylvan deity to observe the beauty of the forest [31]

(*Seeing*). How, disregarding me, he has turned his face in another direction? (*Seeing*).

A doe approaching him was obstructed by her suckling fawn. So with a bent neck he is intently looking at her. [32]

O Lord of the herd,

Have you seen my beloved in this forest? I will give you her marks, listen. Even as your broad-eyed mate looks charmingly even so does she cast beautiful glances. [33]

कथमनादृत्य मद्वचनं कक्षाभिमुखं स्थितः। उपपद्यते।
परिभवास्पदं दशाविपर्ययः। इतो वयम्–[ परिक्रमितकेन
२ अवलोक्य ] शिलाभेदान्तरगतं किमेतदालोक्यते।

प्रभालेपी नायं हरिहतमृगस्यामिषलवः
स्फुलिङ्गः स्यादग्नेर्गगनमभिवृष्टं पुनरिदम्।

[ विभाव्य। ]

अये रक्ताशोकस्तबकसमरागो मणिरयं
यमुद्धर्तुं पूषा व्यवसित इवालम्बितकरः ॥ २४ ॥

हरति मे मनः। आदास्ये तावदेनम्

मन्दारपुष्पैरधिवासितायां यस्याः शिखायामयमर्पणीयः।
सैव प्रिया संप्रति दुर्लभा मे किमेनमस्रोपहतं करोमि ॥ २५ ॥

[ नेपथ्ये। ] वत्स गृह्यतां गृह्यताम्।

संगमनीय इति मणिः शैलसुताचरणरागयोनिरयम्।
आवहति धार्यमाणः संगममचिरात् प्रियजनेन ॥ २६ ॥

राजा—[ कर्णं दत्त्वा ] को नु खलु मामेवमनुशास्ति।
[दिशोऽवलोक्य।] अये अनुकम्पते मां कश्चिन्मृगचारी मुनि-
३ र्भगवान्। भगवन् अनुगृहीतोऽस्म्यहमुपदेशाद् भवतः।
[ मणिमादाय ] हंहो संगमनीय

तया वियुक्तस्य विलग्नमध्यया
भविष्यसि त्वं यदि संगमाय मे।
ततः करिष्यामि भवन्तमात्मनः
शिखामणिं बालमिवेन्दुमीश्वरः ॥ २७ ॥

[परिक्रम्य अवलोक्य च।] अये किं नु खलु कुसुमरहितामपि
लतामिमां पश्यतो मे रतिरुपलब्धा। अथवा स्थाने
३ मनोरमा ममेयम्। इयं हि

How, heedless of what I said he turns towards his mate ! But that is proper ; for a reverse of fortune subjects one to insults ; so from here–I–(*Walking and looking*). What is this to be seen in the rift of the rock ?

This could not be a piece of the flesh of deer killed by a lion, since it is covered with lustre ; nor is it a spark of fire for the sky has (just) rained.

(*Looking closely*) ;

Ah, this is some gem gleaming like a bunch of Ashoka blossoms, and the sun seems to endeavour to clutch at it by stretching forth his rays. [34]

How it captivates my heart ! I will have it. Or rather my beloved whose hair fragrant with Mandara flowers should be adorned by this (gem) is now lost to me ; why should I then soil it with my tears ? [35]

(*Behind the Scenes*). Child, take it, do take it. It is the Samgamaniya jewel, sprung from the dye applied to Gauri's feet ; when borne, it brings about, within a short time, union with the loved one. [36]

King—Who is this that instructs me thus ? (*Looking in space*). Some holy ascetic living the life of a deer feels compassion for me. Revered sir, I am obliged to you for this advice. (*Taking the gem*). O gem of union,

If severed as I am from her of slender waist, you unite me to her, then surely I will make you my crest-gem, even as Ishvara his crescent-moon. [37]

(*Walking about and observing*). How is it that my mind is charmed even by looking at this creeper, albeit bereft of flowers ? Or rather, it is proper it should charm my mind. This is

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद् विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥३८॥

यावदस्याः प्रियानुकारिण्याः परिष्वङ्गप्रणयी भवामि ।

२ [ इति लतामालिङ्गति । ततः प्रविशति तत्स्थाने एवोर्वशी । ]

राजा—[ निमीलिताक्ष एव स्पर्शं रूपयित्वा ] अये उर्वशीगात्रसंपर्कादिव निर्वृतं मे शरीरम् । तथापि न पुनरस्ति

५ विश्वासः । कुतः ।

समर्थये यत् प्रथमं प्रियां प्रति
क्षणेन तन्मे परिवर्ततेऽन्यथा ।
अतो विनिद्रे सहसा विलोचने
करोमि न स्पर्शविभावितप्रियः ॥ ३९ ॥

[ शनैश्चक्षुरुन्मील्य । ] कथं सत्यमेव प्रियतमा ।

उर्वशी—[ बाष्पं विसृज्य ] जेदु जेदु महाराओ । जयतु

३ जयतु महाराजः ।

राजा—

त्वद्वियोगोद्भवे तन्वि मया तमसि मज्जता ।
दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना ॥ ४० ॥

उर्वशी—अब्भन्तर-करणाए मए पच्चक्खी-किद-वुत्तन्तो खु महाराओ । अभ्यन्तरकरणया मया प्रत्यक्षीकृतवृत्तान्तः खलु

२ महाराजः ।

That slender one, and the tender leaves wetted by the clouds her lower lip washed by her tears; not decked with blossom, as it is past its time of flowering, it is she with her ornaments cast aside; since the bees are not humming to it, she has been silent in anxious thoughts. So it is that irascible one, who having spurned me, now seems to be stung with remorse. [38]

I will therefore, press this likeness of my beloved to my heart. ( *Embraces the creeper* ).

( *Enter Urvashi at that very place* ).

KING—( *With eyes yet closed, showing that he perceives touch* ). Ah, how the fever of my body is allayed as at the touch of Urvashi's person? Still my mind misgives me, For,

Whatever I fancy as belonging to my love turns to be otherwise a moment after. So will I not open my eyes all of a sudden, (though) I recongnize my Love through touch. [39]

( *Slowly opening his eyes* ) How ! my Love forsooth !
URVASHI—( *Shedding tears* ). Glory to my Lord !

KING—O slender one, while I was sinking in the darkness caused by your loss, I have fortunately recovered you, as a person dead might recover life.[40]

URVASHI—With my senses lying hidden in me, I witnessed the plight of my Lord.

राजा—अभ्यन्तरकरणीयेति न खलु ते वचनार्थमवैमि।

उर्वशी—कहइस्सं। इमं दाव पसीदतु महाराओ जं मए कोववसं गदाए एदं अवत्थन्तरं पाविदो महाराओ।

कथयिष्यामि। एतत् तावत् प्रसीदतु महाराजो यन्मया कोपवशं गतया एतदवस्थान्तरं प्रापितो महाराजः।

राजा—कल्याणि न तावदहं प्रसादयितव्यः। त्वद्दर्शनादेव प्रसन्नः सबाह्यान्तःकरणो ममान्तरात्मा। कथय कथमियन्तं कालमवस्थिता मया विना भवती।

उर्वशी—सुणादु महाराओ। भअवदा कुमारेण सासदं कुमारवदं गेण्हिअ अकलुसो णाम गन्धमादण-कच्छो अज्झासिदो किदो अ एस विही। शृणोतु महाराजः।

भगवता कुमारेण शाश्वतं कुमारव्रतं गृहीत्वा अकलुषो नाम गन्धमादनकच्छोऽध्यासितः कृतश्च विधिः।

राजा—क इव।

उर्वशी—जा इमं पदेसं इत्थिआ पविसदि सा लदाभावेण परिणमिस्सदि। गोरी-चरण-संभवं मणिं विणा तदो ण मुच्चिस्सदि त्ति। साहं गुरु-साव-संमूढ-हिअआ देवदा-समअं विसुमरिअ अगणिदाणुणआ कुमार-वणं पविट्ठा। पवेसाणन्तरं एव्व वासन्ती लदा संवुत्ता।

या एतं प्रदेशं स्त्री प्रवेक्ष्यति सा लताभावेन परिणंस्यति। गौरीचरणसंभवं मणिं विना ततो न मोक्ष्यत इति। साहं गुरुशापसंमूढहृदया देवतासमयं विस्मृत्य अगणितानुनया कुमारवनं प्रविष्टा। प्रवेशानन्तरमेव वासन्ती लता संवृत्ता।

KING—I really do not understand what you mean by " the senses lying hidden."

URVASHI—I will explain. But let my Lord forgive that yielding to anger I wrought so sad a change in my Lord.

KING—Fair one, you have not to beg my forgivenees For your very sight has brought gratification to my soul together with the external and internal senses. Tell me, how you could live without me so long.

URVASHI—Let my Lord hear. The warrior God, vowing eternal celibacy, dwelt in the region bordering on the Gandhamadana, called Akalusha ; and he made this rule.

KING—What is it ?

UARVASHI—Whatever woman entered this region, would be transformed into a creeper ; and she would not be restored to her form in the absence of the gem sprung from the feet of Gauri. So, as my memory was obliterated by the curse of the preceptor, I forgot the rule prescribed by the deity, and not accepting your entreaties, entered the forest sacred to Kumara. And the moment I became a Vasanti creeper.

१७ राजा—सर्वमुपपन्नम् ।

रतिखेदसुप्तमपि मां शयने या मन्यसे प्रवासगतम्
सा त्वं प्रिये सहेथाः कथं मदीयं चिरवियोगम् ॥४१॥

इदं तद् यथाकथितं त्वत्संगमनिमित्तं मुनेरुपलभ्य मणि-
प्रभावादासादिता त्वमस्माभिः । [ मणिं दर्शयति ]

३ उर्वशी—अम्मो संगमणीओ । अदो खु महाराएण आ-
लिङ्गिदमेत्तव्व पकिदित्थ म्हि संवुत्ता [ मणिमादाय
मूर्धनि वहति ] अहो संगमनीयः । अतः खलु महाराजेन आलि-
६ ङ्गितमात्रैव प्रकृतिस्थास्मि संवृत्ता ।

राजा—एवमेव सुन्दरि क्षणमात्रं स्थीयताम् ।

स्फुरता विच्छुरितमिदं रागेण मणेर्ललाटनिहितस्य ।
श्रियमुद्वहति मुखं ते बालातपरक्तकमलस्य ॥ ४२ ॥

उर्वशी—महन्तो क्खु कालो तुह पइट्ठाणादो णिग्गदस्स ।
असूअन्ति मं पकिदीओ । ता एहि णिवुत्तम्ह । महान्
३ खलु कालस्तव प्रतिष्ठानात् निर्गतस्य । असूयन्ति मां प्रकृतयः ।
तदेहि निवर्तावहे ।

राजा—यदाज्ञापयति भवती ।

६ उर्वशी—कहं महाराओ गन्तुं इच्छेदि । कथं महाराजो
गन्तुमिच्छति ।

राजा—

अचिरप्रभाविलसितैः पताकिना
सुरकार्मुकाभिनवचित्रशोभिना ।
गमितेन खेलगमनं विमानतां
नय मां नवेन वसतिं पयोमुचा ॥ ४३ ॥

[ इति निष्क्रान्ताः सर्वे ।]

विक्रमोर्वशीये चतुर्थोऽङ्कः समाप्तः ॥

KING—Everything is explained.

You who would regard me as gone away on a journey, when I would be merely sleeping, overcome by fatigue of love-dalliance, how could you (otherwise) bear long severence from me? (41)

Here then having learnt from the sage, as already narrated, this gem to be the cause of my reunion with you, through the power of this gem I recovered you. (*Shows the gem*)

URVASHI—Oh, the gem of union! that is why I was restored to myself the moment my Lord embraced me. (*Takes the gem and holds it on her head*).

KING—Hold yourself, O fair one, hold a moment thus.

Irradiated by the glow of this gem placed upon your brow, your face looks as splendid as a lotus red-gleaming in the morning light. (42)

URVASHI—It is a long time that we left Pratishthana; surely the subjects must have been incensed against me. So come, let us return.

KING—As you command, Lady.

URVASHI—How will it please my Lord to travel?

KING—Take me, O stately of gait, to my place on a cloud turned into an aerial car, with the flashes of the evanescent lightning for its banner and the bow of Indra for the fresh paintings that beautify it. [43]

( *Exeunt Omnes* )

**END OF ACT IV**

# पञ्चमोऽङ्कः ।

[ ततः प्रविशति परितुष्टो विदूषकः । ]

विदूषकः—दिट्ठिआ चिरस्स कालस्स उव्वसी-सहाओ णन्दण-वण-प्पमुहेसु देवदा-रण्णेसु विहरिअ पडिणिउत्तो पिअ-वअस्सो । दाणिं ससक्कारोवआरेहिं पकिदीहिं अणुरज्जन्तो रज्जं करेदि । असंताणत्तणं वज्जिअ ण किं वि से हीणं । अज्ज तिहि-विसेसो त्ति भअवदीणं गङ्गा-जउँणाणं संगमे देवीहिं सह किदाहिसेओ संपदं उवआरिअं पविठ्ठो । ता जाव तत्तभवदो अलंकरीअमाणस्स अणुलेवण-मल्ले अग्ग-भागी होमि [ इति परिक्रामति ] दिष्ट्या चिरस्य कालस्य उर्वशीसहायो नन्दनवनप्रमुखेषु देवतारण्येषु विहृत्य प्रतिनिवृत्तः प्रियवयस्यः । इदानीं ससत्कारोपचारैः प्रकृतिभिरनुरज्यमानो राज्यं करोति । असंतानत्वं वर्जयित्वा न किमपि अस्य हीनम् । अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः संगमे देवीभिः सह कृताभिषेकः सांप्रतमुपकार्यां प्रविष्टः । तद् यावत् तत्रभवतः अलंक्रियमाणस्य अनुलेपनमाल्ये अग्रभागी भवामि ।

[नेपथ्ये।] हद्धी हद्धी । दुऊलुत्तरच्छदे ताल-वेण्टाधारे णिक्खिविअ णीअमाणो मए भट्टिणो अब्भन्तर-विलासिणी-मोलि-रअण-जोग्गो मणी आमिस-सङ्किणा गिद्धेण अक्खित्तो । हा धिक् हा धिक् । दुकूलोत्तरच्छदे तालवृन्ताधारे निक्षिप्य नीयमानो मया भर्तुरभ्यन्तरविलासिनीमौलिरत्नयोग्यो मणिः आमिषशङ्किना गृध्रेणाक्षिप्तः ।

विदूषकः—[ कर्णं दत्त्वा ] अच्चाहिदं । परं बहु-मदो क्खु

## ACT V.

( *Enter Vidushaka who seems satisfied* ).

VIDUSHAKA—Fourtunately, my dear friend has now come back, after spending a long time enjoying with Urvashi in the gardens of the gods, Nandanavana and others. Now he rules, well pleased with his subjects who treat him with honour and respect. With the exception of his childless state, there is nothing wanting to make his happiness complete. To-day being an auspicious day, he has bathed at the confluence of the Ganges and the Yamuna along with his queens and has just now entered his tent. So while he adorns himself let me partake of the first portion of the flowers and perfumes. ( *Walks about* )

( *Behind the scenes* )

Alas! Alas! Here has a hawk borne away the ruby, taking it for a piece of flesh, the ruby which well would adorn the crown of our Lord's dearest Queen, when I was taking it along in a silk-covered box of palm-leaf.

VIDUSHAKA—(*Listening*). What a mischance! That was the crest-gem of reunion highly prized by my friend.

जो वअस्सस्स संगमणीओ णाम चूडा-मणी । अद्दो खु असमत्त-णेवच्छो तत्तभवं आसणादो उट्ठिअ इदो ज्जेव आअच्छदि । जाव णं उवसप्पामि । अत्याहितम् । परं बहुमतः खलु स वयस्यस्य संगमनीयो नाम चूडामणिः । अहो खलु असमाप्तनेपथ्यस्तत्रभवानासनादुत्थाय इत एवागच्छति । यावदेनमुपसर्पामि ।

[ ततः प्रविशति सावेगपरिजनो राजा । ]

राजा—

आत्मनो वधमाहर्ता क्वासौ विहगतस्करः ।
येन तत्प्रथमं स्तेयं गोप्तुरेव गृहे कृतम् ॥ १ ॥

किराती—एसो एसो खु मुह-कोडि-लग्ग-हेम-सुत्तेण मणिणा आलिहन्तो विअ आआसं पडिब्भमदि । एष एष खलु मुखकोटिलग्नहेमसूत्रेण मणिना आलिखन्निव आकाशं परिभ्रमति ।

राजा—पश्याम्येनम् ।

असौ मुखालम्बितहेमसूत्रं बिभ्रन्मणिं मण्डलचारशीघ्रः ।
अलातचक्रप्रतिमं विहंगस्तद्रागरेखावलयं तनोति ॥२॥

किं नु खलु कर्तव्यम् ।

विदूषकः—[ उपेत्य ] अलं एत्थ घिणाए । अवराही सासणीओ । अलमत्र घृणया । अपराधी शासनीयः ।

राजा—सम्यगाह भवान् । धनुर्धनुस्तावत् ।

[ निष्क्रान्ता धनुर्ग्राहिणी यवनी । ]

राजा—वयस्य न दृश्यते विहंगः ।

विदूषकः—इदो दक्खिणन्तेण अवगदो सासणीओ कुणवभोअणो । इतो दक्षिणान्तेन अपगतः शासनीयः कुणपभोजनः ।

That is why, before finishing his attire, my friend leaves his seat and comes here. So I will approach him.

*( Then enter King with attendants in flurry ).*

KING—Where is the winged thief that courts his own death and presumes to violate for the first time the dwelling of his own protector? (1)

A forest-woman—There is he hovering in the sky, and scratching it, as it were, with the gem, the golden thread whereof he holds in his beak.

KING—Yes I see him.

As quick he flies in swift circles, with the gem the golden chain of which is in his beak, the bird seems to be hemmed in a fiery ring, by the circle of its flashing lustre. (2)

What indeed, is to be done?

VIDUSAKA—Banish compassion in the present case. A culprit deserves to be punished.

KING—You counsel wisely. A bow, a bow.

*( Exit a Yavani—a bow-bearer ɔ the King )*

KING—Friend, the bird is not to be seen.

VIDUSAKA—He has flown away in the south. this carrion-feeder that ought to be punished.

१ राजा—[ परिवृत्य अवलोक्य ] इह इदानीम् ।

प्रभापल्लवितेनासौ करोति मणिना खगः ।
अशोकस्तबकेनेव दिङ्मुखस्यावतंसकम् ॥ ३ ॥

[ प्रविश्य चापहस्ता यवनी । ]

यवनी—भट्टा एदं हत्थावाव-सहिदं सरासणं । भर्तः
२ एतद्धस्तावापसहितं शरासनम् ।

राजा—किमिदानीं धनुषा । बाणपथमतीतः क्रव्य-भोजनः । तथा हि ।

आभाति मणिविशेषो दूरमिदानीं पतत्रिणा नीतः ।
नक्तमिव लोहिताङ्गः परुषघनच्छेदसंयुक्तः ॥ ४ ॥

[कञ्चुकिनं विलोक्य ।] लातव्य मद्वचनादुच्यतां नागरिकः सायं निवासवृक्षाग्रया विचीयतां विहगदस्युरिति ।
३ कञ्चुकी—यदाज्ञापयति देवः ।

[ इति निष्क्रान्तः ]

विदूषकः—उवविसदु भवं संपदं । कहिं गदो रअण-
६ कुम्भीलओ भवदो सासणादो मुच्चिस्सदि । उपविशतु
भवान् सांप्रतम् । क्व गतो रत्नकुम्भीरको भवतः शासनाद् मोक्ष्यते ।

राजा—[विदूषकेण सहोपविश्य ।]

रत्नमिति न मम तस्मिन् मणौ प्रियत्वं विहंगमाक्षिप्ते ।
प्रियया तेनास्मि सखे संगमनीयेन संगमितः ॥ ५ ॥

विदूषकः—णं परिगदत्थो म्हि किदो भवदा । ननु परि-गतार्थोऽस्मि कृतो भवता ।

[ ततः प्रविशति सशरं मणिमादाय कञ्चुकी । ]

कञ्चुकी—जयतु देवः ।

KING—( *Turning and looking* ) Now I see.

With the gem looking large owing to its flashing lustre the bird seems to adorn the face of the quarter as with an ear-ornament made of a bunch of Asoka flowers. [3]

( *Enter a Yavani, with a bow in her hand* )

YAVANI—My Lord, here is a bow with an arm-guard.

KING—What use is the bow, now? The vulture has flown beyond the arrow's reach. For

That excellent gem, as it is carried further by the bird looks like Mars clinging to a strip of a thick cloudlet. [4]

( *Looking towards the chamberlain* ) Latavya, say to the people in my name, 'Do you track this thief of a bird at night to his tree of perch.'

CHAMBERLAIN—As my lord commands.

VIDUSHAKA—Rest you my friend now. Wheresoever gone, this thief of the gem cannot escape your punishment.

KING—( *Sitting along with the Vidushaka* ).

Merely as a gem I have very little regard for the precious stone snatched by the bird; but to this gem of union, I owe reunion with my love. [5]

VIDUSHAKA—Well, you have already told me so.

( *Enter Chamberlain bringing with him the gem and an arrow* ).

CHAMBERLAIN—Victory to my Lord!

अनेन निर्भिन्नतनुः स वध्यो
रोषेण ते मार्गणतां गतेन।
प्राप्यापराधोचितमन्तरिक्षात्
समौलिरत्नः पतितः पतत्री ॥ ६ ॥

[ सर्वे विस्मयं रूपयन्ति । ]

कञ्चुकी—अद्भिः प्रक्षालितो मणिः कस्मै प्रदीयताम् ।

राजा—किराति अग्निशुद्धमेनं कृत्वा पेटकं प्रवेशय ।

किराती—जं भट्टा आणवेदि [ इति मणिं गृहीत्वा निष्क्रान्ता। ]
यद् भर्ता आज्ञापयति ।

राजा—लातव्य अपि जानीते भवान् कस्यायं बाण इति।

कञ्चुकी—नामाङ्कितो दृश्यते न तु मे वर्णविचारक्षमा दृष्टिः।

राजा—तेन ह्युपनय शरम् ।

[ कञ्चुकी तथा करोति । ]

[ राजा नामाक्षराण्यनुवाच्य । सापत्यतां रूपयति । ]

कञ्चुकी—यावन्नियोगमशून्यं करोमि ।

[ इति निष्क्रान्तः

विदूषकः—किं भवं विआरेदि । किं भवान् विचारयति ।

राजा—शृणु तावत् प्रहर्तुर्नामाक्षराणि [ वाचयति ]

उर्वशीसंभवस्यायमैलसूनोर्धनुर्भृतः
कुमारस्यायुषो बाणः प्रहर्तुर्द्विषदायुषाम् ॥ ७ ॥

विदूषकः—[ सपरितोषम् ] दिट्ठिआ संताणेण वड्ढदि
भवं । दिष्ट्या संतानेन वर्धते भवान् ।

राजा—सखे कथमेतत् । अन्यत्र नैमिषेयसत्राद्वियुक्तो-
ऽस्मुर्वश्या । न च मया गर्भव्यक्तिरालक्षिता । कुत एव
प्रसूतिः । किं तु

Pierced by your anger turned into an arrow, the bird that deserved death, having thus met adequate punishment, has fallen from the sky together with the crest-gem. [6]

( *All express wonder* ).

CHAMBERLAIN—To whom shall this gem, cleaned with water, be given?

KING—Ho, forester, purify it in fire and keep it in its box.

Forestwoman—As my Lord commands.

( *Takes the gem and departs* ).

KING—Latavya. know you to whom the shaft belongs?

CHAMBERLAIN—There is some name inscribed upon it, but my eye-sight cannot distinguish the characters.

KING—Well, then, bring the arrow to me.

( *The Chamberlain does as bidden; the King reads the letters of the name and he is a father.*)

CHAMBERLAIN—In the meanwhile, I will attend to my business.

( *Exit* ),

VIDUSHAKA—What are you thinking?

KING—Hear the name of the striker.

" The arrow of Ayus, the archer who strikes at the life of his enemies, the son of Urvashi and Pururavas." [7]

VIDUSHAKA—( *With satisfaction* ). I congratulate you upon your having a son.

KING—Friend, how is this? I have never been away from Urvashi, but for the interval of the sacrifice performed in the Naimisha forest. And I never marked that she was carrying. Whence then this child? But,

आविलपयोधराग्रं लवलीदलपाण्डुराननच्छायम् ।
तानि दिनानि वपुरभूत् केवलमलसेक्षणं तस्याः ॥ ८ ॥

विदूषकः—मा भवं सव्वं माणुसी-धम्मं दिव्वासु संभावेदु । पहावणिगूढाइं ताणं चरिदाइं । मा भवान् सर्वं मानुषीधर्मं दिव्यासु संभावयतु । प्रभावनिगूढानि तासां चरितानि ।

राजा—अस्तु तावदेवं यथा भवानाह । पुत्रसंवरणे किमिव कारणं तत्रभवत्याः ।

विदूषकः—को देवदा-रहस्साइं तक्कइस्सदि । को देवता-रहस्यानि तर्कयिष्यति ।

[ प्रविश्य कञ्चुकी । ]

कञ्चुकी—जयतु जयतु देवः । देव च्यवनाश्रमात् कुमारं गृहीत्वा तापसी संप्राप्ता देवं द्रष्टुमिच्छति ।

राजा—उभयमपि अविलम्बितं प्रवेशय ।

कञ्चुकी—यदाज्ञापयति देवः ।

[ इति निष्क्रम्य चापहस्तेन कुमारेण तापस्या च सह प्रविष्टः । ]

कञ्चुकी—इत इतो भगवती । [ सर्वे परिक्रामन्ति । ]

विदूषकः—[ विलोक्य ] किं ण खु सो एसो तत्तभवं खत्तिअ-कुमारओ जस्स णामङ्किदो गिद्ध-लक्ख-वेधी अद्ध-णाराओ । तह बहुअरं भवन्तं अणुकरेदि । किं न खलु स एष तत्रभवान् क्षत्रियकुमारको यस्य नामाङ्कितो गृध्रलक्ष्यवेधी अर्धनाराचः । तथा बहुतरं भवन्तमनुकरोति ।

राजा—स्यादेवम् । अतः खलु

बाष्पायते निपतिता मम दृष्टिरस्मिन्
वात्सल्यबन्धि हृदयं मनसः प्रसादः ।

During those days, her breasts had their nipples darkened, and her cheeks grew pale as the Lavali leaf, and her eyes were full of lassitude. [8]

VIDUSHAKA—You must not suppose that the heavenly nymphs betray the qualities of mortals. They can keep their doings hidden through their power.

KING—It may be as you say. But why should she have concealed her son?

VIDUSHAKA—Who can fathom the mystery of the celestial beings?

( *Enter chamberlain* ).

CHAMBERLAIN—Glory to our Lord! a hermit-woman has come from the religious domicile of the sage Chyavana, with a boy, and desires to see Your Majesty.

KING—Usher both of them without delay.

CHAMBERLAIN—As my Lord commands.

(*Departs, and then enters leading the boy with a bow in his hand, and the hermit woman*).

CHAMBERLAIN—This way, madam, this way.

( *All move about* )

VIDUSHAKA—(*Observing*). Could this be the Kshatriya lad, to whom belongs the arrow that hit the vulture? To be sure, he looks your image to a great extent.

KING—That is possible. And hence?

My eyes are dimmed with tears as they rest on him, my heart is filled with tenderness, and my mind

संजातवेपथुभिरुज्झितधैर्यवृत्ति-
रिच्छामि चैनमदयं परिरब्धुमङ्गैः ॥ ९ ॥

कञ्चुकी—भगवति एवं स्थीयताम् ।

[ तापसीकुमारौ स्थितौ । ]

राजा—अम्ब अभिवादये ।

१ तापसी—महा-भाअ सोम-वंस-वित्थारइत्तओ होहि ।
[ आत्मगतम् ] अम्हो अणाचक्खिदोवि विण्णादो इमस्स
राएसिणो आउसो अ ओरसो संबन्धो । [ प्रकाशम् ]
६ जाद पणम दे गुरुं । महाभाग सोमवंशविस्तारयिता भव । अहो
अनाख्यातोपि विज्ञातः अस्य राजर्षेरायुषश्चौरसः संबन्धः । जात प्रणम
ते गुरुम् ।

९ [ कुमारश्चापगर्भमञ्जलिं करोति । ]

राजा—आयुष्मान् भव ।

कुमारः—[ आत्मगतम् ]

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।
उत्सङ्गवर्धितानां गुरुषु भवेत् कीदृशः स्नेहः ॥ १० ॥

राजा—भगवति किमागमनप्रयोजनम् ।

तापसी—सुणादु महाराओ । एसो दीहाऊ आऊ जाद-
३ मेत्तो एव्व उव्वसीए किंवि णिमित्तं अवेक्खिअ मम
हत्थे णासी-किदो । जं खत्तिअ-कुमारअस्स जाद-कम्मादि
विहाणं तं से भअवदा चवणेण असेसं अणुचिट्ठिदं ।
६ गहिद-विज्जो धणुव्वेदे अहिविणीदो । शृणोतु महाराजः ।
एष दीर्घायुरायुर्जातमात्र एव उर्वश्या किमपि निमित्तमवेक्ष्य मम
हस्ते न्यासीकृतः । यत् क्षत्रियकुमारस्य जातकर्मादि विधानं तदस्य

becomes serene. Seized by a tremor, and my equanimity gone, I desire to clasp him close with my limbs. [9]

CHAMBERLAIN—Revered lady, here pause.

(*The hermit woman and the boy stand*).

KING—Hail, holy dame!

HERMIT-WOMAN—Fortunate one, may you continue the line of Soma. (*To herself*) Ah, without being told, one may tell that the royal sage and Ayus are bound by ties of blood. (*Aloud*) Boy, pay your homage to your father.

(*Joins his hands in reverence, still holding the bow in them*).

KING—May your years be many!

BOY—(*To himself*). If such my love on hearing that he is my father and I his son, how great must be the love of those who grew up fondled in the laps by their fathers? [10]

KING--Revered lady, what brings you here?

HERMIT-WOMAN—Let my lord hear. This long-lived child was for some cause confided to my care by Urvashi, the moment he was born. The rites of birth and other rites proper to the warrior-lad have been duly performed by the sage Chyavana. After having learned the sciences, he has been trained to archery.

भगवता च्यवनेन अशेषमनुष्ठितम् । गृहीतविद्यो धनुर्वेदेऽभिविनीतः ।

राजा—सनाथः खलु संवृत्तः ।

तापसी—अज्ज पुप्फ-समिदत्थं इसि-कुमारएहिं सह-गदेण इमिणा अस्सम-विरुद्धं आअरिदं । अद्य पुष्पसमिदर्थं ऋषिकुमारकैः सह गतेन अनेन आश्रमविरुद्धमाचरितम् ।

विदूषकः—[ सावेगम् ] किं विअ । किमिव ।

तापसी—गहिदामिसो किल गिद्धो पादव-सिहरे णिलीअमाणो अणेण लक्खी-किदो बाणस्स । गृहीतामिषः किल गृध्रः पादपशिखरे निलीयमानोऽनेन लक्ष्यीकृतो बाणस्य

[ विदूषको राजानमवलोकयति । ]

राजा—ततस्ततः ।

तापसी—तदो उवलद्ध-उत्तन्तेण भअवदा चवणेण अहं समादिट्ठा । णिज्जादेहि हत्थ-णासंति । ता इच्छामि देविं उव्वसिं पेक्खिदुं । तत उपलब्धवृत्तान्तेन भगवता च्यवनेन अहं समादिष्टा । निर्यातय हस्तन्यासमिति । तदिच्छामि देवीमुर्वशीं प्रेक्षितुम् ।

राजा—तेन हि आसनमनुगृह्णातु भगवती ।

( तापसी उपनीत आसने उपविशति । )

राजा—लातव्य आहूयतामुर्वशी ।

कञ्चुकी—यथाज्ञापयति देवः ।

[ इति निष्क्रान्तः ]

राजा—[ कुमारमवलोक्य ] एह्येहि वत्स ।

सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपगतेन ।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥ ११ ॥

KING—So he had a protector indeed.

HERMIT-WOMAN-Today while he had gone out to fetch flowers and wood with the boys of the ascetics, he acted in a way to violate ( the sanctity of, ) the hermitage.

VIDUSHAKA—( *Hurriedly* ) How ?

HERMIT-WOMAN—They say that he aimed an arrow at a vulture that carried a bit of flesh and was perched on a tree-top.

( *Vidushaka looks at the King* ).

KING—What next ?

HERMIT-WOMAN—Then the revered Chyavana who learnt about it, bade me : return your deposit. So I wish to see Queen Urvashi.

KING—Well, please, holy dame, take a seat.

( *The Hermit-Woman occupies a seat brought for her* ).

KING—Latavya, call Urvashi.

CHAMBERLAIN—As my Lord commands.

( *Exit* ).

KING—(*Looking at the prince* ). Come, child, come.

The touch of a son's person, they say shoots ecstasy through the whole body: therefore come and gladden me, as the moon's ray, the moonstone. [11]

तापसी—जाद आणन्देहि पिदरं । जात आनन्दय पितरम् ।

[ कुमारः राजानमुपगम्य पादग्रहणं करोति । ]

राजा—[ कुमारं परिष्वज्य पादपीठे चोपवेश्य ] वत्स इतस्तव पितुः प्रियसखं ब्राह्मणमशङ्कितो वन्दस्व ।

विदूषकः—किं ति सङ्किस्सदि । अस्सम-वास-परिचिदो एव्व साहामिओ । किमिति शङ्किष्यते । आश्रमवासपरिचित एव शाखामृगः ।

कुमारः—[ सस्मितम् ] तात वन्दे ।

विदूषकः—सत्थि भवदे । स्वस्ति भवते ।

[ ततः प्रविशति उर्वशी कञ्चुकी च । ]

कञ्चुकी—इत इतो देवी ।

उर्वशी—[ कुमारमवलोक्य ] को णु खु एसो स-बाणासणो पादपीठे सअं महाराएण संजमीअमाण-सिहण्डओ चिट्ठदि [ तापसीं दृष्ट्वा ] अम्मो सच्चवदी-सूइदो मे पुत्तओ आऊ । महन्तो खु संवुत्तो । [ परिक्रामति ] को नु खल्वेष सबाणासनः पादपीठे स्वयं महाराजेन संयम्यमानशिखण्डकस्तिष्ठति । अहो सत्यवतीसूचितो मम पुत्रक आयुः । महान् खलु संवृत्तः ।

राजाः—[ उर्वशीं दृष्ट्वा ]

इयं ते जननी प्राप्ता त्वदालोकनतत्परा ।
स्नेहप्रस्रवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥ १२ ॥

तापसी—जाद एहि पच्चुग्गच्छ मादरं । जात एहि प्रत्युद्गच्छ मातरम् ।

[ कुमार उर्वशीं प्रत्युद्गच्छति । ]

उर्वशी—अम्ब पाद-पणामं करेमि । अम्ब पादप्रणामं करोमि ।

HERMIT-WOMAN—Child, gladden your father.

*( The prince approaches the King and touches his feet).*

KING—*(Embracing the prince and placing him on the foot-stool ).* Child, here is this Brahmin, your father's dear friend. Bow to him without fear.

VIDUSHKA—Why should he fear ? He has been familiar enough with monkeys during his stay in the hermitage.

PRINCE—Father, I bow.

VIDUSHAKA—Fortune attend thee.

*( Enter Urvashi and the Chamberlain ).*

CHAMBERLAIN—This way, Queen, this way.

URVASHI—*(Looking at the prince ).* Who is this, armed with the bow and seated on footstool, whose crest-knot is being tied by my Lord himself ? *( Looking at the hermit-woman ).* Oh, it must be my son Ayus, as Satyavati's presence makes clear. *( Walks about ).*

KING—*(Seeing Urvashi ).*

Here comes your mother boy, her gaze .intently fixed upon you; and her breast-scarf all wetted with the milk distilled through a mother's love. [ 12 ]

HERMIT-WOMAN—Child, come, meet your mother.

*( The prince goes to meet Urvashi ).*

URVASHI—Mother, I reverence your feet.

तापसी—वच्छ भत्तुणो बहु-मदा होहि । वत्से भर्तुर्बहुमता भव ।

कुमारः—अम्ब अभिवादये ।

उर्वशी—[ कुमारमुन्नमितमुखं परिष्वज्य ] वच्छ पिदरं आराहइत्तओ होहि । [ राजानमुपेत्य ] जेदु जेदु महाराओ । वत्स पितरमाराधयिता भव । जयतु जयतु महाराजः ।

राजा—स्वागतं पुत्रवत्यै । इत आस्यताम् [ अर्धासनं ददाति ]

[ उर्वशा उगविशति । ]

तापसी—एसो गहिद-विज्जो आऊ संपदं कवअ-हरो संवुत्तो । एदस्स दे भत्तुणो समक्खं णिज्जादिदो हत्थणिक्खेवो । ता विसज्जेदुं इच्छामि । उवरुज्झइ मे अस्समधम्मो । एष गृहीतविद्य आयुः सांप्रतं कवचहरः संवृत्तः । तदेनस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः । तद् विसर्जयितुमिच्छामि । उपरुध्यते ममाश्रमधर्मः ।

उर्वशी—चिरस्स अज्जं देक्खिअ अहिअदरं आविंतिण्हम्हि । ण सक्कुणोमि विसज्जिदुं । अण्णय्यं उवरोहिदुं । गच्छदु अज्जा पुणो-दंसणाअ । चिरस्यार्यां दृष्ट्वा अधिकतरमवितृष्णास्मि । न शक्नोमि विस्रष्टुम् । अन्याय्यमुपरोद्धुम् । गच्छत्वार्या पुनर्दर्शनाय ।

राजा—अम्ब भगवते च्यवनाय मां प्रणिपातय ।

तापसी—एव्वं भोदु । एवं भवतु ।

कुमारः—आर्ये सत्यं यदि निवर्तसे मामपि आश्रमं नेतुमर्हसि ।

राजा—अयि वत्स उषितं त्वया पूर्वस्मिन्नाश्रमे । द्वितीयमध्यासितुं तव समयः ।

HERMIT-WOMAN—Child, ever may you retain your Lord's highest regard !

PRINCE—Mother, accept my salutations.

URVASHI—( *Embracing the prince, whose face is upturned* ). Child, may you ever please your father. ( *Approaching the King* ). Glory to my Lord !

KING—To the matron, honour ! Please to sit here. (*Gives her half his seat* ).

( *Urvashi sits; all take their proper seats* )

HERMIT-WOMAN—This Ayus, who has been taught the sciences, is now old enough to wear the armour. So I have returned this deposit in the presence of your husband. So I wish to take my leave of you. For, my duties in the hermitage suffer.

URVASHI—Having seen you after such a long time, I feel particularly eager ( to see you ). I am not able to give you leave to go. But it would be on the other hand unjust to detain you. So may you go now to meet again.

KING—Mother, bear my reverence to the holy Chyavana.

HERMIT-WOMAN—It would be so.

PRINCE—Noble lady, if you are really going, will you not take me to the hermitage ?

KING—Well, child, you have already lived the life of a student. It is now time you enter the second order ( the life of a householder )

तापसी—आद गुरुणो वअणं अणुचिट्ठ । जात गुरोर्वचन-मनुतिष्ठ ।

कुमार—तेन हि

यः सुप्तवान् मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।
तं मे जातकलापं प्रेषय मणिकण्ठकं शिखिनम् ॥ १३ ॥

तापसी—[ विहस्य ] एव्वं करेमि । सत्थि भोदु तुम्हाणं । एवं करोमि । स्वस्ति भवतु युष्मभ्यम् ।

२ [ इति निष्क्रान्ता ।

राजा—कल्याणि

अद्याहं पुत्रिणामग्र्यः सत्पुत्रेणामुना तव ।
पौलोमीसंभवेनेव जयन्तेन पुरंदरः ॥ १४ ॥

[ उर्वशी स्मृत्वा रोदिति । ]

विदूषकः—किं णु खु तत्तहोदी एक्क-पदे अस्सु-मुही
२ संवुत्ता । किं नु खलु तत्रभवती एकपदेऽश्रुमुखी संवृत्ता ।

राजा—[ सावेगम् ]

किं सुन्दरि प्ररुदितासि ममोपपन्ने
वंशस्थितेरधिगमान्महति प्रमोदे ।
पीनोन्नतस्तनविसर्पिभिरानयन्ती
मुक्तावलीविरचनापुनरुक्तिमस्रैः ॥ १५ ॥

[ बाष्पमस्याः प्रमार्ष्टि । ]

उर्वशी—सुणादु महाराओ पढमं उण पुत्त-दंसणेण
२ विसुमरिद म्हि । दाणिं महिन्द-संकित्तणेण समओ मह हिअअं आआसेदि । शृणोतु महाराजः प्रथमं पुनः पुत्रदर्शनेन विस्मृतास्मि । इदानीं महेन्द्रसंकीर्तनेन समयो मम हृदयमायासयति ।

HERMIT-WOMAN—Child, follow the bidding of your father.

PRINCE—Well then.

Send me the peacock Manikanthaka when he will have grown his plumage, the peacock that feeling happy at my scratching him about the crest would go to sleep in my lap. [13]

HERMIT-WOMAN—( *Smiling* ). That I will do. Peace unto all. ( *Exit* ).

KING—Fair one,

By this excellent son of yours, I think myself the first among fathers like Indra by Jayanta, the son of Paulomi. [14]

( *Urvashi remembers and weeps* ).

VIDUSHAKA—How all of a sudden the face of my lady is veiled with tea s ?

KING—( *Hurriedly* ).

When great joy has come to me through the perpetuation of my race why should you, my dearest, weep, thus rendering superfluous the pearl-string by your tears that roll upon your heaving breast? [15]

( *Wipes away her tears* ).

URVASHI—Listen, my Lord. I forgot awhile at the sight of this boy; but now the name of the great Indra brings to my mind the decree that pains my heart.

६ राजा कथ्यतां समयः ।

उर्वशी--अहं पुरा महाराअ-गहिद-हिअआ महिन्देण आणत्ता-अहं पुरा महाराजगृहीतहृदया मन्हेन्द्रेण आज्ञापिता-

९ राजा--किमिति ।

उर्वशी--जदा एसो मम पिअ-सहो राएसी तुइ समु-
प्पण्णस्स वंस-करस्स मुहं पेक्खिस्सदि तदा तुए भूओ
७२ वि मम समीवं आअन्तव्वं ति । तदो मए महाराअ-
विओअ-भीरुदाए जादमेत्तो एव्व विज्जागम-णिमित्तं
भअवदो च्यवणस्स अस्सम-पदे अज्जाए सच्चवदीए हत्थे
७५ अप्पआसं णिक्खित्तो । अज्ज पिदुणो आराहण-समत्थो
संवुत्तो त्ति कलअन्तीए णिज्जादिदो मे दीहाऊ । ता
एत्तिओ मे महाराएण संवासो । यदैष मम प्रियसखो राज-
७८ र्षिस्त्वयि समुत्पन्नस्य वंशकरस्य मुखं प्रेक्षिष्यते तदा त्वया भूयोपि
मम समीपमागन्तव्यमिति । ततो मया महाराजवियोगभीरुतया
जातमात्र एव विद्यागमनिमित्तं भगवतश्च्यवनस्याश्रमपदे आर्यायाः
२७ सत्यवत्या हस्ते अप्रकाशं निक्षिप्तः अद्य पितुराराधनस संवृत्त इति
कलयन्त्या निर्यातितो मे दीर्घायु । तदेतावान् मे मा

[ सर्वे विषादं रूपयन्ति ।

२४ राजा--[ सनिःश्वासम् ] अहो सुखप्रत्यर्थिता दैवस्य ।

आश्वासितस्य मम नाम सुतोपलब्ध्या
सद्यस्त्वया सह कृशोदरि विप्रयोगः ।
व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या
वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् ॥ १६ ॥

विदूषकः--भवं सो अत्थो भवदो अणुबन्धो संवुत्तो संपदं

KING—Tell me what decree.

URVASHI—Formerly when my heart was lost to my Lord, I was bidden by the great Indra—

KING—What was it ?

URVASHI—"When this my dear friend, the royal sage, sees the face of a son that you will bear him, who will perpetuate his family, then will you again come back to me." So afraid of severance from my Lord, I secretly put him, the moment he was born, in charge of the holy dame Satyavati in the hermitage of the sage Chyavana, that he may be initiated into the sciences. Thinking that this day he is of an age when he might give joy to his father, she has brought him back-- this my long-lived boy. So my stay with my dear Lord extends no further.

( *All gesticulate sorrow* ).

KING—(*Sighing*). How hostile to man's happiness is fate !

Scarce have I known the blessing of a son, when my fair one is snatched away from me, as though the blasting lightning should fall on a tree just when it revives from languishment in the blaze of heat, as the young rain descends upon it. [16

VIDUSHAKA—So this is how good fortune is followed by a series of misfortunes. I should think now that my

तक्केमि तत्तभवदा वक्कलं गेण्हिअ तवो-वणं गन्तव्वं ति ।
अयं सोऽर्थः अनर्थानुबन्धः संवृत्तः । सांप्रतं तर्कयामि तत्रभवता वल्कलं
१ गृहीत्वा तपोवनं गन्तव्यमिति ।

उर्वशी—मं पि मन्द-भाइणिं किद-विणअस्स पुत्तस्स लाभाणन्तरं सग्गारोहणेण अवसिद-कज्जं महाराओ
६ समत्थेदि । मामपि मन्दभागिनीं कृतविनयस्य पुत्रस्य लाभानन्तरं स्वर्गारोहणेन अवसितकार्यां महाराजः समर्थयते ।

राजा—मा मैवम्

न हि सुलभवियोगा कर्तुमात्मप्रियाणि
प्रभवति परवत्ता शासने तिष्ठ भर्तुः ।
अहमपि तव सूनावायुषि न्यस्तराज्यो
विचरितमृगयूथान्याश्रयिष्ये वनानि ॥ १७ ॥

कुमारः—नार्हति तातः पुंगवधारितायां धुरि दम्यं नियोजयितुम् ।

१ राजा—अयि वत्स

शमयति गजानन्यान् गन्धद्विपः कलभोऽपि सन्
भवति सुतरां वेगोदग्रं भुजंगशिशोर्विषम् ।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्यसहो भरः ॥ १८ ॥

लातव्य मद्वचनादमात्यपरिषदं ब्रूहि संभ्रियतामायुषो राज्याभिषेक इति ।

२ कञ्चुकी—यदाज्ञापयति देवः । [ इति दुःखितो निष्क्रान्तः ]
[ सर्वे दृष्टिप्रतिघातं रूपयन्ति । ]

राजा—[ आकाशमवलोक्य ] किं नु खलु निरभ्रे विद्युत्संपातः ।

friend should wear barks and betake himself to some holy forest retreat.

URVASHI—Will the King regard me—unfortunate that I am—as one who has done her task, when I shall be gone to Svarga, now that I have got back my child who has finished his education !

KING—No. not so.

It is dependence, which, making severance only too natural, does not allow a person to have his own way. Do you obey your Lord. For me, I will resign my throne to your son Ayus and retire into the forest where herds of deer freely move. [17]

PRINCE—It is scarcely meet that father should put an inexperienced bull to a yoke borne by a veteran.

KING—Ah, child

Even the cub of an excellent elephant soon subdues other elephants; the infant snake produces deadliest poison; a king even in his childhood is endowed with power to protect the earth. It is nature, therefore, and not age that gives each this fitness to bear his responsibility. [18]

Latavya, bid, in my name, our ministers to prepare for the coronation of Ayus.

CHAMBERLAIN—As my lord commands.

*( Departs in sadness ).*

*(All show as if their eyes are dazed ).*

KING—*(Looking to the sky).* How, a lightning-flash in a fair sky !

६ उर्वशी—[ विलोक्य ] अम्मो भअवं णारदो । अहो भग-
वान् नारदः ।

राजा—अये भगवान् नारदः । य एष

गोरोचनानिकषपिङ्गजटाकलापः
संलक्ष्यते शशिकलामलवीतसूत्रः ।
मुक्तागुणातिशयसंभृतमण्डनश्री-
र्हेमप्ररोह इव जङ्गमकल्पवृक्षः ॥ १९ ॥

अर्घ्यमस्मै ।

उर्वशी—[ यथाक्रममादाय ] इअं भअवदे अरिहणा । इयं
३ भगवतेऽर्हणा ।

[ ततः प्रविशति नारदः । ]

नारदः—विजयतां मध्यमलोकपालः ।

राजा—[ उर्वशीहस्तादर्घ्यमादाय आवर्ज्य ] भगवन्नभिवादये ।

उर्वशी—भअवं पणमामि । भगवन् प्रणमामि ।

नारदः—अविरहितौ दंपती भूयास्ताम् ।

९ राजा—[ आत्मगतम् ] अपि नामैवं स्यात् [ प्रकाशम् ।
कुमारमाश्लिष्य ] वत्स भगवन्तमभिवादयस्व ।

कुमारः—भगवन्नौर्वशेय आयुः प्रणमति ।

नारदः—आयुष्मानेधि ।

राजा—अयं विष्टरोऽनुगृह्यताम् ।

[ नारदस्तथोपविष्टः ।

सर्वे नारदमनूपविशन्ति । ]

नारदः—राजन् श्रूयतां महेन्द्रसंदेशः ।

राजा—अवहितोऽस्मि ।

URVASHI—(*Observing*). Ah, it is Narada.

KING—Ah, the holy Narada! Who with his matted hair bright yellow like a streak of Gorochana on a touchstone, his sacred thread pure as the crescent of the moon looks like a moving tree of heaven profusely adorned with wreaths of excellent pearls, and growing shoots of gold. [19]

Bring materials of worship for him.

URVASHI—(*Bringing what is asked for*). Here is offering for the holy sage.

(*Enter Narada*)

NARADA—Hail to the Lord of this middle sphere!

KING—(*Taking the offering from Urvashi and presenting it*). Reverence to the sage!

URVASHI—My homage to the holy one.

NARADA—Never be wife and husband disunited!

KING—(*To himself*) Oh, might this be! (*Aloud, embracing the prince*) Child, pay your adoration to the holy sage.

PRINCE—Holy sir, here is Ayus, the son of Urvashi. paying his homage.

NARADA—May your days be many!

KING—Please to honour this seat.

(*Narada takes his seat. Others occupy their seats after Narada.*)

NARADA—King, listen to the message of the great Indra.

KING—I am all attention.

७८ नारदः—प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति ।

राजा—किमाज्ञापयति ।

१७ नारदः—त्रिकालदर्शिभिर्मुनिभिरादिष्टः सुरासुरसंगरो भावी । भवांश्च सांयुगीनः सहायो नः । तेन त्वया न शस्त्रं संन्यस्तव्यम् । इयं चोर्वशी यावदायुस्तव सहध-
२४ र्मचारिणी भवत्विति ।

उर्वशी—[ अपवार्य ] अम्महे सल्लं मे हिअआदो अवणीदं विअ । अहो शल्यं मे हृदयादपनीतमिव ।

२७ राजा—परवानस्मि देवेश्वरेण ।

नारदः—युक्तम् ।

त्वत्कार्यं वासवः कुर्यात् त्वं च तस्येष्टमाचरेः ।
सूर्यः समेधयत्यग्निमग्निः सूर्यं च तेजसा ॥ २० ॥

[आकाशमवलोक्य ।] रम्भे उपनीयतां स्वयं महेन्द्रेण संभृतः कुमारस्यायुषो यौवराज्याभिषेकः ।

३ [ प्रविश्य यथोक्तहस्ता अप्सरसः । ]

अप्सरसः—भअवं इमे अभिसेअ-संभारा । भगवन्नेतेऽभिषेकसंभाराः ।

६ नारदः—उपवेश्यतामायुष्मान् भद्रपीठे ।

रम्भा—इदो वच्छ [ कुमारमुपवेशयति ] इतो वत्स ।

नारदः—[ कुमारस्य शिरसि कलशमावर्ज्य ] रम्भे निर्वर्त्यतां
९ शेषो विधिः ।

रम्भा—[ यथोक्तं निर्वर्त्य ] वच्छ पणम भअवन्तं मादापिदरे अ । वत्स प्रणम भगवन्तं मातापितरौ च ।

NARADA—Indra, who knows through his divine power, bids you who have made up your mind to retire to the forest—

KING—What are his commands?

NARADA—Sages, who can see the past, the future, and the present, have foretold hostilities between gods and demons. You are our worthy ally in the wars. Therefore, do not relinquish your arms; and this Urvashi shall be your wife as long as you live.

URVASHI—(*Aside*). A barbed arrow has been extracted from my bosom!

KING—I am subservient to the will of the King of the Gods.

NARADA—It is wisely said.

Indra will work your good, and you too will act
according to his wishes; the Sun sustains Fire with
light, and Fire too with light nourishes the Sun. [20]

(*Looking to the sky*). Rambha, bring the materials for the coronation of prince Ayus as Yuvaraja, which great Indra himself has prepared.

(*Enter nymphs carrying in their hands the materials mentioned*).

NYMPHS—Holy sir, here are the materials of coronation.

NARADA—Let the prince be seated on the holy throne.

RAMBHA—Come here, child. (*Leads the prince to the seat*).

NARADA—(*Pouring water from the ewer on the head of the prince*). Rambha, complete the rite.

RAMBHA—(*Doing as bidden*) Child, pay you adoration to the holy sage and to your parents.

[ कुमारः यथाक्रमं प्रणमति । ]

नारदः—स्वस्ति भवते।

राजा—कुलधुरंधरो भव ।

उर्वशी—पिदुणो आराधइत्तओ होहि। पितुराराधयिता भव।

[ नेपथ्ये वैतालिकौ ।]

प्रथमः—विजयतां युवराजः ।

अमरमुनिरिवात्रिर्ब्रह्मणोऽत्रेरिवेन्दु-
बुंध इव शिशिरांशोर्बोधनस्येव देवः ।
भव पितुरनुरूपस्त्वं गुणर्लोककान्तै-
रतिशयिनि समाप्ता वंश एवाशिषस्ते ॥ २१ ॥

द्वितीयः—

तव पितरि पुरस्तादुन्नतानां स्थितेऽस्मिन्
स्थितिमति च विभक्ता त्वय्यनाकम्प्यधैर्ये ।
अधिकतरमिदानीं राजते राज्यलक्ष्मी-
र्हिमवति जलधौ च व्यस्ततोयेव गङ्गा ॥ २२ ॥

अप्सरसः—[ उर्वशीमुपेत्य ] दिट्ठिआ पुत्तस्स जुव-राअसिराए भत्तुणो अविरहेण वड्ढसि। दिष्ट्या पुत्रस्य युवराजश्रिया भर्तुरविरहेण वर्धसे ।

उर्वशी—साहारणो एसो अब्भुदओ। [कुमारं हस्तेगृहीत्वा] एहि वच्छ जेट्ठ-मादरं अभिवन्देहि। साधारण एषोऽभ्युदयः। एहि वत्स ज्येष्ठमातरमभिवन्दस्व ।

[ कुमारः प्रतिष्ठते । ]

राजा—तिष्ठ। सममेव तत्रभवत्याः समीपं यास्यामस्तावत्।

( *The prince bows in due order* )

NARADA—Blessing on you.

KING—Be you the foremost of your family.

URVASHI—Be obedient to your father.

( *Behind the scenes, bards* )

FIRST BARD—Glory to the young King.

Like the Divine sage Atri of Brahman, or the Moon of Atri, or Budha of the moon, and our King of Budha, so do you be worthy of your father by your qualities which are dear to the people. For in your most exalted family all blessings have indeed reached their highest pitch. [21]

SECOND BARD—

Now royal glory shines more bright divided as it is between your father, the foremost of the exalted, and yourself whose fortitude is unshakable and who are so upright, like the Ganges whose waters are divided between the Himalaya and the Ocean. [22]

NYMPHS—(*Approaching Urvashi*) We congratulate you upon your son's coronation as Yuvaraja and upon your union, without fear of separation, with your husband.

URVASHI—This happiness is common to us all.(*Holding the prince by the hand*). Come, child, pay your reverence to your elder mother.

( *The prince starts* ).

KING—Wait. We shall all go together to her ladyship.

१ नारदः—

आयुषो यौवराज्यश्रीः स्मारयत्यात्मजस्य ते ।
अभिषिक्तं महासेनं सैनापत्ये मरुत्वता ॥ २३ ॥

राजा—एवमनुगृहीतो भगवता कथं न योग्यो भविष्यति ।

नारदः—किं ते भूयः पाकशासनः प्रियं करोतु ।

२ राजा—यदि मे मघवा प्रसन्नः किमतः परमिच्छामि । तथापीदमस्तु ।

[ भरतवाक्यम् । ]

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
संगतं श्रीसरस्वत्योर्भूतयेऽस्तु सदा सताम् ॥ २४ ॥

[ इति निष्क्रान्ताः सर्वे । ]

॥ इति विक्रमोर्वशीये नाटके पञ्चमोऽङ्कः ॥

॥ समाप्तमिदं विक्रमोर्वशीयं नाटकम् ॥

NARADA—This installation as Yuvaraja of your son Ayus reminds me of the coronation of Mahasena by Indra, as chief of the heavenly host. [23]

KING—When so favoured by the holy sage, how could he fail to prove worthy?

NARADA—What further favour would you ask of Indra?

KING—If Lord Indra is pleased with me, what more can I desire? Still let this be my prayer.

( *Benediction* ).

May learning and wealth, that oppose each other, unite in one common abode, which is ever so rare, to bring prosperity to the good. [24]

( *Exeunt Omnes* ).

**END.**

## Appendix—A.

# श्लोकसूची ।

## Appendix B—Metrical Table.

| Number of syllables per quarter. | Name of the Metre. | Where employed. | Total | Measure. |
|---|---|---|---|---|
| 8 | अनुष्टुप् | I. 12,13, 14; II 4, 5, 15,17,19; III. 9, II, 18, 21; IV. 9,14,17, 18, 19,21,27,31,40; V. 1, 3,7,12,14,20,23,24. | 29 | पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । गुरु षष्ठं च पादानां चतुर्णां स्यादनुष्टुभि ॥ |
| 11 | उपजाति | I. 17,18; IV 35; V. 2, 6. | 5 | स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा प्रथमे लघौ सा । ( इत्यनयोरुपजातिः । ) |
| 12 | द्रुतविलम्बित | II. 9; III. 6; IV 26,29. | 4 | द्रुतविलम्बितमाह नभौ भरौ । |
| 12 | वंशस्थ | I. 5, 9; III. 12, 13; IV. 7, 37, 39. | 7<br>2 | जतौ तु वंशस्थमुदीरितं जरौ । |
| 13 | मञ्जुभाषिणी | IV. 33, 43. | | सजसा जगौ च यदि मञ्जुभाषिणी । |
| 14 | वसंततिलका | I. 3; II, 14,16; III. 19 20; IV. 6, 11,15; V. 9 15, 16, 19. | 12 | ज्ञेया वसंततिलका तभजा जगौ गः । |
| 15 | मालिनी | II. 6, IV; 10,13,22; V. 17, 21, 22. | 7 | ननमयययुतेयं मालिनी भोगिलोकैः । |

( Continued on next page )

| | | | | |
|---|---|---|---|---|
| 17 | पृथ्वी | II. 11. | 1 | जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः । |
| 17 | मन्दाक्रान्ता | I.7;II.1;III.1;IV.4. | 4 | मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम् । |
| 17 | शिखरिणी | IV. 28, 34. | 2 | रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी । |
| 17 | हरिणी | II.10;III.10;IV.20; V. 18. | 5 | नसमरसला गः षड्वेदैर्हयैर्हरिणी मता । |
| 19 | शार्दूलविक्रीडित | I.1,4,8;II.7,20,23; III.2,15;IV.2,25,38. | 11 | सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् । |
| 10/11 | वैतालीय ( वियोगिनी ) | IV. 12. | 1 | विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी । |
| 11/12 | अपरवक्त्र | II. 22. | 1 | अयुजि ननरला गुरुः समे तदपर- वक्त्रमिदं नजौ जरौ । |
| 11/12 | औपच्छन्दसिक | I.15,16;II,18;III.7; IV. 3, 16. | 6 | पर्यन्ते यौं तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम् । |
| 12/13 | पुष्पिताग्रा | III. 3, 22. | 2 | अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा । |
| | आर्या | I.2,6,10,11;II.2,3, 8,21;III.4,5,8,14, 16,17;IV.5,8,23,24, 30,32,36,41,42;V.4, 5, 8, 10, 11, 13. | 29 | यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥ |

*N. B.*—Verses 12 and 13 of act II are Prakrit Gathas.

# Appendix C.

## Text of Act IV according to the Northern Recension.

पिअ-सहि-विओअ-विमणा सहि हंसी वाउला समुल्लवइ।
सूर-कर-फंस-विअसिअ-तामरसे सरवरुस्सङ्गे ॥ 1 ॥

प्रियसखीवियोगविमनाः सखी हंसी व्याकुला समुल्लपति ।
सूर्यकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे ॥ 1 ॥

[ इति चित्रलेखासहजन्ययोः प्रावेशिक्याक्षिप्तिका । ततः प्रविशति विमनस्का चित्रलेखा सहजन्या च । चित्रलेखाप्रवेशान्तरे द्विपदिका दिशोऽवलोक्य । ]

सहअरि-दुक्खालिद्धअं। सरवरअम्मि सिणिद्धअं ॥
वाहोवग्गिअ-णअणअं। तम्मइ हंसी-जुअलअं ॥ 2 ॥

सहचरीदुःखालीढं सरोवरे स्निग्धम् ।
बाष्पावविल्गितनयनं ताम्यति हंसीयुगलम् ॥ 2 ॥

सहजन्या—[ चित्रलेखां विलोक्य ] सहि मिलाअमाण-सदवत्तस्स विअ दे मुहस्स छाआ हिअअस्स अस्सत्थदं सूअदि । ता कहेहि णिव्वेद-कारणं । सम-दुक्खा भविदुं इच्छामि ।

सखि म्लायमानशतपत्रस्येव ते मुखस्य छाया हृदयस्य अस्वस्थतां सूचयति । तत् कथय निर्वेदकारणम् । समदुःखा भवितुमिच्छामि ।

चित्रलेखा—अच्छरा-वार-पज्जाएण इह भअवदो सुज्जस्स पादमूलोवट्ठाणं वहृदि त्ति वलिअं खु उक्कण्ठिम्ह

उक्कण्ठिद म्हि। अप्सरोवारपर्यायेण इह भगवतः सूर्यस्य पादमूलोपस्थानं वर्तत इति बलवत् खलूर्वश्यामुत्कण्ठितास्मि।

सहजन्या—जाणे वो अण्णोण्ण-सिणेहं। तदो तदो। जाने युवयोरन्योन्यस्नेहम्। ततस्ततः।

चित्रलेखा—तदो इमाइं दिवसाइं को णु खु वुत्तन्तो त्ति पणिधाणट्ठिदाए मए अच्चाहिदं उवलद्धं। तत एतेषु दिवसेषु को नु खलु वृत्तान्त इति प्रणिधानस्थितया मया अत्याहितमुपलब्धम्।

सहजन्या—[ सावेगम् ] कीरिसं विअ। कीदृशमिव।

चित्रलेखा—उव्वसी किल तं रदि-सहाअं राएसिं अमच्चेसु णिवेसिद-रज्ज-धुरं गेण्हिअ गन्धमादण-वणं विहरिदुं गदा। उर्वशी किल तं रतिसहायं राजर्षिममात्येषु निवेशितराज्यधुरं गृहीत्वा गन्धमादनवनं विहर्तुं गता।

सहजन्या—सो णाम संभोओ जो तारिसेसु पदेसेसु। तदो तदो। स नाम संभोगो यस्तादृशेषु प्रदेशेषु। ततस्ततः।

चित्रलेखा—तहिं खु मन्दाइणीए पुलिणेसु गदा सिअदा-पव्वद-केलीहिं कीलमाणा विज्जाधर-दारिआ उदयवदी णाम तेण राएसिणा णिज्झाइद त्ति कुविदा उव्वसी। तत्र खलु मन्दाकिन्याः पुलिनेषु गता सिकतापर्वतकेलीभिः क्रीडन्ती विद्याधरदारिका उदयवती नाम तेन राजर्षिणा निध्यातेति कुपिता उर्वशी।

सहजन्या—होदव्वं। दूरारूढो खु पणओ असहणो। तदो तदो। भवितव्यम्। दूरारूढः खलु प्रणयः असहनः। ततस्ततः।

चित्रलेखा—तदो भट्टिणो अणुणअं अपडिवज्जमाणा गुरु-साव-संमूढ-हिअआ इत्थिआ-जण-परिहरणिज्जं कुमार-वणं पविट्ठा। पवेसाणन्तरं च काणणोवन्तवत्तिलदाभा-

वेण परिणदं से रूवं । ततो भर्तुरनुनयमप्रतिपद्यमाना गुरुशाप-संमूढहृदया स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा । प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम् ।

सहजन्या—णत्थि विहिणो अलङ्घणिज्जं । तस्स अणुराअस्स अअं णाम एक्कपदे ईरिसो अणत्थो । अह किमवत्थो सो राएसी । नास्ति विधेरलङ्घनीयम् । तस्यानुरागस्य अयं नाम एकपद ईदृशोनर्थः । अथ किमवस्थः स राजर्षिः ।

चित्रलेखा—तस्सिं एव्व काणणे पिअदमं विचिण्णन्तो अहोरत्ते अदिवाहेदि । इमिणा उण णिव्वुदाणं पि उक्कण्ठाकारिणा मेहोदएण अणत्थाहीणो हविस्सदि । तस्मिन्नेव कानने प्रियतमां विचिन्वन्नहोरात्रानतिवाहयति । एतेन पुनर्निर्वृतानामपि उत्कण्ठाकारिणा मेघोदयेन अनर्थाधीनो भविष्यति ।

[ अनन्तरे जम्भालिका । ]

सहअरि-दुक्खालिद्धअं सरवरअम्मि सिणिद्धअं ।
अविरल-वाह-जलोल्लअं तम्मइ हंसी-जुअलअं ॥3॥

सहचरीदुःखालीढं सरोवरे स्निग्धम् ।
अविरलबाष्पजलार्द्रं ताम्यति हंसीयुगलम् ॥ 3 ॥

सहजन्या—सहि तारिसा आकिदि-विसेसा चिरं दुक्खभाइणो ण होन्ति । अवस्सं किंपि अणुग्गह-णिमित्तं भूओ वि समाअम-कारणं हविस्सदि । ता एहि उदअम्मुहस्स भअवदो सुज्जस्स उवट्ठाणं करेम्ह । सखि तादृशा आकृतिविशेषाश्चिरं दुःखभागिनो न भवन्ति । अवश्यं किमपि अनुग्रहनिमित्तं भूयोपि समागमकारणं भविष्यति । तदेहि उदयोन्मुखस्य भगवतः सूर्यस्य उपस्थानं कुर्वः ।

[ अनन्तरे खण्डधारा । ]

चिन्ता-दुम्मिअ-माणसिआ । सहअरि-दंसण-लालसिआ ॥
विअसिअ-कमल-मणोहरए । विहरइ हंसी सरवरए ॥4॥

चिन्तादूनमानसिका । सहचरीदर्शनलालसिका ॥
विकसितकमलमनोहरे । विहरति हंसी सरोवरे ॥ 4 ॥

[ इति निष्क्रान्ते । ]

प्रवेशकः ॥

गहणं गइन्द-णाहो पिअ-विरहुम्माअ-पअडिअ-विआरो ।
विसइ तरु-कुसुम-किसलअ-भूसिअ-णिअ-देह-पब्भारो ॥5॥

गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः ।
विशति तरुकुसुमकिसलयभूषितनिजदेहप्राग्भारः ॥ 5 ॥

[इति पुरूरवसः प्रावेशिकी आक्षिप्तिका । ततः प्रविशति उन्मत्तवेषो राजा ।]

राजा—आः दुरात्मन् रक्षस्तिष्ठ तिष्ठ । क्व मे प्रियतमामादाय गच्छसि । हन्त शैलशिखराद् गगनमुत्पत्य बाणैर्मामभिवर्षति । [ लोष्टं गृहीत्वा हन्तुं धावन् । अनन्तरे द्विपदिकया दिशोऽवलोक्य । ]

हिअआहिअ-पिअ-दुक्खओ । सरवरए धुद-पक्खओ ॥
बाहोवग्गिअ-णअणओ । तम्मइ हंस-जुआणओ ॥ 6 ॥

हृदयाहितप्रियादुःखः । सरोवरे धुतपक्षः ॥
बाष्पावबल्गितनयनः । ताम्यति हंसयुवा ॥ 6 ॥

[ पुनर्विभाव्य । ]

नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरंपरा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥१॥

[ इति मूर्छितः पतति । द्विपदिकया उत्थाय निःश्वस्य । ]

मईं आणिअ मिअ-लोअणि णिसअरु कोइ हरेइ ।
जाव ण णव-तडि-सामलो धाराहरु वरिसेइ ॥ 7 ॥

मया ज्ञातं मृगलोचनीं निशाचरः कोपि हरति ।
यावन्नु नवतडिच्छयामलो धाराधरो वर्षति ॥ 7 ॥

विचिन्त्य । क नु खलु रम्भोरुर्गता स्यात् ।

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमदर्शनं नयनयोर्यातेति कोऽयं विधिः ॥२॥

इति द्विपदिकया दिशोऽवलोक्य । सनिःश्वासम् । सास्रम् । अये
परावृत्तभागधेयानां दुःखं दुःखानुबन्धि । कुतः ।

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥३॥

[ अनन्तरे चर्चरी । ]

जलहर संहरु एहु, को पईं आढत्तओ
अविरल-धारासार-दिसा-मुह-कन्तओ ।
ए मईं पुहवि भमन्तें जइ पिअ पेक्खीहि
तव्वे जं जु करीहिसि तंतु सहीहिमि ॥ 8 ॥

जलधर संहरेतत्, कस्त्वामाज्ञापितवान्
अविरलधारासारदिङ्मुखकान्तम् ।
ए मया पृथ्वीं भ्रमता यदि प्रिया प्रेक्षिष्यते
तदा यद्यत् करिष्यसि तत्तत् सहिष्ये ॥ 8 ॥

[विहस्य ।] मुधैव खलु मनसः परितापवृद्धिरुपेक्ष्यते । यथा
मुनयोऽपि व्याहरन्ति राजा कालस्य कारणमिति । तत्
किमहं जलदसमयं न प्रत्यादिशामि ।

[अनन्तरे चर्चरी ।]

गन्धुम्माइअ-महुअरगीएहिं
वज्जन्तेहिं परहुअरव-तूरेहिं ।
पसरिअ-पवणुव्वेल्लिर-पल्लव-णिअरु
सुललिअ-विविह-पआरें णच्चइ कप्प-अरु ॥ 9 ॥

गन्धोन्मादितमधुकरवरगीतै-
र्वाद्यमानैः परभृतरवतूर्यैः ।
प्रसृतपवनोद्वेल्लनशीलपल्लवनिकरः
सुललितविविधप्रकारेण नृत्यति कल्पतरुः ॥ 9 ॥

[इति नर्तित्वा ।] अथवा प्रावृषेण्यैरेव लिङ्गैर्मम राजोपचारः संप्रति ! कथमिव ।

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।
घर्मच्छेदात् पटुतरगिरो बन्दिनो नीलकण्ठा
धारासारोपनयनपरा नैगमाश्चाम्बुवाहाः ॥ ४ ॥

भवतु । किमेवं परिच्छदश्लाघया । यावदस्मिन् कानने तां प्रियामन्वेषयामि [ पुनश्चर्चरीपाठस्यान्ते भिन्नकः । ]

दइआ-रहिओ अहिअं दुहिओ विरहाणुगओ परिमन्थरओ ॥
गिरि-काणणए कुसुमुज्जलए गअ-जूह-वई बहु झीण-गई ॥10॥

दयितारहितोऽधिकं दुःखितो विरहानुगतः परिमन्थरः ॥
गिरिकानने कुसुमोज्ज्वले गजयूथपतिर्बहु क्षीणगतिः ॥ 10 ॥

[विलोक्य ।] हन्त व्यवसितस्य मे संदीपनमिव संवृत्तम् । कुतः ।

आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥ ६ ॥

हृतो गतेति कथं नु तत्रभवती मया सूचयितव्या ।

पद्भ्यां स्पृशेद् वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्बतया ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥ ६ ॥

[ द्विपदिकया परिक्रम्य अवलोक्य च सहर्षम् । ] उपलब्धमुपलक्षणं येन तस्याः कोपनाया मार्गोऽनुमीयते ।

हृतोष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥७

[ विभाव्य । ] कथम् । सेन्द्रगोपं नवशाद्वलमिदम् । कुतो नु खलु निर्जने वने प्रियाप्रवृत्तिरवगमयितव्या । [ दृष्ट्वा ] अये आसारोच्छ्वसितशैलेयस्थलीपाषाणमारूढः

आलोकयति पयोदान् प्रबलपुरोवातनर्तितशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥ ८ ॥

[ उपेत्य । ] यावदेनं पृच्छामि । [ अनन्तरे खण्डकः । ]

संपत्त-विसूरणओ । तुरिअं पर-वारणओ ॥
पिअदम-दंसण-लालसओ गअ-वरु विम्हिअ-माणसओ ॥11॥

[ तेना खण्डकान्ते चर्चरी । ]

बर्हिण पइँ अब्भत्थेमि आअक्खहि मं ता ।
एत्थु रण्णें भमन्तें जइ पइँ दिट्ठी सा महु कन्ता ॥
णिसम्महि मिअङ्क-सरिसें वअणें हंस-गइँ ।
एँ चिण्हें जाणिहिसि आअक्खिउ तुज्झु मइँ ॥ 12 ॥

संप्राप्तविसूरणः त्वरितं परवारणः ॥
प्रियतमादर्शनलालसः गजवरो विस्मितमानसः ॥ 11 ॥

बर्हिण त्वामभ्यर्थये आचक्ष्व मे तत् ।
अत्र अरण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता ॥
निशामय मृगाङ्कसदृशवदनेन हंसगत्या ।
अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया ॥ १२ ॥

[ चर्चरिकया उपविश्य अञ्जलिं बद्ध्वा । ]

नीलकण्ठ ममोत्कण्ठा वनेऽस्मिन् वनिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग दृष्टा दृष्टिक्षमा भवेत् ॥ ९ ॥

[ चर्चरिकया अवलोक्य । ] कथमदत्त्वा प्रतिवचनं नर्तितुं प्रवृत्तः । किं नु खलु हर्षकारणमस्य । [ विचिन्त्य ] भवतु ! विदितमेतत् ।

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे किं करोत्येष बर्ही ॥ १० ॥

भवतु । परव्यसननिर्वृत्तं न खल्वेनं पृच्छामि [अनन्तरे खुरकः]

विज्झहर-काणण-लीणओ ।
तुच्छ-विणिम्माअ-बाहुप्पीडओ ॥
दूरोसारिअ-हिअआणन्दओ ।
अम्बर-माणे भमइ गइन्दओ ॥ 13 ॥

[ खुरकान्ते चर्चरी । ] हेले हेले

परहुअ महुर-पलाविणि कन्ति ।
णन्दण-वण सच्छन्द भमन्ति ॥
जइ पइँ पिअअम सा महु दिट्ठी ।
ता आअक्खहि महु परपुट्ठि ॥ 14 ॥

विद्याधरकाननलीनो दुःखविनिर्गतबाष्पोत्पीडः ॥
दूरोत्सारितहृदयानन्दः अम्बरमानेन भ्रमति गजेन्द्रः ॥13॥
परभृते मधुरप्रलापिनि कान्ते नन्दनवने स्वच्छन्दं भ्रमन्ति ॥
यदि त्वया प्रियतमा सा मम दृष्टा तदाचक्ष्व मम परपुष्टे ॥14॥

[ एतदेव नर्तित्वा । वलन्तिकया उपसृत्य जानुभ्यां स्थित्वा ]

इयमातपान्तसंधुक्षितमदा जम्बूविटपमध्यास्ते परभृता। विहंगमेषु पण्डिता जातिरेषा। यावदेनामभ्यर्थये। भवति

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ॥ ११॥

[वामकेन किंचिद् वलित्वा । आकाशे । ] किमाह भवती । कथं त्वामेवमनुरक्तं विहाय गतेति । शृणोतु भवती ।

कुपिता न तु कोपकारणं
सकृदप्यात्मगतं स्मराम्यहम् ।
प्रभुता रमणेषु योषितां
न हि भावस्खलितान्यपेक्षते ॥ १२ ॥

कथं कथाच्छेदकारिणी स्वकार्य एव सक्ता ।

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिमुखपाकं राजजम्बूद्रुमस्य ॥ १३ ॥

एवंगतेऽपि प्रियेव मे मधुरस्वनेति न कोपोऽस्याम् । इतो वयम्—[ द्विपदिकया परिक्रमितकेन कर्णं दत्त्वा ] अये

दक्षिणेन प्रियाचरणनिक्षेपशंसी नूपुररवः। यावदत्र गच्छामि।

[ परिक्रम्य । ]

पिअअम-विरह-किलामिअ-वअणओ ।
अविरल-बाह-जलाउल-णअणओ ॥
दूसह-दुक्ख-विसंठुल-गमणओ ।
पसरिअ-उरु-ताव-दीविअ-अङ्गओ ॥
अहिअं दुम्मिअ-माणसओ ।
काणणं भमइ गइन्दओ ॥ 15 ॥

प्रियतमाविरहक्लान्तवदनः अविरलबाष्पजलाकुलनयनः ॥
दुःसहदुःखविसंष्ठुलगमनः प्रसृतगुरुतापदीप्ताङ्गः ॥
अधिकं दूनमानसः काननं भ्रमति गजेन्द्रः ॥ 15 ॥

[ इति ककुभेन षड्पभङ्गाः । अनन्तरे द्विपदिकया दिशोऽवलोक्य । ]

पिअ-करिणी-विच्छोइअओ गुरु-सोआणल-दीविअओ।
बाह जलाउल-लोअणओ करि-वरु भमइ समाउलओ ॥16॥

प्रियकरिणीवियुक्तो गुरुशोकानलदीप्तः ।
बाष्पजलाकुललोचनः करिवरो भ्रमति समाकुलः ॥ 16 ॥

अहो धिक् धिक् ।

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसाम् ।
कूजितं राजहंसानां नेदं नूपुरशिञ्जितम् ॥ १४ ॥

भवतु। यावदेते मानसोत्सुकाः पतत्रिणः सरसो नोत्पतन्ति तावदेतेभ्यः प्रियाप्रवृत्तिरवगमयितव्या। [वलन्तिकया उपेत्य ] भो भो जलविहंगमराज

पश्चात् सरः प्रति गमिष्यसि मानसं तत्
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।

मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात् सतां गुरुतरा प्रणयिक्रियैव ॥ १५ ॥

यथोन्मुखो विलोकयति मानसोत्सुकेन मया न कथितेत्येवं वचनमाह [ उपविश्य चर्चरी ]

रेरे हंसा किं गोइज्जइ
रेरे हंस किं गोप्यते ।

[ इति नर्तित्वोत्थाय । ]

यदि हंस गता न ते नतभ्रूः
सरसो रोधसि दर्शनं प्रिया मे ॥
मदखेलपदं कथं नु तस्याः
सकलं चोर गतं त्वया गृहीतम् ॥ १६ ॥

गइ-अणुसारेँ मइँ लक्खिज्जइ ॥
गत्यनुसारेण मया लक्ष्यते ॥

[ चर्चरिकया उपसृत्य अञ्जलिं बद्ध्वा ] अतश्च

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता
विभावितैकदेशेन देयं यदभियुज्यते ॥ १७ ॥

[ पुनश्चर्चरी । ]

कइँ पइँ सिक्खिअ ए गइलालस ।
सा पइँ दिट्ठी जहण-भरालस ॥ 17 ॥

कुतस्त्वया शिक्षिता एषा गतिलालसा ।
सा त्वया दृष्टा जघनभरालसा ॥ 17 ॥

[पुनश्चर्चरी । हंस प्रयच्छेत्यादि पठित्वा द्विपदिकया दिशो विलोक्य विहस्य ।]
एष चोरानुशासी राजेति भयादुत्पतितः [ परिक्रम्य ]
अयमितोऽपि प्रियासहायश्चक्रवाकः । तावदेनं पृच्छामि ।
[ अनन्तरे द्विपदिका । ]

मम्मर-रणिअ-मणोहरए ।
[खण्डकी ।] कुसुमिअ-तरु-वर पल्लवए ।
[चर्चरी ।] दइआ-विरहुम्माइअओ ।
काणणं भमइ गइन्दओ ॥ 18 ॥
मर्मररणितमनोहरे ।
कुसुमिततरुवरपल्लवे ।
दयिताविरहोन्मादितः ।
काननं भ्रमति गजेन्द्रः ॥ 18 ॥
[द्विलय्यान्ते चर्चरी ।] गोरोअण-वण्णा चक्का भण्णइ मइँ ।
महु-वासर कीलन्ती धणिअ ण दिट्ठी पइँ ॥19॥
गोरोचनवर्ण चक्र भण्यते मया ।
मधुवासरे क्रीडन्ती धन्या न दृष्टा त्वया ॥ 19 ॥
[चर्चरिकया उपसृत्य जानुभ्यां स्थित्वा ।]

रथाङ्गनामन् वियुतो रथाङ्गश्रोणिबिम्बया ।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः ॥ १८ ॥

कथं कः क इत्याह । मा तावत् । न खलु विदितोऽहमस्य ।

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥१९॥

कथम् तूष्णीं स्थितः । भवतु । उपालप्स्ये तावदेनम् ।

सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां
ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः ।
इति च भवतो जायास्नेहात् पृथक्स्थितिभीरुता
मयि च विधुरे भावः कान्ताप्रवृत्तिपराङ्मुखः ॥२०॥

सर्वथा मदीयानां भाग्यविपर्ययाणामयं प्रभावः । याव-
दन्यमवकाशमवगाहे [पदान्तरे स्थित्वा] भवतु न तावद्
गच्छामि [द्विपदिकया परिक्रम्य अवलोक्य च]

इदं कथञ्चिद् मां पद्ममन्तःकूजितषट्पदम् ।
मया दृष्टवरं तस्याः ससीत्कारमिवाननम् ॥ २१ ॥

भवतु । अस्मिन्नेव कमलाभ्यासिनि मधुकरे प्रणयित्वं करिष्ये । इतो गतस्यानुशयो मा भूदिति [ अत्यान्तरे अर्धद्विचतुरस्रकः ]

एक्केक्कम-वड्ढिअ-गुरुअर-पेम्म-रसे ।
सरे हंस-जुआणओ कीलइ काम-रसेँ ॥ 20 ॥

एकैकवर्धितगुरुतरप्रेमरसे ।
सरसि हंसयुवा क्रीडति कामरसेन ॥ 20 ॥

[ चतुरस्रकेण उपेत्य अञ्जलिं बद्ध्वा । ]
मधुकर मदिराक्ष्याः शंस तस्याः प्रवृत्तिं–

[ विभाव्य । ]

वरतनुरथवासौ नैव दृष्टा त्वया मे ।
यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत् पुण्डरीके किमस्मिन् ॥ २२ ॥

साधयामस्तावत् [ द्विपदिकया परिक्रमितकेन ] एष नीपस्क-
करिणीसहायो नागराजस्तिष्ठति ।

अस्मात् प्रियोदन्तमुपलप्स्ये [ कुटिलिकया ]
करिणी-विरह-संताविअओ ॥

[ मलपटी । ]

काणणे गन्धुद्धअ-महुअरओ ॥ 21 ॥

करिणीविरहसंतापितः
कानने गन्धोद्धतमधुकरः ॥ 21 ॥

[ अतोऽन्तरे विलोक्य । ] भवतु न त्वरा कार्या

अयमचिरोद्गतपल्लवमुपनीतं प्रियकरेणुहस्तेन ।
अभिलषतु तावदासवसुरभिदलं सल्लकीभङ्गम् ॥ २३ ॥

[ क्षणमात्रं स्थित्वा । स्थानकेन अवलोक्य ] हन्त कृताह्निकः संवृत्तः । भवतु पृच्छामि ।

हउँ पइँ पुच्छिमि अक्खहि गअ-वरु
ललिअ-पहारेँ णासिअ-तरु-वरु ।
दूर-विणिज्जिअ-ससहर-कन्ती
दिट्ठी पिअ पइँ संमुह जन्ती ॥ 22 ॥

अहं त्वां पृच्छामि आचक्ष्व गजवर
ललितप्रहारेण नाशिततरुवर ।
दूरविनिर्जितशशधरकान्तिः
दृष्टा प्रिया त्वया संमुखं यान्ती ॥ 22 ॥

[ पदद्वयं पुरत उपसृत्य । ]

मदकल युवतिशशिकला
गजयूथप यूथिकाशबलकेशी ।
स्थिरयौवना स्थिता ते
दूरालोके सुखालोका ॥ २४ ॥

[सहर्षम् ।] अनेन स्निग्धमन्द्रेण गर्जितेन प्रियोपलम्भशंसिना समाश्वासितोऽस्मि । साधर्म्याच्च त्वयि मे भूयसी प्रीतिः ।

मामाहुः पृथिवीभृतामधिपतिं नागाधिराजो भवान्
अव्युच्छिन्नपृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु ।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा
सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां मानुभूः ॥२५॥

सुखमास्तां भवान् । साधयामस्तावत् [ पार्श्वतो दृष्टिं दत्त्वा ] अये सुरभिकन्दरो नाम विशेषरमणीयः सानु-

मामालोकयते । प्रियप्रणयमप्सरसाम् । अपि नाम खुरतनुरस्योपत्यकायामुपलभ्येत [ परिक्रम्य अवलोक्य च ] कथमन्धकारः । भवतु । विद्युत्प्रकाशेनावलोकयामि ' हन्त मदीयैर्दुरितपरिणामैर्मेघोऽपि शतह्रदाशून्यः संवृत्तः । तथापि शिलोच्चयमेतमपृष्ट्वा न निवर्तिष्ये [अन्तरे खण्डिका]

पसरिअ-खर-खुर दारिअ-मेइणिओ वण-गहणे अविचलु ।
परिसक्कइ पेच्छइ लीणो णिअ-कज्जुज्जुअ कोलु ॥ 23 ॥

प्रसृतखरखुरदारितमेदिनीको वनगहनेऽविचलः ।
परिष्वष्कते पश्यत लीनो निजकार्योद्युक्तः कोलः ॥ 23 ॥

अपि वनान्तरमल्पकुचान्तरा श्रयति पर्वतपर्वसु संनता ।
इदमनङ्गपरिग्रहमङ्गना पृथुनितम्ब नितम्बवती तव ॥२६॥

कथं तूष्णीमास्ते । शङ्के विप्रकृष्टो न शृणोतीति । समीपेऽस्य गत्वा पुनरेनं पृच्छामि [ अनन्तरे चर्चरी ]

फलिह-सिला-अल-णिम्मल-णिज्झरु ।
बहु-विह-कुसुमे विरइअ-सेहरु ॥
किण्णर-महुरुग्गीअ-मणोहरु ।
देक्खावहि महु पिअअम महिहरु ॥ 24 ॥

स्फटिकशिलातलनिर्मलनिर्झर ।
बहुविधकुसुमैर्विरचितशेखर ॥
किंनरमधुरोद्गीतमनोहर ।
दर्शय मम प्रियतमां महीधर ॥ 24 ॥

[ इति परिक्रम्य अञ्जलिं बद्ध्वा । ]

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥२७॥

[आकर्ण्य । सहर्षम् ।] कथं यथाक्रमं रहेत्याह । भवानपि अतः प्रियतरं गृणोतु । क तर्हि मम प्रियतमा [नेपथ्ये तदेवाकर्ण्य] हा धिक् । ममैवायं कन्दरमुखविसर्पी प्रतिशब्दः । [विषादं रूपयित्वा] श्रान्तोऽस्मि । अस्यास्तावद् गिरिनद्यास्तीरे स्थितस्तरङ्गवातमासेविष्ये । इमां नवाम्बुकलुषामपि स्रोतोवहां पश्यतो मे रमते मनः ।

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरसना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसंधाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥ २८ ॥

भवतु । याचिष्ये तावदेनाम् [अनन्तरे कुटिलिका]

पसिअ पिअअम सुन्दरि एणए ।
खुहिअकरुण-विहङ्गमए णए ॥
सुर-सरि-तीर-समुब्भवणए ।
अलि-उल-झङ्कारिअए णए ॥ 25 ॥

[कुटिलिकान्तरे चर्चरी ।]

पुव्व-दिसा-पवणाहअ-कल्लोलुग्गअ-बाहओ
मेहअअङ्क णच्चइ सललिअ जलणिहि-णाहओ ।
हंस-रहङ्ग-कुङ्कुम-सङ्ख-कआभरणु
करि-मअराउल-कसण-कमल-कआवरणु ॥
वेला-सलिलुव्वेल्लिअ-हत्थ-दिण्ण-तालु
ओत्थरइ दस दिस रुम्भेविणु णव-मेहजालु ॥26॥

प्रसीद प्रियतमे सुन्दरि एनका ।
क्षुभितकरुणविहंगमे नका ॥

Ganadāsa. Please to hear me, queen. This is how people will think. So now,

if you will not permit me, although I am willing to show my skill in teaching in this contest,
I would understand that you have deserted me. (19)

( *Rises from his seat.* )

Queen. ( *To herself* ) What help! ( *Aloud* ) The teacher has every authority over his pupil.

Gaṇadāsa. I was filled with vain apprehensions so long. ( *Looking at the king* ) So the queen consents. Let the king give orders: in what particular piece of acting should I show my skill?

King. As the revered lady commands.

Parivrājikā. There is something on the queen's mind. So I am a bit doubtful.

Queen. You may speak without fear. I shall certainly have power over my servants.

King. Say also over mine too.

Queen. Revered lady, speak then.

Parivrājikā. The chalita which depends upon four verse-quadrants is accounted to be difficult to act. Let us, therefore, witness the performance of both, by one and the same piece of acting. That will show clearly the difference in the teaching of both the gentlemen.

Both. As the revered lady commands.

Vidūsaka. Well then, let both the parties arrange all the accessories of music in the theatre and send a messenger to his highness. Or rather the sound of the drum will be a signal for us to rise.

२१ हरदत्तः—तथा । ( इत्युत्तिष्ठति । ) (गणदासो देवीं विलोकयति ।)

देवी—ण खु विअअपच्चत्थिणी अहं अज्जस्स । विअई होहि ।

[ न खलु विजयप्रत्यर्थिन्यहमार्यस्य । विजयी भव । ]

( उभौ प्रस्थितौ । )

२५ परिव्राजिका—इतस्तावदाचार्यौ ।

उभौ—( परिवृत्य ) इमौ स्वः ।

२७ परिव्राजिका—निर्णयाधिकारे ब्रवीमि । सर्वाङ्गसौष्ठवाभिव्यक्तये विरलनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु ।

आचार्यौ—नेदमावयोरुपदेश्यम् । ( इति निष्क्रान्तौ । )

३० देवी ( राजानवमलोक्य । )—जइ राअकज्जेसु वि ईरिसी उवाअणिउण्दा अज्जउत्तस्स तदा सोहणं हवे ।

[ यदि राजकार्येष्वपीदृश्युपायनिपुणतार्यपुत्रस्य तदा शोभनं भवेत् । ]

३३ राजा—देवि

अलमन्यथा गृहीत्वा
न खलु मनस्विनि मया प्रयुक्तमिदम् ।
प्रायः समानविद्याः
परस्परयशःपुरोभागाः ॥ २० ॥

( नेपथ्ये मृदङ्गशब्दः । सर्वे कर्णं ददति । )

परिव्राजिका—हन्त प्रवृत्तं सङ्गीतकम् । तथा ह्येषा

जीमूतस्तनितविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि ॥ २१ ॥

राजा—देवि सामाजिका भवामः

Haradatta. Let it be. *( Rises. Gaṇadāsa looks at the queen. )*

Queen. I am indeed not against your gaining victory. May you be victorious.

*( Both start to leave. )*

Parivrājikā. Here, please, professors.

Both. *( turning round )* Here we are.

Parivrājikā. I speak in the capacity of a judge. Let the actors enter in thin stage-costumes in order to exhibit the graces of all their limbs.

Teachers. That need not be told us. *(Exeunt both.)*

Queen. *( Looking to the king )* If my noble lord shows the same command of means in political affairs, it would be to much advantage.

King. Do not misjudge me; this is not my doing, proud lady. Generally persons of equal learning are envious of one another's fame (20).

*( The sound of drum is heard from behind the scenes ; all listen. )*

Parivrājikā. Why, they have already started music! For this

sound of the drum, dear to the peacocks and answered by them with upstretched neck as they suspect it to be the rumble of clouds, deeply resonating, and set to the middle note, delights the mind ( 21 ).

King. My queen, let us join the audience.

देवी ( स्वगतम् )—अहो अविणयो अज्जउत्तस्स ।

३ [ अहो अविनय आर्यपुत्रस्य । ] ( सर्वे उत्तिष्ठन्ति )

विदूषकः ( अपवार्य । )—भो वयस्स धीरं गच्छ । मा तत्तहोदी धारिणी विसंवाददइस्सदि ।

६ [ भो वयस्य धीरं गच्छ । मा तत्रभवती धारिणी विसंवादयिष्यति । ]

राजा—

धैर्यावलम्बिनमपि
त्वरयति मां मुरजवाद्यरागोऽयम् ।
अवतरतः सिद्धिपथं
शब्दः स्वमनोरथस्येव ॥ २२ ॥

[ इति निष्क्रान्ताः सर्वे । ]

इति प्रथमोऽङ्कः ।

Queen. ( *To herself* ) O this indecorum of my lord!

( *All rise.* )

Vidūṣaka. ( *Aside* ) Keep calm, my friend, lest the queen Dhāriṇī should countermand (the whole proceeding ).

King.

The sound of the drum makes me impatient
in spite of my efforts to keep calm, as though it
is the voice of my own desire that is treading
down the path of fulfilment. ( 22 )

*Exeunt Omnes.*

**End of Act One.**

# द्वितीयोऽङ्कः ।

( ततः प्रविशति सङ्गीतरचनायां कृतायामासनस्थः सवयस्यो राजा धारिणी परिव्राजिका विभवतश्च परिवारः । )

राजा—भगवति अत्रभवतोराचार्ययोः कतरस्य प्रथममुपदेशं द्रक्ष्यामः ।

परिव्राजिका—ननु समानेऽपि ज्ञानवृद्धभावे वयोवृद्धत्वाद्गणदासः पुरस्कारमर्हति ।

राजा—तेन हि मौद्गल्य एवमत्रभवतोरावेद्य स्वनियोगमशून्यं कुरु।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः )

( प्रविश्य ) गणदासः—देव शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदा। तस्याश्चतुर्थवस्तुकं प्रयोगमेकमनाः श्रोतुमर्हति देवः ।

राजा—आचार्य बहुमानादवहितोऽस्मि । ( निष्क्रान्तो गणदासः। )

राजा—( जनान्तिकम् ) वयस्य

नेपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः ।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करणीम् ॥१॥

विदूषकः—( अपवार्य । ) भो उवट्ठिदं णअणमहु । सण्णिहिदअक्खिअं अ । ता अप्पमत्तो दाणिं पेक्खदु भवं ।

[ भो उपस्थितं नयनमधु । सन्निहितमक्षिकं च । तदप्रमत्त इदानीं प्रेक्षतां भवान् । ]

( ततः प्रविशत्याचार्यप्रत्यवेक्ष्यमाणाङ्गसौष्ठवा मालविका )

विदूषकः ( जनान्तिकम् ) पेक्खदु भवं । ण खु से पडिच्छन्दादो परिहीअदि महुरदा । [ प्रेक्षतां भवान् । न खल्वस्याः प्रतिच्छन्दात् परिहीयते मधुरता । ]

## ACT II.

*( Then, after orchestral arrangements are got ready, enter seated the king with his friend, Dhāriṇī, Parivrājikā, and the attendants according to their rank. )*

King. Revered Madam, of which of the two venerable teachers shall we first witness (the skill in) teaching?

Parivrājikā. Although they are equally old in learning, yet Gaṇadāsa deserves precedence on account of his being the elder.

King. Well then, Maudgalya, do communicate this to the gentlemen and then go about your business.

Chamberlain. As the king commands. ( *Exit.* )

( *Entering* )

Gaṇadāsa. King, there is Śarmiṣṭhā's composition of four parts and sung in medium time; it behoves the king to listen to the performance of one-fourth of it very attentively.

King. Well, professor, I am respectfully attentive.

( *Exit Gaṇadāsa.* )

King. ( *Aside* ) friend,

mine eyes, eager to behold her who is now in
the tiring-room, are as it were proceeding to
remove the curtain owing to their impatience. (1)

Vidūṣaka. ( *Aside* ) Friend, the honey of your eyes is come, but the wasp is close by; so be vigilant and watch.

*( Enter Mālavikā with the teacher contemplating the grace of her limbs ).*

Vidūṣaka. Behold, Sir. I am sure her charms do not fall short of the picture.

१ राजा (जनान्तिकम्) —वयस्य

चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम् ।
सम्प्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ २ ॥

गणदासः—वत्से मुक्तसाध्वसा सत्त्वस्था भव ।

राजा (आत्मगतम्) — अहो सर्वस्थानानवद्यता रूपस्य ।

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
सङ्क्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्याः वपुः ॥३॥

मालविका—(उपवहनं कृत्वा चतुष्पदं वस्तु गायति)

दुल्लहो पिओ तस्सिं भव हिअअ णिरासं
अम्हो अपङ्गओ मे पप्फुरइ किं वि वामओ ।
एसो सो चिरदिट्ठो कहं उवणइदव्वो
णाह मं पराहीणं तुइ गणअ सतिण्हं ॥ ४ ॥

(इति यथारसमभिनयति ।)

[ दुर्लभः प्रियस्तस्मिन् भव हृदय निराशम्
२ अहो अपाङ्गको मे प्रस्फुरति किमपि वामकः ।
एष स चिरदृष्टः कथमुपनेतव्यो
नाथ मां पराधीनां त्वयि गणय सतृष्णाम् ॥ ]

६ विदूषकः (जनान्तिकम्)—भो वयस्स चउप्पदवत्थुअं दुवारीकदुअ तुइ उवक्खित्तो विअ अप्पा तत्तहोदीए । [ भो वयस्य, चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपक्षिप्त इवात्मा तत्रभवत्या ।]

King. ( *Aside* ) Friend,

when I beheld her picture, I thought she would belie the loveliness of it; but now I think that the painter who limned her likeness had not secured full concentration. (2).

Gaṇadāsa. Child, give up fear and be composed.

King. ( *To himself* ) How flawless in every part is her form!

Her long eyes; her face lovely like the moon of autumn; the arms sloping at the shoulders; her compact bosom with the plump and swelling breasts; her sides as if polished; her waist measurable by the palm of the hand; her hips expansive; her feet with their curved toes; her whole body thus seems framed to suit the fancy of her teacher of dancing. ( 3 ).

Mālavikā. ( *After a preliminary trying of the notes she sings the musical piece of four lines.* )

The dear one is far above thee; my heart, despair. Ah, how the corner of my left eye throbs somewhat! How should he, seen after a long time, be approached? My lord, helpless that I am, know me to be filled with passion for you. ( 4 )

*(She expresses the emotion through acting.)*

Vidūṣaka. (*Aside*) Ah, my friend, taking occasion of this musical piece of four parts, she seems to have given herself over to you.

राजा ( जनान्तिकम् )—सखे एवमावयोर्हृदयम् । अनया खलु

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्वम् ।
प्रणयगतिमदृष्ट्वा धारिणीसन्निकर्षा-
दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥ ५ ॥

( मालविका गीतान्ते निष्क्रमितुमिच्छति । )

विदूषकः—भोदि चिट्ठ । किं वि वो विसुमरिदो कमभेदो । तं
२ दाव पुच्छिस्सम् । [ भवति तिष्ठ । किमपि वो विस्मृतः क्रमभेदः । तं तावत्प्रक्ष्यामि । ]

गणदासः—वत्से स्थीयताम् । उपदेशविशुद्धा यास्यसि ।

( मालविका निवृत्य स्थिता । )

७ राजा ( आत्मगतम् )—अहो सर्वास्ववस्थासु चारुता शोभां पुष्यति । तथा हि ।

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥६॥

देवी—णं गोदमवअणं वि अज्जो हिअए करेदि । [ ननु गौतमवचनमप्यार्यो हृदये करोति ]

३ गणदासः—देवि मा मैवम् । देवप्रत्ययात्सम्भाव्यते सूक्ष्मदर्शिता गौतमस्य । पश्य ।

King. *(Aside)* friend, such the state of our hearts. For

"Know me to be devoted to you, my lord": as she accompanied these words of the song with gestures in which she pointed to the different parts of her body, she seemed to address me under cover of the graceful plaint, as she could see no other way of showing her love for me owing to Dhāriṇī's presence. (5)

*(Mālavikā makes as if she would leave at the end of the song.)*

Vidūṣaka. Wait, lady. You seem to have forgotten somewhat the proper sequence. I will, therefore, ask about it.

Gaṇadāsa. Stay, child. You will leave, when your performance will have been declared to be flawless.

*( Mūlavikā turns round and stays.)*

King. *( To himself )* How loveliness gains fresh charms under all conditions! For

the left hand with its bracelet resting on the wrist, placed upon her hip, and the right hand hanging loosely down like a branch of the Śyāmā creeper; the eyes cast on the pavement where the flowers are pressed by the toes of her feet—this her posture, with the upper part of the body stretched upright, is far more attractive than her dancing ( posture ). (6)

Queen. Now, sir, would you mind the words even of Gautama ?

Gaṇadāsa. Not so, queen. Owing to the confidence which the king reposes in him, it is possible to expect acute perception in him. See

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ ७ ॥

( विदूषकं विलोक्य ।) शृणुमो विवक्षितमार्यस्य ।

विदूषकः ( गणदासं विलोक्य । )—सक्खिणिं दाव पुच्छ । पच्छा
३ जो मए कमभेदो लक्खिदो तं भणिस्सं । [ साक्षिणीं तावत्पृच्छ ।
पश्चाद्यो मया क्रमभेदो लक्षितः तं भणिष्यामि । ]

गणदासः—भगवति, यथादृष्टमभिधीयतां गुणो वा दोषो वा ।

६ परिव्राजिका—यथादर्शनं सर्वमनवद्यम् । कुतः ।

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥ ८ ॥

गणदासः—देवः कथं मन्यते ।

राजा—गणदास, स्वपक्षे शिथिलाभिमाना वयं संवृत्ताः ।

३ गणदासः—अद्य नर्तयितास्मि ।

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥ ९ ॥

देवी—दिट्ठिआ परिक्खआराहणेण अहिअं वड्ढइ अज्जो ।
[ दिष्ट्या परीक्षकाराधनेनाधिकं वर्धत आर्यः । ]

even a dull person becomes sharp of intelligence by association with the wise, as turbid water attains transparency by contact with the mud-removing fruit. (7)

(*Looking at the Vidūṣaka*) We should like to hear what the gentleman wants to say.

Vidūṣaka. (*Looking at Gaṇadāsa*) Ask the judge in the first place. Afterwards will I speak of the violation of sequence which I have observed.

Gaṇadāsa. Revered lady, speak out whatever you observed, whether merits or defects.

Parivrājikā. Everything was blameless and in accordance with the rules of the art.

The meaning was well suggested by her limbs that were eloquently expressive; the movement of the feet was in perfect time, and she was perfectly absorbed in the (various) sentiments; the acting was delicate—of which the instrument of expression was the branch-like hand; and while in the successive exhibition of its various shades one fleeting emotion seemed to drive away another from the field, yet the main sentiment (of love) remained the same throughout. (8)

Gaṇadāsa. What does his majesty think?

King. I no longer hold the same high regard for my protege.

Gaṇadāsa. Now (I feel) I am in truth a professor of dancing.

Wise men consider that the instruction given by a teacher is pure when the same is found to be without any fault by such as you, as they consider gold to be pure when it does not get blackened in fire. (9)

Queen. I congratulate you, sir, on being so fortunate as to satisfy your judges.

**गणदासः**—देवीपरिग्रहश्च मे वृद्धिहेतुः । ( विदूषकं विलोक्य ।) गौतम, वदेदानीं यत्ते मनसि वर्तते ।

**विदूषकः**—पुढमोवदेसदंसणे पुढमं बम्हणस्स पूआ कादव्वा । सा णं वो विसुमरिदा । [ प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्तव्या । सा ननु वो विस्मृता । ]

**परिव्राजिका**—अहो प्रयोगाभ्यन्तरः प्रश्नः ।

**विदूषकः**—अइ पण्डितंमण्णे किं अण्णं । मोदअखण्डणे वि असमत्था तुमं किं जाणासि । पसण्णचन्दपादसरिसेहिं केसपासेहिं एदाणं भीसिआसि । [ अयि पण्डितंमन्ये, किमन्यत् । मोदकखण्डनेऽप्यसमर्था त्वं किं जानासि । प्रसन्नचन्द्रपादसदृशैः केशपाशैरेतान् भीषयसे । ]

( सर्वे प्रहसिताः । मालविका च मन्दस्मितं करोति ।)

**राजा** ( आत्मगतम् )—उपात्तसारश्चक्षुषा मे स्वविषयः । यदनेन

स्मयमानमायताक्ष्याः
किंचिदभिव्यक्तदशनशोभि मुखम् ।
असमग्रलक्ष्यकेसर-
मुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥

**गणदासः**—महाब्राह्मण, न खलु नेपथ्यसङ्गीतकमिदम् । अन्यथा कथं त्वामर्चनीयं नार्चयिष्यामः ।

**विदूषकः**—मए णाम मुद्धचादएण विअ सुक्खघणगज्जिदे अन्दरिक्खे जलपाणं इच्छिदं । [ मया नाम मुग्धचातकेनेव शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिष्टम् । ]

**परिव्राजिका**—एवमेव ।

Ganadāsa. The queen's favour, too, is responsible for my good fortune. *( Looking at the Vidūṣaka )* Now, Gautama, say what you have in your mind.

Vidūṣaka. The first time that skill is exhibited a Brāhmaṇa must be honoured; and that you have forgotten to do.

Parivrājikā. Ha! Ha! What a vital point in acting!

Vidūṣaka. What else, you conceited woman! What, indeed, do you know, when you are not able to break even balls of sweets? You merely frighten these people here by your abundant hair that are white like the clear rays of the moon.

*( They all laugh; Mūlavikā too gently smiles. )*

King. *(To himself)* my eye has perceived the most beautiful of the objects of sight. For

it has beheld the smiling face of the long-eyed one, lovely with the teeth but half visible, like an opening lotus with its filaments partially seen. (10)

Gaṇadāsa. Great Brāhamaṇa, this is not a musical piece in regular stage-costume. How, otherwise, could we have failed to do you honour who deserve to be honoured?

Vidūṣaka. I, indeed, like the simple Cātaka had asked for a drink of water when the sky was filled with the rumble of a rainless cloud.

Parivrājikā. Yes, even so.

**विदूषकः**—भअवदि, पण्डिदपरिदोसप्पच्चआ णं मूढा आदी। जइ भअवदीए सोहणं भणिदं तदो इमं से पारितोसिअं पयच्छम्मि। (इति राज्ञो हस्तात्कटकमाकर्षति।) [ भगवति, पण्डितपरितोषप्रत्यया ननु मूढा जातिः। यदि भगवत्या शोभनं भणितं तत् इदमस्यै पारितोषिकं प्रयच्छामि। ]

**देवी**—चिट्ठ चिट्ठ। गुणन्तरं अआणन्तो किंति तुमं आहरणं देसि। [ तिष्ठ तिष्ठ। गुणान्तरमजानन्किमिति त्वमाभरणं ददासि। ]

**विदूषकः**—परकेरअं ति कदुअ। [ परकीयमिति कृत्वा। ]

**देवी** ( आचार्यं विलोक्य )—अज्ज गणदास, णं दंसिदोवदेसा वो सिस्सा। [आर्य गणदास, ननु दर्शितोपदेशा वः शिष्या। ]

**गणदासः**—वत्से प्रतिष्ठस्वेदानीम्। (मालविका सहाचार्येण निष्क्रान्ता।)

**विदूषकः** ( राजानं विलोक्य। जनान्तिकम्। )—एत्तिओ मे मदिविहवो भवन्तं सेविदुम्। [ एतावान्मे मतिविभवो भवन्तं सेवितुम्। ]

**राजा** ( जनान्तिकम्। )—अलमलं परिच्छेदेन। अद्य हि

**भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव।**
**द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करणम् ॥११॥**

**विदूषकः**—साहु तुमं दरिद्दो आदुरो विअ वेज्जेण उवणिज्जमाणं ओसहं इच्छसि। [ साधु त्वं दरिद्र आतुर इव वैद्येनोपनीयमानमौषधमिच्छसि। ]

( प्रविश्य। ) **हरदत्तः**—देव मदीयमिदानीमुपदेशमवलोकयितुं क्रियतां प्रसादः।

**राजा** ( आत्मगतम्। )—अवसितो मे दर्शनार्थः। ( दाक्षिण्यमवलम्ब्य। प्रकाशम्। ) हरदत्त, ननु पर्युत्सुका एव वयम्।

Vidūṣaka. Revered lady, those who are ignorant have to depend upon the satisfaction of the learned. If you commend her, here would I give her a present. ( *So saying, he draws off a bracelet from the king's hand.* )

Queen. Hold, hold. How could you bestow the ornament before you have known a different kind of merit?

Vidūṣaka. Because it belongs to another.

Queen. *(Looking at the professor)* Noble Gaṇadāsa, your pupil has indeed exhibited her proficiency.

Gaṇadāsa. Child, you may leave now. ( *Mālavikā departs with her teacher.)*

Vidūṣaka. ( *Looking at the king, aside* ) Thus far only can my ingenuity help you.

King. Have done with setting a limit to your power. For now

> I regard her disappearance to be like the obscuration of the prosperity of mine eyes, or like the end of the great festivity of my heart, or like the closing of the portals of my joy. ( 11 )

Vidūṣaka. Ah, well! Like a poor patient you desire the physician to procure you medicine.

( *Entering* )

Haradatta. King please now favour me by witnessing the exhibition of my skill in teaching.

King. ( *To himself* ) The object of my vision has vanished; *(Courteously, aloud)* friend Haradatta, indeed, we are so eager!

हरदत्तः—अनुगृहीतोऽस्मि ।

वैतालिकः–(नेपथ्ये) विजयतां देवः । उपारूढो मध्याह्नः । तथाहि ।

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ।
बिन्दूत्क्षेपान्पिपासुः परिपतति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥ १२ ॥

विदूषकः—अविहा अविहा । बम्हणस्स भोअणवेला संवुत्ता । अत्तहोदो वि । उइदवेलादिक्कमे चिकिस्सआ दोसं उदाहरन्ति । हरदत्त किं दाणिं भणसि । [ अविहा अविहा । ब्राह्मणस्य भोजनवेला संवृत्ता । अत्रभवतोऽपि । उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति । हरदत्त, किमिदानीं भणसि । ]

हरदत्तः—नास्ति मे वचनस्यान्यस्यात्रकाशोऽत्र ।

राजा ( हरदत्तमवलोक्य । )—तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्यामः । विश्राम्यतु भवान् ।

हरदत्तः—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

देवी—णिव्वत्तेदु अज्जउत्तो मज्जणविहिं । [ निर्वर्तयत्वार्यपुत्रो मज्जनविधिम् । ]

विदूषकः—होदि, विसेसेण भोअणं तुवरावेदु । [ भवति, विशेषेण भोजनं त्वरयतु । ]

परिव्राजिका ( उत्थाय । )—स्वस्ति भवते ।

( इति सपरिजनया देव्या सह निष्क्रान्ता )

विदूषकः—भो ण केवलं रूवे सिप्पे वि अदुदीया मालविआ । [ भोः न केवलं रूपे शिल्पेऽप्यद्वितीया मालविका । ]

Haradatta. I feel favoured.

*( Behind the scenes )*

A bard.

Victory to our king! It is mid-day. Thus
the swans with closed eyes nestle under the shadows of the leaves of the lotus-plants in the ponds; while the pigeons hate to be on the terrace-tops on account of the blazing heat; the peacock dashes to the revolving water-wheel desiring to lick up the splashing drops; and the sun too, endowed with all his rays, as you with kingly virtues, is shining brilliantly. (12)

Vidūṣaka. O confound it! It is time for this Brāhmaṇa to feed himself, so likewise for your majesty; and the physicians warn us that it is a grave mistake to transgress the proper time. How do you think, Haradatta?

Haradatta. There is no occasion for words other than these from me.

King. ( *Looking at Haradatta* ) Well, then, we shall witness your instruction to-morrow. Rest you.

Haradatta. As the king commands. ( *Exit* )

Queen. Let my noble Lord finish his bath.

Vidūsaka. You will be particularly quick in getting the meal ready.

Parivrājikā. ( *Rising* ) Blessings on you.

*( Leaves along with the queen and attendants. )*

Vidūṣaka. Sir, not in loveliness alone, but also in the art is she peerless.

राजा—वयस्य

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता ।
परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥ १३ ॥

किं बहुना, चिन्तयितव्योऽस्मि ते ।

विदूषकः—भवदा वि अहं । दिढं खु विवणिकन्दू विअ उअरब्भन्दरं डज्झइ । [ भवताप्यहम् । दृढं खलु विपणिकन्दुरिवोदराभ्यन्तरं दह्यते । ]

राजा—एवमेव भवान् सुहृदर्थे त्वरताम् ।

विदूषकः—गहिदक्खणोम्हि । किं दु मेहावलीरुद्धजोह्ना विअ पराहीणदंसणा तत्तहोदी मालविआ । भवं वि सूणोवरिअरो गिद्धो विअ आमिसलोलुओ भीरुओ अ । ता अणादुरो भविअ कज्जसिद्धिं पत्थयन्तो मे रुच्चइ । [ गृहीतक्षणोऽस्मि । किं तु मेघावलीरुद्धज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका । भवानपि सूनोपरिचरो गृध्र इव आमिषलोलुपो भीरुकश्च । तस्मादनातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे । ]

राजा—सखे कथमनातुरो भविष्यामि । यदा

सर्वान्तःपुरवनिताव्यापारं प्रति निवृत्तहृदयस्य ।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥ १४ ॥

( इति निष्क्रान्ताः सर्वे । )

इति द्वितीयोऽङ्कः ।

**King.** Friend,

the creator now by uniting this knowledge of the fine arts to her artless charms has surely devised a shaft of love smeared with poison. (13)

What more! You have ever to be solicitous about me.

**Vidūṣaka.** You too about me. For the inside of me is grilling like the frying pan in the market-place.

**King.** Even so, do you be quick to accomplish your friend's desire.

**Vidūṣaka.** I undertake the venture. But like moon-light veiled by clouds the sight of the lady Mālavikā is dependent upon another; while you, like the vulture wheeling over the slaughter-house, desire the flesh yet fear to venture. I shall, therefore, much appreciate your exercising patience while you seek success in this venture.

**King.** Friend, how can I curb my impatience when

that sweet-eyed beauty has become the one centre of the affection of my heart which has withdrawn its interest from all the ladies of my harem? (14).

*( Exeunt Omnes. )*

**Here ends the Second Act.**

# तृतीयोऽङ्कः ।

(ततः प्रविशति परिव्राजिकायाः परिचारिका ।)

**परिचारिका**—आणत्तम्हि भअवदीए । उवाअणत्थं बीजपूरअं गेण्हिअ आअच्छत्ति । ता जाव पमदवणपालिअं महुअरिअं अण्णेसामि । (परिक्रम्य अवलोक्य च ।) एसा तवणीआसोअं ओलोअन्ती चिट्ठइ । जाव णं उवसप्पे । [आज्ञप्तास्मि भगवत्या । 'उपायनार्थं बीजपूरकं गृहीत्वागच्छ' इति । तद्यावत् प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती तिष्ठति । यावदेनामुपसर्पामि ।]

(ततः प्रविशत्युद्यानपालिका ।)

**परभृतिका** (उपसृत्य ।)—महुअरिए अवि सुहो दे उज्जाणव्वावारो । [मधुकरिके, अपि सुखस्त उद्यानव्यापारः ।]

**मधुकरिका**—अम्मो परहुदिआ । सहि साअदं दे । [अम्मो परभृतिका । सखि स्वागतं ते ।]

**परभृतिका**—हला भअवदी आणवेदि अरित्तपाणिणा अम्हारिसजणेण तत्तहोदी देवी देक्खिदव्वा । ता बीजपूरएण सुस्सूसिदुं इच्छम्मित्ति । [हला, भगवत्याज्ञापयति 'अरिक्तपाणिनास्मादृशजनेन तत्रभवती देवी द्रष्टव्या । तद्बीजपूरकेण शुश्रूषितुमिच्छामि' इति ।]

**मधुकरिका**—णं सण्णिहिदं एव्व बीजपूरअं । कहेहि दाव अण्णोण्णसङ्घरिसिदाणं णट्टाअरिआणं उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो । [ननु सन्निहितमेव बीजपूरकम् । कथय तावदन्योन्यसङ्घर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः ।]

**परभृतिका**—दुवे वि किल आअमिणो पओअणिउणा अ । किंदु सिस्सागुणविसेसेण उण्णमिदो गणदासो । [द्वावपि किलागमिनौ प्रयोगनिपुणौ च । किं तु शिष्यागुणविशेषेण उन्नमितो गणदासः ।]

## ACT III.

*( Enter the maid-servant of the Parivrājikā ).*

Maid-servant. I have been ordered by the reverend lady to fetch for her a fruit of the citron for offering as a present. I will, therefore, find out Madhukarikā, the keeper of the Pramadavana garden. *( Moving about and looking).* Here she is, looking at the gold Aśoka tree; so I will go to her.

*( Enter the keeper of the Garden. )*

Parabhṛtikā. : *( Approaching )* Madhukarikā, I hope you find your work in the garden quite pleasant.

Madhukarikā. Ah! Friend Parabhṛtikā, you are welcome.

Parabhṛtikā. Friend, the reverend lady says :— people like us ought not to approach the queen with empty hands. I, therefore, desire to make her the gift of a citron and wait upon her.

Madhukarikā. Oh, here is a citron quite at hand. But tell me which of the two professors of dancing that had quarrelled was praised by the reverend lady after she had witnessed their skill in teaching?

Parabhṛtikā. Both are, indeed, known to be very learned and skilful teachers. But Gaṇadāsa was adjudged the superior of the two, owing to the excellent merits of his pupil.

**मधुकरिका**——अह मालविआगदं कोलीणं कहं सुणीअदि। [ अथ मालविकागतं कौलीनं कथं श्रूयते । ]

**परभृतिका**——बलिअं खु साहिलासो भट्टा तस्सिं । केवलं देवीए धारिणीए चित्तं रक्खन्तो अत्तणो पहुत्तणं ण दंसेदि । मालविआ वि इमेसु दिअहेसु अणुहूदमुत्ता विअ मालदीमाला मिलायमाणा लक्खिअदि । अदो वरं ण आणे । विसज्जेहि मं । [ बलवत् खलु साभिलाषो भर्ता तस्याम् । केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं न दर्शयति । मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लायमाना लक्ष्यते । अतः परं न जाने । विसर्जय माम् । ]

**मधुकरिका**——एदं साहावलम्बि बीजपूरअं गेह्ण । [ एतच्छाखावलम्बि बीजपूरकं गृहाण । ]

**परभृतिका** ( नाट्येन गृहीत्वा )—हला तुमं वि इदो वरं पेसलअरं साहुअणसुस्सूसाए फलं पाविदा होहि । [ हला त्वमपि इतः परं पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्ता भव । ]

( इति प्रस्थिता । )

**मधुकरिका**——सहि समं एव्व गच्छम्ह । अहं वि इमस्स चिराअमाणकुसुमुग्गमस्स तवणीआसोअस्स दोहदणिमित्तं देवीए विण्णवेमि । [ सखि सममेव गच्छावः । अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै विज्ञापयामि । ]

**परभृतिका**——जुज्जइ । अहिआरो खु तुह । [युज्यते । अधिकारः खलु तव । ] ( इति निष्क्रान्ते । )

**प्रवेशकः ।**

( ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च । )

**राजा** ( आत्मानं विलोक्य )—

**शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे**
**भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।**

Madhukarikā. Well, but what is this scandal about Mālavikā ?

Parabhṛtikā. The king has conceived a strong passion for her. Only out of regard for the feelings of queen Dhāriṇī, he does not exercise his power. Mālavikā, too, during all these days has grown pale like a jasmine garland worn and cast away. Beyond this I know nothing. Well, allow me to go.

Madhukarikā. Take the citron that hangs on yonder bough.

Parabhṛtikā. *(Acting as if she picks up the citron)* Ah, may you get a far more glorious fruit than this for your readiness to serve the saintly lady.

*( Starts to go. )*

Madhukarikā. Friend, we will go together. For I want to request the queen regarding the longing of this gold Aśoka tree which is delaying to burst into blossom.

Parabhrtikā. Quite right. Indeed, it is your duty.

*( Exeunt both. )*

**Here ends the introductory scene.**

*( Enter the king in a love-lorn state, and the Vidūṣaka.)*

King. *( Looking at himself )*

The body may get emaciate in the absence of the pleasure of the beloved's embrace, and the eyes tearful, as they do not get even a moment's

**तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं**
**प्रसक्ते निर्वाणे हृदय परितापं वहसि किम् ॥ १ ॥**

**विदूषकः**—अलं भवदो धीरदं उज्झिअ परिदेविदेण । दिट्ठा मए तत्तहोदीए मालविआए पिअसही बउलावलिआ । सुणाविदा अ मए जं भवदा सन्दिट्ठं । [ अलं भवतो धीरतामुज्झित्वा परिदेवितेन । दृष्टा मया तत्रभवत्या मालविकायाः प्रियसखी बकुलावलिका । श्राविता च मया यद्भवता सन्दिष्टम् ।]

**राजा**—ततः किमुक्तवती ।

**विदूषकः**—विण्णवेहि भट्टारं । अणुगहीदम्हि इमिणा णिओएण । किं दु सा तवस्सिणी देवीए अहिअदरं रक्खिअमाणा णाअरक्खिदो विअ णिही ण सुहं समासादइदव्वा भविस्सदि । तह वि घडइस्सं ति । [ विज्ञापय भर्तारम् । ' अनुगृहीतास्मि अनेन नियोगेन । किं तु सा तपस्विनी देव्या अधिकतरं रक्ष्यमाणा नागरक्षित इव निधिर्न सुखं समासादयितव्या भविष्यति । तथापि घटयिष्यामि ' इति । ]

**राजा**—भगवन् सङ्कल्पयोने, प्रतिबन्धवत्स्वपि विषयेष्वभिनिवेश्य तथा प्रहरसि यथा जनोऽयं कालान्तरक्षमो न भवति । ( सविस्मयं )

**क रुजा हृदयप्रमाथिनी क च ते विश्वसनीयमायुधम् ।**
**मृदु तीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥२॥**

**विदूषकः**—णं भणामि तस्सिं साहणिज्जे कज्जे किदो मए उवाओवक्खेवो । ता पज्जवत्थावेदु भवं अत्ताणं । [ ननु भणामि तस्मिन् साधनीये कार्ये कृतो मयोपायोपक्षेपः । तत्पर्यवस्थापयतु भवानात्मानम् । ]

**राजा**—अथेमं दिवसशेषमुचितव्यापारविमुखेन चेतसा क न खलु थापयामि ।

**विदूषकः**—णं भवं अज्ज पुढमं वसन्दावदारसूअआइं रत्तासोअकोरआइं उवाअणं पेसिअ णववसन्दूसवावदेसेण इरावदीए

glimpse of her; but, my heart, never art thou severed from that fawn-eyed one: how then dost thou suffer agony even when thou gettest the highest bliss? (1)

Vidūṣaka. Do not give up fortitude and lament. I have seen Bakulāvalikā, the dear friend of the lady Mālavikā. I have also conveyed to her your message.

King. What was her reply to that?

Vidūṣaka. 'Request the king: I feel favoured by this command. But the poor girl is being more carefully guarded by the queen like a treasure by a cobra, and, therefore, will not be obtained with ease. Still I will do my best.'

King. Oh revered God of love, although you impel me to long for an inaccessible object, yet you smite me so sorely that I am not able to brook any delay. (*Wonderingly*)

What great disparity is there between this heart-wrenching ache, and your weapon seemingly so harmless! What is described as both soft and piercing hard—that indeed is see in you, O love. (2)

Vidūṣaka. Well, I say, I have devised means for the (attainment) of the object desired. Do you, therefore, compose yourself.

King. Where shall I pass the rest of the day when my mind feels such aversion for my proper duties?

Vidūṣaka. Well, you have already heard through Nipuṇikā the request of Irāvatī, who taking occasion

णिउणिआमुहेण पत्थिदो । इच्छामि अज्जउत्तेण सह डोलाहिरोहणं अणुहोदुं ति । भवदा वि से पडिण्णादं । ता पमदवणं एव्व गच्छम्ह । [ ननु भवानद्य प्रथमं वसन्तावतारसूचकानि रक्ताशोककोरकाण्युपायनं प्रेष्य नववसन्तोत्सवापदेशेन इरावत्या निपुणिकामुखेन प्रार्थितः 'इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितुम्' इति । भवताप्यस्यै प्रतिज्ञातम् । तत्प्रमदवनमेव गच्छावः । ]

**राजा**—न क्षममिदम् ।

**विदूषकः**—कहं विअ । [ कथमिव । ]

**राजा**—वयस्य निसर्गनिपुणाः स्त्रियः । कथं मामन्यसङ्क्रान्तहृदयमुपलालयन्तमपि ते सखी न लक्षयिष्यति । अतः पश्यामि ।

उचितः प्रणयो वरं विहन्तुं
बहवः खण्डनहेतवो हि दृष्टाः ।
उपचारविधिर्मनस्विनीनां
न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥ ३ ॥

**विदूषकः**—णारुहदि भवं सव्वं अन्देउरपडिट्ठिदं दक्खिण्णं एक्कपदे पिट्ठदो कादुं । [ नार्हति भवान् सर्वमन्तःपुरप्रतिष्ठितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् । ]

**राजा** ( विचिन्त्य )—तेन हि प्रमदवनमार्गमादेशय ।

**विदूषकः**—इदो इदो भवं । [ इत इतो भवान् । ]

( उभौ परिक्रामतः । )

**विदूषकः**—णं एदं पमदवणं पवणचलिदाहिं पल्लवंगुलीहिं तुअरावेदि विअ भवन्दं । ता पविसदु भवं । [ नन्वेतत्प्रमदवनं पवनचलिताभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तम् । तत्प्रविशतु भवान् । ]

of spring's advent has first sent you as present the buds of the red Aśoka tree indicative of the arrival of that season : " I long to enjoy sitting on the swing together with my lord." You too have promised her. So we shall proceed to the Pramadavana garden.

King. That is impossible.

Vidūṣka. How do you mean ?

King. Friend, women are naturally so cunning. Do you think she will not notice—spite of all my love-caressings—that my heart is devoted to another ? Therefore, I see clearly

that it is better to decline this request, although it is a proper one to make at this season, for I know many excuses for declining it than to go through the form of showing regard to these proud women, may be, with greater fervour than before, when one feels not even a shred of affection for them. (3)

Vidūṣaka. You ought not all of a sudden to throw aside your unfailing courtesy to the ladies of your harem.

King. ( *Reflecting* ) well, then, lead the way to the Pramadavana.

Vidūṣaka. This way, this way, my friend. ( ***Both move about.*** )

Vidūṣaka. Here we come to the Pramadavana which seems to beckon you to hurry up with its fingers of leaves waving in the wind ; so please to enter.

राजा—(स्पर्शसुखं रूपयित्वा।)—अभिजातः खलु वसन्तः। सखे
१२ पश्य

आमत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव।
अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन॥ ४॥

विदूषकः—एहि। पविस णिव्वुदिलाहाअ। [एहि। प्रविश निर्वृतिलाभाय।] (उभौ प्रविशतः।)

२ विदूषकः—भो वअस्स अवहाणेण दिट्ठिं देहि। एदं खु भवन्दं विलोहइदुकामाए पमदवणलच्छीए जुवइवेसलज्जत्तअं वसंदकुसुमणेवत्थं गहिदं। [भो वयस्य अवधानेन दृष्टिं देहि। एतत्खलु भवन्तं विलोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेषलज्जयितृकं वसन्तकुसुमनेपथ्यं गृहीतम्।]

राजा—ननु विस्मयादवलोकयामि।

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरवकं श्यामावदातारुणम्।
आक्रान्ता तिलकक्रियापि तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम्॥५॥

(उभौ उद्यानशोभां निरूपयतः।)

(ततः प्रविशति पर्युत्सुका मालविका।)

३ मालविका—अविण्णादहिअअं भट्टारं अहिलसन्ती अत्तणो वि दाव लज्जेमि। कुदो विहवो सिणिद्धसहिअणस्स इमं वुत्तन्तं आअक्खिदुं। ण आणे अप्पडीआरगरुअं वेणं केत्तिअं कालं
६ मअणो मं णइस्सदि। (कतिचित्पदानि गत्वा।) कहिं णु खु पत्थिदम्हि। (विचिन्त्य) आं सन्दिट्ठम्हि देवीए जह 'मालविए गोदमचावलादो डोलापरिब्भट्ठाए सरुजा मह चलणा। तुमं दाव

King. ( *Gesticulating that he feels the pleasure of touch* ) How noble is spring : see friend,

by the sweet notes of the slightly intoxicated koil, he seems to be compassionately inquiring whether I can bear the torture of love; while the south breeze with its soft touch and its incense of mango-blossoms is like the palm of spring's hand stroking my limbs. ( 4 )

Vidūṣaka. : Come, enter and repose yourself. ( *Both enter.* )

Vidūṣaka. Look attentively, my friend. Surely the presiding goddess of the Pramadavana desiring to allure you has put on the garment of spring-flowers that puts to shame the dress of a young lady.

King. Indeed, I behold it and am filled with wonderment.

The gleaming red of the Aśoka excels the paint that is applied to the bimba-like lip ; the Kurabaka with its (variety of colours) dark, and bright, and red, surpasses the paintings on the forehead ; the Tilaka blossoms with the bees clinging to them like collyrium, have thoroughly grasped the art of adorning the forehead with the tilaka mark ; thus vernal beauty seems to hold up to ridicule the art of adorning the face as practised by women. ( 5 )

(*Both of them observe the beauty of the garden, Enter Mālavikā in a state of longing.*)

Mālavikā. How I feel ashamed of myself for being in love with the king, whose heart is unknown to me !

तवणीआसोअस्स दोहलं णिव्वट्टेहि। जइ सो पञ्चरत्तब्भन्दरे कुसुमं दंसेदि तदो अहं तुह ( अन्तरा निश्वस्य ) अहिलासपूरइत्तअं पसादं दाइस्सं ' ति । ता जाव णिओअभूमिं पुढमं गदा होमि । जाव अणुपदं मह चलणालङ्कारहत्थाए बउलावलिआए आअन्तव्वं । परिदेविस्सं दाव विस्सद्धं मुहुत्तअं। ( इति परिक्रामति ) [ अविज्ञातहृदयं भर्तारमभिलषन्त्यात्मनोऽपि तावल्लज्जे । कुतो विभवः स्निग्धसखीजनस्येमं वृत्तान्तमाख्यातुम् । न जाने अप्रतीकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यति । कुत्र नु खलु प्रस्थितास्मि । आम् सन्दिष्टास्मि देव्या यथा ' मालविके गौतमचापलाद् दोलापरिभ्रष्टायाः सरुजौ मम चरणौ । त्वं तावत्तपनीयाशोकस्य दोहदं निर्वर्तय । यदि स पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति ततोऽहं तव ( अन्तरा निःश्वस्य ) अभिलाषपूरयितृकं प्रसादं दास्यामि ' इति । तद्यावन्नियोगभूमिं प्रथमं गता भवामि । यावदनुपदं मम चरणालङ्कारहस्तया बकुलावलिकया आगन्तव्यम् । परिदेविष्ये तावद् विस्रब्धं मुहूर्तकम् । ]

विदूषकः ( दृष्ट्वा )—ही ही इअं खु सीहुपाणुव्वेजिदस्स मच्छण्डिआ उवणदा । [ ही ही इयं खलु शीधुपानोद्वेजितस्य मत्स्यण्डिका उपनता । ]

राजा—अये किमेतत् ।

विदूषकः—एसा खु णादिपज्जत्तवेसा पज्जुस्सुआ विअ एआइणी मालविआ अदूरे वट्टइ । [एषा खलु नातिपर्याप्तवेषा पर्युत्सुकेव एकाकिनी मालविका अदूरे वर्तते । ]

राजा ( सहर्षम् )—कथं मालविका ।

विदूषकः—अह इं । [ अथ किम् ]

राजा—शक्यमिदानीमात्मानमवलम्बितुम् ।

त्वदुपलभ्य समीपगतां प्रियां
हृदयमुच्छ्वसितं मम विक्लवम् ।

Where have I the courage to speak of the circumstance to my dear friend? I do not know how long will love submit me to this irremediably severe agony. (*Moving a few steps*) Where, indeed, am I going? (*Reflecting*) Ah, the queen has ordered me: 'Mālavikā, having had a fall from the swing owing to the heedlessness of Gautama, I am still suffering pain in my feet. Do you, therefore, perform the ceremony of fulfilling the longing of the golden Aśoka. If within five nights from this time it shows flowers, then will I (*Heaves a sigh in the middle of her speech*) bestow on you a favour which will gratify your desire.' I will, therefore, first proceed to the place where I am to perform this duty. For immediately after me will Bakulāvalikā come with the ornaments to adorn my feet. Let me then for a while freely bewail my state. (*Moves about.*)

Vidūṣaka. (*Observing*) Here is treacle offered to you who have been troubled with drinking wine.

King. Ah, what is this?

Vidūṣaka. Here is Mālavikā, not far (from us) but scantily dressed, who looks like one afflicted, and all alone.

King. (*With joy*) How? Mālavikā?

Vidūṣaka. Certainly.

King. Now it is possible to support my life.

When I learnt from you that my beloved was quite close (to us) my distracted heart (at once) revived like that of a thirsty traveller,

तलवृतं पथिकस्य पिपासतः
सलिलमारसितादिव सारसात् ॥ ६ ॥

अथ क तत्रभवती ।

विदूषकः—एषा णं तरुराइमज्झादो णिक्कन्ता इदो एव्व परिवट्टन्ती दीसइ । [ एषा ननु तरुराजिमध्यान्निष्क्रान्ता इत एव परिवर्तमाना दृश्यते । ]

राजा—वयस्य पश्याम्येनाम्

विपुलं नितम्बबिम्बे मध्ये क्षामं समुन्नतं कुचयोः ।
अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ७ ॥

सखे पूर्वस्मादवस्थान्तरमुपारूढा तत्रभवती । तथा हि ।

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ॥८॥

विदूषकः—एसा वि भवं विअ मअणव्वाहिणा परामिट्ठा भविस्सदि। [ एषापि भवानिव मदनव्याधिना परामृष्टा भविष्यति ।]

राजा—सौहार्दमेवं पश्यति ।

मालविका—अअं सो सुउमारदोहलावेक्खी अगहिदकुसुमणेवत्थो उक्कण्ठिदं मं अणुकरेदि असोओ । जाव से पच्छाअसीदले सिलापट्टए णिसण्णा अत्ताणं विणोदेमि । [ अयं स सुकुमारदोहदापेक्षी अगृहीतकुसुमनेपथ्य उत्कण्ठितां मामनुकरोत्यशोकः । यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णात्मानं विनोदयामि । ]

विदूषकः—सुदं भवदा उक्कण्ठिदम्हित्ति तत्तहोदीए मन्तिदं । [ श्रुतं भवता उत्कण्ठितास्मीति तत्रभवत्या मन्त्रितम् । ]

राजा —नैतावता भवन्तं प्रसन्नतर्कं मन्ये । कुतः ।

वोढा कुरबकरजसां किसलयपुटभेदशीकरानुगतः ।
अनिमित्तामुत्कण्ठामपि जनयति मलयवातोऽयम् ॥९॥

when from the cry of the Sārasa he gathers that some river surrounded by trees is near. (6)

Well, where is she?

Vidūsaka. Here she emerges from the rows of trees and seems to be turning in this very direction.

King. Well, friend, I see her.

Ample in the hips and thin in the waist, uplifted in the bosom and very broad in the eyes she, my very life, is coming. (7)

Friend, how she seems to have changed from the former state! For

scantily decked, her broad cheeks pale like the stalk of a reed, she resembles a Kunda creeper having its leaves ripened by spring and with only a few flowers. (8)

Vidūsaka. It is likely that she too like yourself is affected with love-sickness.

King. It is only friendship that sees thus.

Mālavikā. This Aśoka awaiting the fulfilment of its delicate longing, and not assuming its robe of flowers, seems to invite me in my love-sick condition. So I will sit on the cool slab under its shade and divert myself.

Vidūṣaka. Did you hear? She said she was in a love-sick state.

King. That is not enough to assure me of the correctness of your inference.

This Malaya breeze laden with the pollen of the Kurabaka flowers, and charged with the drops of water issuing from the opening folds of the tender sprouts, produces longing in the heart without any definite cause. (9)

( मालविका उपविष्टा । )

राजा—वयस्य इतस्तावदावां लतान्तरितौ भवावः ।

विदूषकः—इरावदिं विअ अदूरे समत्थेमि । [ इरावतीमिवादूरे समर्थये । ]

राजा—न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः ।

( इति विलोकयन्स्थितः । )

मालविका—हिअअ णिरवलम्बादो मणोरहादो विरम । किं मं आआसेसि । [हृदय निरवलम्बान्मनोरथाद्विरम । किं मामायासयसि।]

( विदूषकः राजानमवेक्षते । )

राजा ( आत्मगतम् )—प्रिये पश्य वामतां स्नेहस्य ।

औत्सुक्यहेतुं विवृणोषि न त्वं
तत्त्वावबोधैकरसो न तर्कः ।
तथापि रम्भोरु करोमि लक्ष्य-
मात्मानमेषां परिदेवितानाम् ॥ १० ॥

विदूषकः—सम्पदं भवदो णिस्संसअं भविस्सदि । एसा अप्पिद-मअणसन्देसा विविते णं बउलावलिआ उवट्ठिदा । [ सांप्रतं भवतो निःसंशयं भविष्यति । एषार्पितमदनसन्देशा विविक्ते ननु बकुलावलिकोपस्थिता । ]

राजा—अपि स्मरेदस्मदभ्यर्थनाम् ।

विदूषकः—किं दाणिं एसा दासीए सुदा तुह गरुअं सन्देसं विसुमरिस्सदि । अहं वि दाव दाणिं एदं ण विसुमरेमि । [ किमिदानीमेषा दास्याः सुता तव गुरुकं सन्देशं विस्मरिष्यति । अहमपि तावदिदानीमेतं न विस्मरामि । ]

( प्रविश्य चरणालङ्कारहस्ता बकुलावलिका । )

बकुलावलिका—अवि सुहं सहीए । [ अपि सुखं सख्याः । ]

*(Mālavikā sits down.)*

King. Friend, come here, let us hide behind the creepers.

Vidūṣaka. I think Irāvatī, too, is not far from here.

King. But the elephant recks not of the alligator, when he sees a lotus-plant.

*( Stands gazing. )*

Mālavikā. My heart, cease from cherishing this fruitless longing. Why should you torture me?

*( The Vidūṣaka looks at the king. )*

King. ( *To himself* ) Beloved, look, how perverse is love.

You do not reveal the cause of your longing
nor does conjecture invariably give the truth;
nevertheless, fair one, I regard myself as the
theme of these lamentations. (10)

Vidūsaka. Now will be dispelled all your doubts. For is not that Bakulāvalikā to whom I gave your message of love arriving in this solitary place?

King. I wonder if she remembers my request.

Vidūṣaka. How would that daughter of a female slave forget your weighty message now? Why, even I remember it perfectly well at this moment.

*(Enter Bakulāvalikā with ornaments for the feet in her hand.)*

Bakulāvalikā. Is my friend happy?

मालविका—अम्मो बउलावलिआ । सहि साअदं दे । उवविस । [ अम्मो बकुलावलिका । सखि स्वागतं ते । उपविश । ]

बकुलावलिका ( उपविश्य )–हला तुमं दाव दाणिं देवीए जोग्गदाए णिउत्ता । ता एक्कं दे चलणं उवणेहि । जाव सालत्तअं सणेउरं करेमि । [ हला त्वं तावदिदानीं देव्या योग्यतया नियुक्ता । तदेकं ते चरणमुपनय । यावत्सालक्तकं सनूपुरं करोमि । ]

मालविका ( स्वगतम् )—हिअअ अलं सुहिददाए अअं विहवो उवट्ठिदोत्ति । कहं दाणिं अत्ताणं मोचएअं । अहवा एदं एव्व मह मिच्चुमण्डणं भविस्सदि । [ हृदय अलं सुखिततया अयं विभव उपस्थित इति । कथमिदानीमात्मानं मोचयेयम् । अथवा एतदेव मे मृत्युमण्डनं भविष्यति । ]

बकुलावलिका—किं विआरेसि । उस्सुआ खु एदस्स तवणीआसोअस्स कुसुमुग्गमे देवी । [ किं विचारयसि । उत्सुका खल्वेतस्य तपनीयाशोकस्य कुसुमोद्गमे देवी । ]

राजा—कथमशोकदोहदनिमित्तोऽयमारम्भः ।

विदूषकः—किं णु खु ण आणासि अकालणादो देवी इमं अन्देउरणेवत्थेण ण संजोअइस्सदित्ति । [ किं नु खलु न जानासि अकारणाद्देवी इमां अन्तःपुरनेपथ्येन न संयोजयिष्यतीति । ]

मालविका ( पादमुपहरन्ती )—हला मरिसेहि दाणिं । [ हला मर्षयेदानीम् । ]

बकुलावलिका—अइ सरीरं सि मे । (नाट्येन चरणालङ्कारमारभते ।) [ अयि शरीरमसि मे । ]

राजा— चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य रागरेखाम् ।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥ ११ ॥

**Mālavikā.** Ah! Bakulāvalikā is come! Friend you are welcome. Sit down.

**Bakulāvalikā.** ( *Sitting down* ) Friend, you have indeed been appointed by the queen, owing to your fitness. So give me one of your feet; so that I might lay on it the Alaktaka die and put the anklet on it.

**Mālavikā.** ( *To herself* ) My heart, do not be happy that greatness comes to you. How can I secure my freedom? Or rather this will serve as the ornament to adorn me at death.

**Bakulāvalikā.** Why are you hesitating? The queen indeed, is anxious that the golden Aśoka should burst into flowers.

**King.** So all this preparation is due to the longing of the Aśoka!

**Vidūṣaka.** Why! Don't you know that the queen will not without reason make her put on the attire of the harem?

**Mālavikā.** ( *Bringing close her foot* ) Friend, please to pardon me.

**Bakulāvalikā.** You are indeed as dear to me as my very body. ( *She gesticulates adorning her foot.* )

**King.** Friend, look at this streak of wet paint laid upon her foot, which is like the first burgeoning of leaves on the tree of love consumed by Hara. ( 11 )

विदूषकः—चलणाणुरूवो क्खु तत्तहोदीए अहिआरो उवक्खित्तो। [ चरणानुरूपः खलु तत्रभवत्या अधिकार उपक्षिप्तः । ]

३ राजा—सम्यगभिहितं भवता।

नवकिसलयरागेणाग्रपादेन बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणिहितशिरसं वा कान्तमार्द्रापराधम् ॥१२॥

विदूषकः—पारइस्ससि तत्तहोदीए अवरद्धुं। [पारयिष्यति तत्र-भवत्या अपराद्धुम् । ]

६ राजा—प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य।

( ततः प्रविशति युक्तमदा इरावती चेटी च । )

इरावती—हञ्जे णिउणिए सुणामि बहुसो मदो किल इत्थिआज-णस्स विसेसमण्डणं ति। अवि सच्चो अअं लोअवादो। [ हञ्जे निपुणिके शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति। अपि सत्योऽयं लोकवादः । ]

९ निपुणिका—पुढमं लोअवादो एव्व। अज्ज उण सच्चो संवुत्तो। [ प्रथमं लोकवाद एव। अद्य पुनः सत्यः संवृत्तः । ]

इरावती—अलं मइ सिणेहेण। कुदो दाणिं अवगदं लोआवरं

१२ पुढमं गदो भट्टत्ति। [ अलं मयि स्नेहेन। कुत इदानीमवगतं लोका-पूर्वं प्रथमं गतो भर्तेति। ]

निपुणिका—भट्टिणीए अक्खण्डिदादो पणआदो। [ भट्टिन्या

१५ अखण्डितात्प्रणयात् । ]

इरावती—अलं सेवाए। मज्झत्थदं गेण्हिअ भणाहि। [अलं सेवया। मध्यस्थतां गृहीत्वा भण । ]

१८ निपुणिका—वसन्दोवाअणलोलुवेण अज्जगोदमेण कहिदं। तुवरदु भट्टिणी। [वसन्तोपायनलोलुपेनार्यगौतमेन कथितम्। त्वरतां भट्टिनी।]

Vidūsaka. The queen indeed has laid upon her foot a duty of which it is worthy.

King. You speak well.

> With the toes of her foot red-hued like young foliage, this girl deserves to smite two objects—the Aśoka awaiting the fulfilment of its longing before it would blossom, and the lover who, having only recently given offence, stands with bowed head. (12)

Vidūsaka. You will soon be able to give some offence.

King. I accept these words of a Brahmin who prophesies success.

( *Enter Irāvatī in a state of intoxication and an attendant.* )

Irāvatī. Girl Nipuṇikā, I heard it often said that intoxication is a special ornament to women. Is there any truth in this popular saying ?

Nipuṇikā. First it was a popular saying merely-but now it has become true.

Irāvatī. Have done with this affection towards me. How did you know that my lord went first to the house in which the swing is ?

Nipuṇikā. From my unfailing affection for my mistress.

Irāvatī. Give up this servile attitude—speak like one independent.

Nipuṇikā. It was the noble Vasantaka, greedy to receive presents offered in the month of spring, who told me so.

इरावती—( अवस्थासदृशं परिक्रम्य । ) हञ्जे मएण मिलाअमाणं मं अज्जउत्तदंसणे हिअअं तुवरावेदि । चलणा उण मग्गे ण प्पसरन्ति । [ हञ्जे मदेन म्लायमानां मामार्यपुत्रदर्शने हृदयं त्वरयति । चरणौ पुनर्मार्गे न प्रसरतः । ]

निपुणिका—णं सम्पत्तम्ह डोलाघरअं । [ ननु संप्राप्ते स्वो दोलागृहम् । ]

इरावती—णिउणिए ण एत्थ अज्जउत्तो दीसइ । [ निपुणिके नात्रार्यपुत्रो दृश्यते । ]

निपुणिका—ओलोएदु भट्टिणी । परिहासणिमित्तं कहिं वि गूढेण भट्टिणा होदव्वं । अम्हे वि इमं पिअङ्गुलदापरिक्खित्तं असोअसिलापट्टअं पविसम्ह । [ अवलोकयतु भट्टिनी । परिहासनिमित्तं कुत्रापि गूढेन भर्त्रा भवितव्यम् । आवामपीमं प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टकं प्रविशावः । ]

( इरावती तथा करोति । )

निपुणिका ( परिक्रम्य विलोक्य । )—ओलोएदु भट्टिणी । चूदङ्कुरं विहिण्णन्तीणं अम्हाणं पिपीलिआहिं दट्ठं । [ अवलोकयतु भट्टिनी । चूताङ्कुरं विचिन्वत्योरावयोः पिपीलिकाभिर्दष्टम् । ]

इरावती—किं विअ एदं । [ किमिवैतत् ।]

निपुणिका—एसा बउलावलिआ असोअपाअवच्छाआए मालविआए चलणालङ्कारं णिव्वत्तेदि । [ एषा बकुलावलिका अशोकवृक्षच्छायायां मालविकायाश्चरणालङ्कारं निर्वर्तयति ।]

इरावती ( शङ्कां रूपयित्वा । )—अभूमी इअं मालविआए । किं तक्केसि । ( अभूमिरियं मालविकायाः । किं तर्कयसि । )

निपुणिका—तक्केमि डोलापरिब्भट्ठाए सलुजचलणाए असोअदोहलाहिआरे णिउत्ता मालविआत्ति । अण्णहा कहं देवी सअं

Irāvatī. (*Moving in a manner befitting her condition*) Girl, my heart hastens me that have grown languid through intoxication, to see my lord; but my feet do not move on the way.

Nipuṇikā. Well, we have come to the house where the swing is.

Irāvatī. Nipuṇikā, my lord is not to be seen here.

Nipuṇikā. Look about you, my mistress; for the king, simply to make fun, may have lain hidden. We too shall sit down on this slab of stone under the Asoka tree which is twined round with the Priyangu creeper.

( *Irāvatī does as described.* )

Nipuṇikā. ( *Moving about and observing* ) Look, mistress. While searching for mango-sprouts we have been bitten by ants.

Irāvatī. What is it?

Nipuṇikā. Here is Bakulāvalikā adorning Mālavikā's foot in the shade of the Aśoka tree.

Irāvatī. (*Expressing doubt*) This is not a place where Mālavikā can have access. What do you think, then?

Nipuṇikā. I think that the queen, having had a fall from the swing and got pain in her feet, has appointed Mālavikā to perform the ceremony of fulfilling the long-

धारिदं णेउरजुअलं परिअणस्स अणुजाणिस्सदि। [ तर्कयामि दोला-
परिभ्रष्टया-स्खलच्चरणया देव्या अशोकदोहदाधिकारे नियुक्ता मालवि-
४८ केति। अन्यथा कथं देवी स्वयं धारितं नूपुरयुगलं परिजनस्यानुज्ञास्यति]
इरावती—महदी खु से सम्भावणा। [ महती खल्वस्याः सम्भा-
वना। ]
५१ निपुणिका—किं उण ण अण्णेसीअदि भट्टा। [ किंपुनर्नान्वि-
ष्यते भर्ता। ]
इरावती—हंजे मे चलणा अण्णदो ण प्पवट्टन्ति। मणो वि किं
५४ वि विआरेदि। आसङ्किदस्स दाव अन्तं गमिस्सं। ( मालविकां
निर्वर्ण्य आत्मगतम्। ) ठाणे खु कादरं मे हिअअं। [ हञ्जे मे
चरणावन्यतो न प्रवर्तेते। मनोऽपि किमपि विचारयति। आश-
५७ ङ्कितस्य तावदन्तं गमिष्यामि। स्थाने खलु कातरं मे हृदयम्।]
बकुलावलिका ( चरणं दर्शयन्ती। )—हला मालविए अवि
रोअदि दे अअं चलणराअरेहाविण्णासो। [ हला मालविके अपि
६० रोचते तेऽयं चरणरागरेखाविन्यासः। ]
मालविका—अत्तणो चलणगदोत्ति लज्जेमि णं पसंसिदुं। कहेहि
केण पसाहणकलाए अहिविणीदासि। [ आत्मनश्चरणगत इति लज्जे
६३ एनं प्रशंसितुम्। कथय केन प्रसाधनकलायामभिविनीतासि। ]
बकुलावलिका—एत्थ खु भट्टिणो सिस्सम्हि। [ अत्र खलु भर्तुः
शिष्यास्मि। ]
६६ विदूषकः—तुवरेहि दाणिं गुरुदक्खिणाए। [ त्वरस्वेदानीं गुरु-
दक्षिणायै। ]
मालविका—दिट्ठिआ ण गव्विदासि। [ दिष्ट्या न गर्वितासि। ]
६९ बकुलावलिका—उवदेसाणुरूवे चलणे लम्भिअ दाणिं गव्विदा
भविस्सं। (स्वगतम्।) हन्त सिद्धं मे दोच्चं। ( राजं विलोक्य
प्रकाशम्। ) सहि एकस्स दे चलणस्स अवसिदो राअणिक्खेवो।

ing of the Aśoka tree; how, otherwise, could the queen allow a mere servant to wear the anklets worn by herself?

Irāvatī. She has, indeed, been highly honoured.

Nipunikā. But why should we not seek the king?

Irāvatī. Well, girl, my feet do not move from this place, and my mind too is filled with some suspicions; I shall first get to the end of them. (*Looking at Mālavikā, to herself*) It is but proper that my heart is filled with fear.

Bakulāvalikā. *(Pointing to the foot)* friend Mālavikā, how do you like these lines of paint on your foot?

Mālavikā. I am ashamed of praising it, as it is on my own foot. Tell me who taught you this art of decoration.

Bakulāvalikā. I am the pupil of the king in this (art).

Vidūsakā. Be quick now to receive the present due to a teacher.

Mālavikā. Happily you are free from conceit.

Bakulāvalikā. Surely I shall be full of conceit, now that I can exhibit my skill on worthy feet. (*To herself*) O joy, my mission is done. *(Looking at the paint, aloud)*

केवलं मुहमारुदो लम्भइदव्वो । अहवा पवादो एव्व अअं पदेसो । [ उपदेशानुरूपे चरणे लब्ध्वा इदानीं गर्विता भविष्यामि । हन्त, सिद्धं मे दौत्यम् । सखि एकस्य ते चरणस्यावशितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः । अथवा प्रवात एवायं प्रदेशः । ]

**राजा**—सखे पश्य पश्य ।

**आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन वीजयितुम् ।**
**प्रतिपन्नः प्रथमतरः सम्प्रति सेवावकाशो मे ॥ १३ ॥**

**विदूषकः**—कुदो दे अणुसओ । चिरं भवदा एदं कमेण अणुहोदव्वं । [ कुतस्तेऽनुशयः । चिरं भवतैतत्क्रमेणानुभवितव्यम् । ]

**बकुलावलिका**—सहि अरुणसदपत्तं विअ सोहदि दे चलणं । सव्वहा भट्टिणो अङ्कपरिवट्टिणी होहि । [ सखि अरुणशतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ।]

( इरावती निपुणिकामुखमवेक्षते । )

**राजा**—ममेयमाशीः ।

**मालविका**—हला अवअणीअं मन्तेसि । [ हला अवचनीयं मन्त्रयसे । ]

**बकुलावलिका**—मन्तिदव्वं एव्व मए मन्तिदं । [ मन्त्रयितव्यमेव मया मन्त्रितम् । ]

**मालविका**—पिआ खु अहं तुह । [ प्रिया खल्वहं तव । ]

**बकुलावलिका**—ण केवलं मह । [ न केवलं मम ]

**मालविका**—कस्स वा अण्णस्स । [ कस्य वान्यस्य । ]

**बकुलावलिका**—गुणेसु अहिणिवेसिणो भट्टिणो वि । [ गुणेष्वभिनिवेशिनो भर्तुरपि । ]

**मालविका**— अलिअं मन्तासि । एदं एव्व मइ णात्थि । [ अलीकं मन्त्रयसे । एतदेव मयि नास्ति । ]

**बकुलावलिका**—सच्चं तुइ णात्थि । भट्टिणो किसेसु सुन्दरपण्डुरेसु

Friend, I have finished laying the paint on one of your feet. Only it requires to be blown upon by the mouth; or rather there is a good breeze here.

King. Mark, my friend, mark.

Here is an admirable opportunity for me to wait upon her by blowing upon her foot with the breath of my mouth—her foot which has the paint still wet upon it. (13)

Vidūṣaka. Where is the occasion for regret? Soon you will be enjoying (this privilege) for a long time.

Bakulāvalikā. My friend, your foot looks as lovely as a red lotus. May you, by all means, sit in the king's lap.

*( Irāvati looks at Nipuṇikā's face. )*

King. To me it is a blessing.

Mālavikā. Well you are chattering absurdly.

Bakulāvalikā. I have said what I ought to say.

Mālavikā. Surely you love me.

Bakulāvalikā. Not only I but—

Mālavikā. Who else?

Bakulāvalikā. The king also who is attracted by good qualities.

Mālavikā. You don't speak the truth; for I haven't secured the king's love.

Bakulāvalikā. You haven't indeed! Only it is to

अङ्गेसु दीसइ । [ सत्यं त्वयि नास्ति । भर्तुः कृशेषु सुन्दरपाण्डुरेष्वङ्गेषु दृश्यते । ]

निपुणिका—पुढमगणिदं विअ हदासाए उत्तरं । [ प्रथमगणितमिव हताशाया उत्तरम् । ]

बकुलावलिका—अणुराओ अणुराएण परिक्खिदव्वोत्ति सुअणवअणं पमाणीकरेहि । [ अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवचनं प्रमाणीकुरु । )

मालविका—किं अत्तणो छन्देण मन्तेसि । [ किमात्मनश्छन्देन मन्त्रयसे । ]

बकुलावलिका—णहि णहि । भट्टिणो खु एदाइं पणअमउआइं विम्भन्तरिदाइं अक्खराइं । [ नहि नहि । भर्तुः खल्वेतानि प्रणयमृदुकानि विम्भान्तरितान्यक्षराणि । ]

मालविका—हला देविं चिन्तिअ ण मे हिअअं विस्ससदि । [ हला देवीं चिन्तयित्वा न मे हृदयं विश्वसिति ! ]

बकुलावलिका—मुद्धे भमरसम्बाधोत्ति वसन्तावदारसव्वस्सभूदो किं ण चूदपसवो ओदंसणिज्जो । [ मुग्धे भ्रमरसम्बाध इति वसन्तावतारसर्वस्वभूतः किं न चूतप्रसवोऽवतंसनीयः । ]

मालविका—तुमं दाव दुज्जादे मह अच्चन्तसहाइणी होहि । [ त्वं तावद् दुर्जाते ममात्यन्तसहायिनी भव । ]

बकुलावलिका—विमद्दसुरही बउलावलिआ खु अहं । [ विमर्दसुरभिर्बकुलावलिका खल्वहम् । ]

राजा—साधु बकुलावलिके साधु ।

भावज्ञानानन्तरं प्रस्तुतेन
प्रत्याख्याने दत्तयुक्तोत्तरेण ।
वाक्येनेयं स्थापिता स्वे निदेशे
स्थाने प्राणाः कामिनां दूत्यधीनाः ॥ १४ ॥

be seen in the beautifully pale and thin limbs of the king.

Nipuṇikā. How the accursed wench gives her answers as if she had got them all up beforehand.

Bakulāvalikā. You must accept the words of the good people as authoritative : love is tested by love.

Mālavikā. How do you talk as suits your fancy ?

Bakulāvalikā. No, no ; these are but the words of the king echoed by me which are so sweet through love.

Mālavikā. Friend, my heart grows diffident as I think of the queen.

Bakulāvalikā. You simple girl, is the mango-shoot-spring's all in all not to be used as an ear-ornament because bees are clinging to it ?

Mālavikā. But, surely, you will help me greatly in my distress.

Bakulāvalikā. Well, am I not a Bakula garland which gives out fragrance when crushed ?

King. Good, Bakulāvalikā, good.

Surely she has held her to her purpose by her words which were spoken after ascertaining her feelings, and which effectively answered all her objections ; it is quite proper that the life of a lover is dependent on a love-messenger. (14)

इरावती—हञ्जे पेक्ख पेक्ख। कारिदा एत्थ एदस्सिं बउलाव-लिआए पदं मालविआ। [हञ्जे पश्य पश्य। कारितैवैतस्मिन् बकुलावलिकया पदं मालविका।]

निपुणिका—भट्टिणि णिव्विआरस्स वि ऊसुअदाजणओ उवदेसो। [भट्टिनि निर्विकारस्याप्युत्सुकताजनक उपदेशः।]

इरावती—ठाणे सङ्किदं मे हिअअं। गहिदत्था अणन्तरं चिन्तइस्सं। [स्थाने शङ्कितं मे हृदयम्। गृहीतार्थानन्तरं चिन्तयिष्यामि।]

बकुलावलिका—एसो दुदीओ वि समत्तपडिकम्मो दे चलणो। जाव दुवे वि सणेउरे करोमि। (नाट्येन नूपुरयुगलमामुच्य।) हला उट्ठेहि अणुचिट्ठ देवीए असोअविआसइत्तअं णिओअं। (उभे उत्तिष्ठतः।) [एष द्वितीयोऽपि समाप्तपरिकर्मा ते चरणः। यावद् द्वावपि सनूपुरौ करोमि। हला उत्तिष्ठ। अनुतिष्ठ देव्या अशोकविकासयितृकं नियोगम्।]

इरावती—सुदं देवीए णिओओत्ति दाणिं। [श्रुतं देव्या नियोग इतीदानीम्।]

बकुलावलिका—एसो उवारूढराओ उवभोअक्खमो पुरदो दे दीसइ। [एष उपारूढराग उपभोगक्षमः पुरतस्ते दृश्यते।]

मालविका (सहर्षम्)—किं भट्टा। [किं भर्ता।]

बकुलावलिका (सस्मितम्)—ण दाव भट्टा। एसो असोअसाहावलम्बी पल्लवगुच्छो। ओदंसेहि दाव णं। [न तावद्भर्ता। एषोऽशोकशाखावलम्बी पल्लवगुच्छः। अवतंसय तावदेनम्।]

विदूषकः—अवि सुदं भवदा। [अपि श्रुतं भवता।]

राजा—सखे पर्याप्तमेतावता कामिनाम्।

अनातुरोत्कण्ठितयोः प्रसिध्यता
समागमेनापि रतिर्न मां प्रति।
परस्परप्राप्तिनिराशयोर्वरं
शरीरनाशोऽपि समानुरागयोः॥ १५॥

Irāvatī. Mark, girl, mark. Already has she made Mālavikā aspire after him.

Nipuṇikā. Mistress, even a person free from passion would become restless by such teaching.

Irāvatī. I was rightly apprenhensive. After getting at the facts, I will think (what to do).

Bakulāvalikā. I have finished painting this your other foot also. So now I will put anklets on them. *(Acting loosening the pair of anklets)* Friend, rise, do the queen's bidding of causing the Aśoka to blossom. *(Both rise.)*

Irāvatī. So now we learn that it is the queen's bidding.

Bakulāvalikā. Here before you stands one flushed ( of increased redness, passion ) and fit to enjoy.

Mālavikā. (*With joy)* What ? The king ?

Bakulāvalikā. *( Smiling )* Not the king, but a spray of leaves on a bough of the Aśoka. Make an ear-ornament of it.

Vidūṣaka. Did your highness hear ?

King. Friend, this much is enough for lovers.

For to me there is no pleasure in the union of lovers one of whom is ardent and the other indifferent, although it may be successfully accomplished ; better it is that those whose love is equal pine away through despair of securing their union. ( 15 )

( मालविका रचितपल्लवावतंसा सलीलमशोकाय पादं प्रहिणोति । )

राजा—वयस्य पश्य ।

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।
उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥१६॥

मालविका—अवि णाम अम्हाणं संभावणा सफला हवे । [ अपि नाम आवयोः सम्भावना सफला भवेत् । ]

बकुलावलिका—हला णत्थि दे दोसो णिग्गुणो अअं असोओ जइ कुसुमुब्भेदमन्थरो भवे जो ईरिसं चरणसक्कारं लहइ । [ हला नास्ति ते दोषः निर्गुणोऽयमशोकः यदि कुसुमोद्भेदमन्थरो भवेद् ईदृशं चरणसत्कारं लभते । ]

राजा—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन सम्भावितः ।
अशोक यदि सद्य एव कुसुमैर्न सम्पत्स्यसे
वृथा वहसि दोहदं ललितकामिसाधारणम् ॥ १७ ॥

सखे वचनावसरपूर्वं प्रवेष्टुमिच्छामि ।

विदूषकः—एहि णं परिहासइस्सं । [ एह्येनां परिहासयिष्यामि । ]

( उभौ प्रवेशं कुरुतः । )

निपुणिका—भट्टिणि भट्टा एत्थ एव्व पविसदि । [ भट्टिनि भर्ता अत्रैव प्रविशति । ]

इरावती—इदं मह पुढमं चिन्तिदं हिअएण । [ इदं मम प्रथमं चिन्तितं हृदयेन । ]

विदूषकः ( उपसृत्य )—होदि जुत्तं णाम अत्तहोदो पिअवअस्सो असोओ अअं वामपादेण ताडिदुं । [ भवति युक्तं नामात्रभवतः प्रियवयस्योऽशोकोऽयं वामपादेन ताडयितुम् । ]

उभे ( ससम्भ्रमम् )—अम्मो भट्टा । [ अम्मो भर्ता । ]

*(Mālavikā after arranging the tender leaves into an ear-ornament gracefully raises her foot towards the Aśoka.)*

King. Friend, see.

Having taken a sprig for the ear of this (Aśoka) she is presenting to it her foot. By this mutual exchange of similar gifts I feel that I have been deluded. (16)

Mālavikā. Will this honour rendered by us to the Aśoka bear fruit?

Bakulāvalikā. Friend, it won't be your fault; for if after receiving this honour from your foot, the Aśoka is tardy in blossoming out, it would be devoid of any good qualities.

King. Honoured with her foot delicate as a fresh lotus and loud-tinkling with the jingling anklets by this slender-waisted one, O Aśoka, if you are not immediately covered with blossoms, then in vain do you cherish the delicate longing which is also cherished by sportive lovers. (17)

Friend, I desire to show myself when an opportunity for interposing a remark presents itself.

Vidūṣaka. Come I will make fun of her. (*Both enter.*)

Nipuṇikā. Mistress, here comes the king on the scene.

Irāvatī. This was what my heart had already anticipated.

Vidūṣaka. (*Approaching*) Lady, is it proper to strike with the foot this Aśoka, the dear friend of the king?

Both. (*confusedly*) O, the king!

विदूषकः—वउलावलिए तुए गहिदत्थाए ईरिसं अविणअं करेन्ती किं सही ण णिवारिदा। [ बकुलावलिके त्वया गृहीतार्थया ईदृशमविनयं कुर्वती किं सखी न निवारिता। ]

( मालविका भयं रूपयति। )

निपुणिका—भट्टिणि पेक्ख किं पवुत्तं अज्जगोदमेण। [ भट्टिनि पश्य किं प्रवृत्तमार्यगौतमेन। ]

इरावती—कहं बम्हबन्धू अण्णहा जीविस्सदि। [ कथं ब्रह्मबन्धुरन्यथा जीविष्यति। ]

बकुलावलिका—अज्ज एसा देवीए णिओअं अणुचिट्ठदि एदस्सिं अदिक्कमे परवदी इअं। पसीददु भट्टा। [ आर्य एषा देव्या नियोगमनुतिष्ठति। एतस्मिन्नतिक्रमे परवतीयम्। प्रसीदतु भर्ता। ]

( आत्मना सममेनां प्रणिपातयति। )

राजा—यद्येवमनपराद्धासि। उत्तिष्ठ भद्रे। ( हस्तेन गृहीत्वोत्थापयति। )

विदूषकः—जुज्जइ। देवी एत्थ माणइदव्वा। [ युज्यते। देव्यत्र मानयितव्या। ]

राजा ( विहस्य )—

किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे।
चरणस्य न ते बाधा सम्प्रति वामस्य वामोरु॥ १८॥

( मालविका लज्जां नाटयति। )

इरावती ( सासूयम् )—अहो अविणीदहिअओ खु अज्जउत्तो। [ अहो अविनीतहृदयः खल्वार्यपुत्रः। ]

मालविका—बउलावलिए एहि। अणुट्ठिदं अत्तणो णिओअं देवीए णिवेदेम्ह। [ बकुलावलिके एहि। अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः। ]

बकुलावलिका—तेण हि विण्णवेहि भट्टारं विसज्जेहि त्ति। [ तेन हि विज्ञापय भर्तारं विसर्जयेति। ]

Vidūsaka. Bakulāvalikā, why did not you, who knew it, prevent this your friend from doing the immodest deed?

*(Mālavikā gesticulates fear.)*

Nipuṇikā. Mistress, see what the noble Gautama is about.

Irāvatī. How else could that accursed Brahmin find a living?

Bakulāvalikā. Sir, she is doing the queen's bidding; she cannot help this transgression. Let the king be compassionate. (*She makes Mālavikā bow along with herself.*)

King. If it is thus, you are innocent. Rise, good girl.

*(Takes her by the hand and raises her.)*

Vidūṣaka. That is proper; for the queen must be respected.

King. (*Smiling*)

Fair one, full of graces, I hope you have not
hurt your foot soft as a young shoot by placing
it on the hard stem of the tree, now. (18)

*(Mālavikā gesticulates bashfulness.)*

Irāvatī. (*Angrily*) How wanton in thought is my lord.

Mālavikā. Bakulāvalikā, come, let us go and report to the queen that we have done her bidding.

Bakulāvalikā. Well, then request the king to give you leave to depart.

राजा—भद्रे यास्यसि । मम तावदुपपन्नावसरमर्थित्वं श्रूयताम् ।

बकुलावलिका—अवहिदा सुणाहि । आणवेदु भट्टा । [ अवहिता शृणु । आज्ञापयतु भर्ता । ]

राजा—

धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति ।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ १९ ॥

इरावती ( सहसोपसृत्य )—पूरेहि पूरेहि । असोओ कुसुमं दंसेदि ण वा । अअं उण पुप्फइ फलइ अ । [ पूरय पूरय । अशोकः कुसुमं दर्शयति न वा । अयं पुनः पुष्यति फलति च । ]

( सर्वे इरावतीं दृष्ट्वा सम्भ्रान्ताः । )

राजा ( अपवार्य )—वयस्य का प्रतिपत्तिरत्र ।

विदूषकः—किं अण्णं । जङ्घाबलं एव्व । [ किमन्यत् । जङ्घाबलमेव । ]

इरावती—बउलावलिए साहु तुए उवक्कन्तं । मालविए तुमं दाव करेहि सफलपत्थणं अज्जउत्तं । [ बकुलावलिके साधु त्वयोपक्रान्तम् । मालविके त्वं तावत् कुरु सफलप्रार्थनमार्यपुत्रम् । ]

उभौ—पसीददु भट्टिणी । का अम्हे भट्टिणो पणअपरिग्गहस्स । [ प्रसीदतु भट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य । ]

( इति निष्क्रान्ते । )

इरावती—अहो अविस्ससणीआ पुरिसा । मए क्खु अत्तणो वञ्चणा वाहजणगीदिरत्ताए हरिणीए विअ असङ्किदाए ण विण्णादा । [ अहो अविश्वसनीयाः पुरुषाः । मया खल्वात्मनो वञ्चना व्याधजनगीतिरक्तया हरिण्येवाशङ्कितया न विज्ञाता । ]

विदूषकः ( जनान्तिकम् )—पडिवोजेहि किं वि दाणिं । किं अण्णं कम्मगहिदेण कुम्भीलएण सन्धिच्छेअणं सिक्खिदो म्हित्ति वत्तव्वं होइ । [ प्रतिबोधय किमपीदानीम् । किमन्यत् कर्मगृहीतेन कुम्भीलकेन सन्धिच्छेदनं शिक्षितोऽस्मीति वक्तव्यं भवति । ]

**King.** Fair one, you will go ( presently ). But listen to this request which is proper to the occasion.

**Bakulāvalikā.** Listen attentively. Let the king command.

**King.**

I too have not for a long time borne the flower of happiness; with the nectar of touch do you satisfy the longing of one who has relish left for nothing else now. ( 19 ).

**Irāvatī.** ( *Suddenly presenting herself* ) Satisfy, satisfy; the Aśoka may or may not bear blossoms; but this on the other hand not only flowers but also bears fruit.

( *All are confused at the sight of Irāvatī.* )

**King.** ( *Aside* ) Friend, what is the recourse now?

**Vidūṣaka.** What save taking to our heels?

**Irāvatī.** Bakulāvalikā, you have begun well! Mālavikā, do you fulfil my lord's longing.

**Both.** Be pleased, mistress. Who are we to receive such favours from the king? ( *Exeunt* )

**Irāvatī.** What traitors men are! But, guileless like a deer attracted by the hunter's song, I did not realise my deception.

**Vidūṣaka.** ( *Aside* ) Invent something now. What else: a burglar caught red-handed should say that he was but learning house-breaking.

राजा——सुन्दरि, न मे मालविकायां कश्चिदर्थः । मया त्वं चिरायसीति यथाकथंचिदात्मा विनोदितः ।

इरावती——विस्ससणीओ सि । मए ण विण्णादं ईरिसं विणोदवत्थुअं अज्जउत्तेण उवलद्धंति । अण्णहा मन्दभाइणीए एव्वं ण किज्जइ । [ विश्वसनीयोऽसि । मया न विज्ञातमीदृशं विनोदवस्तुकमार्यपुत्रेणोपलब्धमिति । अन्यथा मन्दभागिन्या एवं न क्रियते । ]

विदूषकः——मा दाव अत्तहोदी अत्तहोदो दक्खिण्णस्स उवरोहं भणादु । समावत्तिदिट्ठेण देवीए परिजणेण संकहा वि जइ अवराहो ठाविअदि एत्थ तुमं एव्व पमाणं । [ मा तावदत्रभवती अत्रभवतो दाक्षिण्यस्योपरोधं भणतु । समापत्तिदृष्टेन देव्याः परिजनेन सङ्कथापि यद्यपराधः स्थाप्यते अत्र त्वमेव प्रमाणम् । ]

इरावती——णं संकहा णाम होदु । किंति अत्ताणं आआसइस्सं । [ ननु संकथा नाम भवतु । किमित्यात्मानमायासयिष्ये । ]

[ रुष्टा प्रस्थिता । ]

राजा ( अनुसरन् )——प्रसीदतु भवती ।

[ इरावती रशनासन्दितचरणा व्रजत्येव । ]

राजा——सुन्दरि न शोभते प्रणयिजने निरपेक्षता ।

इरावती——सढ, अविस्ससणीअहिअओ सि । [शठ, अविश्वसनीयहृदयोऽसि । ]

राजा——

शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये ।
चरणपतितया न चण्डि तां
विसृजसि मेखलयापि याचिता ॥ २० ॥

इरावती——इअं वि हदासा तुमं एव्व अणुसरदि । [ इयमपि हताशा त्वामेवानुसरति । ]

King. Darling, I care not for Mālavikā. I was just amusing myself as you were late.

Irāvatī. You are to be relied upon. I did not know that my lord had secured such a means of amusement; otherwise luckless that I am, I would not have acted thus.

Vidūsaka. Let not my lady by her words repel his civilities. For if mere conversation with the queen's attendant met by chance is put down as an offence, then you should direct (what is proper and improper.)

Irāvatī. Be it mere conversation! Why should I worry myself? *(Starts to go in anger.)*

King. *(following)* Be pleased my lady—

*(Irāvatī moves, although her feet are entangled by the girdle.)*

King. Fair one, it is not good to be indifferent to a lover.

Irāvatī. Traitor, you are wholly unreliable.

King.

With the word, traitor, you may show your usual scorn of me; but why not give it up, Oh angry one, although besought by your girdle that has fallen at your feet? (20)

Irāvatī. How this accursed one also sides with you?

( इति रशनामादाय राजानं ताडयितुमिच्छति । )

राजा—वयस्य एषा हि

बाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादद्यपेक्षाच्युतेन ।
चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१ ॥

इरावती—किं मां भूओ वि अवरद्धं करेसि । [किं मां भूयोऽप्यपराद्धां करोषि । ] ( इति रशनां हस्तेनावलम्बते । )

राजा—

अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।
वर्धयसि विलसितं त्वं दासजनायात्र कुप्यसि च ॥ २२ ॥

( आत्मगतम् ) नूनमिदानीमननुज्ञातम् । ( इति पादयोः पतति । )

इरावती—ण क्खु इमे मालविआए चलणा जे दे फरिसदोहलं
३ पूरइस्संति । [ न खल्विमौ मालविकायाश्चरणौ यौ ते स्पर्शदोहदं पूरयिष्यतः । ] ( इति सचेटी निष्क्रान्ता । )

विदूषकः—उट्ठेहि । किदप्पसादो सि । [ उत्तिष्ठ । कृतप्रसा-
६ दोऽसि । ]

राजा ( उत्थाय इरावतीमपश्यन् । )—कथं गतैव प्रिया ।

विदूषकः—वयस्स देवेहिं इमस्स अविणअस्स अपसारिदा णिअंलणा ।
९ दाव सिग्घदरं अवक्कमाम जाव अङ्गारओ रासिं विअ सा अणुवक्कं ण करेइ । [ वयस्य देवैरस्याविनयस्यापसारिता नियन्त्रणा । ताव-
१२ च्छीघ्रतरमपक्रामावः यावदङ्गारको राशिमिव सा अनुवक्रं न करोति ।]

राजा—अहो मनसिजवैषम्यम् ।

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं प्रणयवती सा मयि शक्यमुपेक्षितुं कुपिता ॥ २३ ॥

( इति परिक्रम्य निष्क्रान्ताः सर्वे )

इति तृतीयोऽङ्कः ॥

*( Takes the girdle and desires to strike the king. )*

King. Friend,

This angry lady, shedding streams of tears, is ready to strike me cruelly, with the cord of her golden girdle slipped accidently from her ample hips, as the row of clouds, full of showers of water, strikes the Vindhya mountain with the streak of lightning. ( 21 )

Irāvatī. Why drive me to offend you a second time?

*(Catches hold of the girdle.)*

King. Why withdraw the scourge uplifted against my guilty self, O curly-haired one? While (thus) you add to your charms, you are still angry with your slave here. ( 22 )

(*To himself*) Surely I shall find favour now. (*Falls prostrate at her feet.)*

Irāvatī. Surely these are not Mālavikā's feet to fulfil your longing to be touched by them!

*( Withdraws along with her maid.)*

Vidūṣaka. Rise, you have found favour.

King. (*Rising and not seeing Irāvatī*) How, my darling is really gone?

Vidūṣaka. The gods have, indeed, removed the constraint in these your improper relations with Mālavikā. Let us speedily depart before she comes back again, like (angry) Mars retrogressing to his mansion in the Zodiac.

King. How perverse is love!

With the mind attracted by the loved one, I consider it a favour that she has slighted my prostration. Yet I should not neglect her, although she is so very angry with me, as she is so much attached to me. ( 23 )

*(All walk about and exeunt.)*

**Here ends the third Act.**

# चतुर्थोऽङ्कः ।

( ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च । )

राजा (आत्मगतम् ।)—

तामाश्रित्य श्रुतिपथगतामास्थया लब्धमूलः
सम्प्राप्तायां नयनविषयं रूढरागप्रवालः ।
हस्तस्पर्शैर्मुकुलित इव व्यक्तरोमोद्गमत्वात्
कुर्यात्क्लान्तं मनसिजतरुर्मां रसज्ञं फलस्य ॥ १ ॥

( प्रकाशम् ) सखे गौतम ।

प्रतीहारी — जेदु भट्टा । असण्णिहिदो गोदमो । [ जयतु भर्ता । असन्निहितो गौतमः ।]

राजा ( आत्मगतम् )—आः, मालविकावृत्तान्तज्ञानाय प्रेषितः ।

विदूषकः—( प्रविश्य ) जेदु भवं । [ जयतु भवान् । ]

राजा—जयसेने जानीहि तावत् क्व देवी धारिणी कथं वा सरुजचरणत्वाद्दिनोपत इति ।

प्रतीहारी—जं देवो आणवेदि । [ यद्देव आज्ञापयति । ] ( इति निष्क्रान्ता । )

राजा—गौतम को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ।

विदूषकः—जो बिडालगहिदाए परहुदिआए । [यो बिडालगृहीतायाः परभृतिकायाः । ]

राजा ( सविषादम् )—कथमिव ।

विदूषकः—सा खु तवस्सिणी ताए पिङ्गलच्छीए सारभण्डभूमिगेहे मिच्चुमुहे विअ णिक्खित्ता । [ सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूमिगृहे मृत्युमुख इव निक्षिप्ता । ]

राजा—ननु मत्सम्पर्कमुपलभ्य ।

## ACT IV.

*( Enter king in a love-sick state and a door-keeper. )*

King. ( *To himself* )

The tree of love which had for its object the lady about whom I had heard, struck its root when I felt interested in her; and when I saw her it put forth the shoot of passion; when I touched her hands it blossomed as my hair stood visibly erect through delight; may that same tree of love make me, weary that I am, taste the flavour of its fruit. (1).

( *Aloud* ) Friend Gautama!

The door-keeper. Victory to the king! Gautama is not here.

King. ( *To himself* ) Ha! He has been sent to get news about Mālavikā.

( *Entering* )

Vidūsaka. Victory to your honour!

King. Jayasenā, go and just ascertain where queen Dhāriṇī is, and how does she beguile herself, now that she has pain in her feet.

Door-keeper. As the king commands. ( *Exit* ).

King. Gautama, how is the lady—your friend?

Vidūṣaka. Very much like a cuckoo seized by a cat.

King. *(despondently)* How is that?

Vidūṣaka. The poor lady has been flung into the cellar where all precious things are stored up, as if into the jaws of death by that fiery-eyed one.

King. Was it because of her meeting me?

विदूषकः—अह इं। [ अथ किम्। ]

राजा—गौतम क एवं विमुखोऽस्माकं येन चण्डीकृता देवी।

विदूषकः—सुणादु भवं। परिव्वाजिआ मे कहेदि। हिओ किल तत्तहोदी इरावदी रुजाविहत्थचलणं देविं सुहपुच्छिआ आअदा। [ श्रृणोतु भवान्। परिव्राजिका मे कथयति। ह्यः किल तत्रभवती इरावती रुजाविहस्तचरणां देवीं सुखपृच्छिका आगता। ]

राजा—ततस्ततः।

विदूषकः—तदो देवीए सा पुच्छिदा किं उण लक्खिदो वल्लहजणोत्ति। तदो ताए उत्तं कुदो वा दे उवआरो। जं दे परिअणस्स वल्लहत्तणं जाणन्ती वि पुच्छसित्ति। [ ततो देव्या सा पृष्टा किं पुनर्लक्षितो वल्लभजन इति। ततस्तयोक्तं कुतो वा ते उपचारः। यत्तव परिजनस्य वल्लभत्वं जानत्यपि पृच्छसीति। ]

राजा—निर्भेदादृतेऽपि मालविकायामयमुपन्यासः शङ्कयति। ततस्ततः।

विदूषकः—तदो ताए अणुबन्धिज्जमाणाए भवदो अविणअं अन्तरेण परिग्गाहिदत्था किदा देवी। [ततस्तयानुबध्यमानया भवतोऽविनयमन्तरेण परिगृहीतार्था कृता देवी। ]

राजा—अहो दीर्घरोषता तत्रभवत्याः। अतः परं कथय।

विदूषकः—किं अदो वरं। मालविआ बउलावलिआ अ णिअलवदीओ अदिट्ठसुज्जपादं पादालवासं णाअकण्णआ विअ अणुहोन्ति। [ किमतःपरम्। मालविका वकुलावलिका च निगलवत्यावदृष्टसूर्यपादं पातालवासं नागकन्यके इवानुभवतः। ]

राजा—कष्टं कष्टम्।

मधुररवा परभृतिका भ्रमरी च विबुद्धचूतसङ्गिन्यौ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते॥ २॥

वयस्य, अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात्।

Vidūṣaka. Exactly.

King. Gautama, who indeed hates me so that he makes the queen angry with me?

Vidūṣaka. Listen, sir! The Parivrājikā tells me as a fact that yesterday the lady Irāvatī came to inquire after the health of the queen, whose feet are disabled with pain.

King. What then?

Vidūsaka. Then the queen asked her "Have you seen the loved person lately?", whereupon she replied; "why this formality when knowing as you do the way he loves (me) your servant, you ask such a question?"

King. This mode of speech must have made the queen suspect Mālavikā even when it is so vague.

Vidūsaka. And when the queen importuned her, she informed the queen of your misdemeanour.

King. How unforgiving is that Lady! Tell me what happened next?

Vidūṣaka. What happened next! Mālavikā and Bakulāvalikā are now in fetters, and are now enjoying residence in the underworld where not a ray of the sun penetrates, like two snake-maidens.

King. Alas! alas!

The sweet-voiced cuckoo and the bee clinging
to the opened mango-blossom have been driven
to seek a hollow by an unseasonable shower
preceded by a strong gale (2).

My friend, can there be an opening here for any stratagem?

विदूषकः—कहं भविस्सदि । जं सारभण्डे वावुदा माहविआ देवीए सन्दिट्ठा । मह अङ्गुलीअअमुद्दं अदेक्खिअ ण मोत्तव्वा तुए इअं हदासा मालविआ बउलावलिआ अ त्ति । [कथं भविष्यति । यत्सारभाण्डे व्यापृता माधविका देव्या सन्दिष्टा । ममाङ्गुलीयकमुद्रामदृष्ट्वा न मोक्तव्या त्वयेयं हताशा मालविका बकुलावलिका चेति । ]

राजा (निश्वस्य सपरामर्शम् ।)—सखे किमत्र कर्तव्यम् ।

विदूषकः ( विचिन्त्य )—अत्थि एत्थ उवाओ । [ अस्त्यत्रोपायः ।]

राजा—क इव ।

विदूषकः ( सदृष्टिक्षेपम् )—को वि अदिट्ठो सुणादि । कण्णे दे कहेमि । ( उपश्लिष्य कर्णे । ) एव्वं विअ । [ कोऽप्यदृष्टः शृणोति । कर्णे ते कथयामि । एवमिव ।]

राजा—साधु प्रयुज्यतां सिद्धये ।

प्रतीहारी—( प्रविश्य ) देव पवादसअणे देवी णिसण्णा रत्तचन्दणधारिणा परिअणहत्थगदेण चलणेण भअवदीए कहाहिं विणोदीअमाणा चिट्ठदि । [ देव प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति । ]

राजा —अस्मत्प्रवेशयोग्योऽयमवसरः ।

विदूषकः—ता गच्छदु भवं । अहं वि देविं पेक्खिदुं अरित्तपाणी भविस्सं । [ तस्मात् गच्छतु भवान् । अहमपि देवीं प्रेक्षितुमरिक्तपाणिर्भविष्यामि । ]

राजा—जयसेनायास्तावत्संवेद्य गच्छ ।

विदूषकः—तह । (कर्णे) भोदि एव्वं विअ । ( इति निष्क्रान्तः ।) [ तथा । भवति एवमिव । ]

राजा—जयसेने तेन हि प्रवातशयनमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो । [ इत इतो देवः । ]

( ततः प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः । )

Vidūsaka. How can there be? For the queen has commanded Mādhavikā in charge of the treasure-house: you will not set free Mālavikā and Bakulāvalikā unless you see the seal of my ring.

King. *(Sighing and musing.)* Friend, what shall we do in the matter?

Vidūsaka. *(Reflecting.)* Yes, there is a remedy for this.

King. What is it?

Vidūsaka. *( Glancing around .)* Somebody might overhear; so I will whisper it in your ear. *(Draws near and whispers in his ear.)* It is thus.

King. Excellent! Put it in execution and may it succeed.

*(Entering)*

A door-keeper. King, the queen is reclining on a couch in a breezy place, her foot smeared with the red sandal resting in the hand of her attendant; and she is being regaled with stories by the reverend lady.

King. This is a proper occasion for me to enter.

Vidūsaka. Well, then, you go. I too will provide myself with some present and see the queen.

King. Speak to Jayasenā and then go.

Vidūsaka. All right. ( *Whispers in her ear* .) Lady, it is thus.

( *Exit* )

King. Jayasenā, lead the way to where the queen reclines on a couch in the open air.

Door-keeper. This way, this way, king.

*(Then enter the queen reclining on a bed, the Parivrājikā and the attendants at a respectful distance.)*

देवी—भअवदि अदिरमणीअं कहावत्थु । तदो तदो । [ भगवति अतिरमणीयं कथावस्तु । ततस्ततः । ]

परिव्राजिका ( सदृष्टिक्षेपम् )—अतः परं पुनः कथयिष्यामि । तत्रभवानीश्वरः सम्प्राप्तः ।

देवी—अम्मो भट्टा । ( अभ्युत्थातुमिच्छति । ) [ अम्मो भर्ता । ]

राजा—अलमलमुपचारयन्त्रणया ।

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बम् ।
चरणं रुजापरीतं कलभाषिणि मां च पीडयितुम् ॥ २ ॥

देवी—जेदु अज्जउत्तो । [ जयत्वार्यपुत्रः । ]

परिव्राजिका—विजयतां देवः ।

राजा (परिव्राजिकां प्रणम्योपविश्य ।) देवि अपि सह्या ते वेदना ।

देवी—अत्थि मे विसेसो । [ अस्ति मे विशेषः । ]

( ततः प्रविशति यज्ञोपवीतबद्धाङ्गुष्ठः सम्भ्रान्तो विदूषकः । )

विदूषकः—परित्ताअदु परित्ताअदु । सप्पेण मिच्चुणा दट्ठोम्हि । [ परित्रायतां परित्रायताम् । सर्पेण मृत्युना दष्टोऽस्मि । ]

( सर्वे विषण्णाः । )

राजा—कष्टं कष्टम् । क भवान् परिभ्रान्तः ।

विदूषकः—देविं पेक्खिस्सं ति आआरपुप्फग्गहणकालणादो पमदवणं गदोम्हि । [ देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं गतोऽस्मि । ]

देवी—हद्धि हद्धि । णं अहं एव्व बम्हणस्स जीविअसंसअणिमित्तं जादा । [ हा धिक् हा धिक् । नन्वहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जाता । ]

विदूषकः—तहिं असोअत्थवअस्स कालणादो पसारिदे मे हत्थे कोडरणिग्गदेण सप्परूवेण कालेण दट्ठोम्हि । णं एदाइं दुवे दन्तपदाइं । [ तत्राशोकस्तबककारणात्प्रसारिते मे हस्ते कोटर-

Queen. Revered lady, the plot of the story is so interesting. What next?

Parivrājikā. (*Looking about her*) I shall tell you further on some other occasion. Here comes the king.

Queen. Ah! my lord! (*Desires to rise.*)

King. Do not worry yourself with the distressing formality.

Sweet-voiced one, it is not proper to trouble your aching foot, unused to the severance from anklets, and resting on the golden foot-stool, and cause me much pain. (3)

Queen. Victory to my noble lord!

Parivrājikā. Victory attend the king!

King. (*Bowing to the Parivrājikā and taking his seat*) My queen, I hope you find the pain bearable?

Queen. I feel better now.

( *Then Enter Vidūṣaka in a hurry, his thumb tied up by the sacred thread.* )

Vidūsaka. Help, help! I am bitten by death in the form of a serpent.

( *All are distressed.*)

King. Alas! alas! where were you wandering?

Vidūṣaka. As I wanted to see the queen, I went to the Pramadavana garden to collect flowers for the customary offering.

Queen. O fie! fie! That I should have been the cause of putting his life in danger!

Vidūṣaka. As I stretched forth my hand to get at the cluster of Aśoka flowers, I was bitten by death in

निर्गतेन सर्परूपिणा कालेन दष्टोऽस्मि । नन्वेते द्वे दन्तपदे । ] ( इति दर्शयति । )

परिव्राजिका—तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते । स तावदस्य क्रियताम् ।

छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम् ।
एतानि दष्टमात्राणामायुषः प्रतिपत्तयः ॥ ४ ॥

राजा—सम्प्रति विषवैद्यानां कर्म । जयसेने क्षिप्रमाहूयतां ध्रुवसिद्धिः ।

प्रतीहारी—जं देवो आणवेदि । [ यद्देव आज्ञापयति । ] ( इति निष्क्रान्ता । )

विदूषकः—अहो पावेण मिच्चुणा गहीदोम्हि । [ अहो पापेन मृत्युना गृहीतोऽस्मि । ]

राजा—मा कातरो भूः । अविषोऽपि कदाचिद्दंशो भवेत् ।

विदूषकः—कहं ण भाइस्सं । सिमसिमाअन्ति मे अङ्गाइं । [ कथं न भेष्यामि । सिमसिमायन्ति मे अङ्गानि । ] ( इति विषवेगं रूपयति । )

देवी—ही ही असुहं दंसिदं विआरेण । हला अवलम्बह णं । [ ही ही अशुभं दर्शितं विकारेण । हला अवलम्बध्वमेनम् । ]

( परिजनःससम्भ्रममवलम्बते । )

विदूषकः ( राजानमवलोक्य । ) —भो भवदो बालवअस्सोम्हि । ता अविआरेण वुद्धाए मे जणणीए जोअक्खेमं वहेहि । [ भो भवतो बालवयस्योऽस्मि । तदविचारेण वृद्धाया मे जनन्या योगक्षेमं वह । ]

राजा—मा भैषीः । अचिरात्त्वां विषवैद्यश्चिकित्सते । स्थिरो भव ।

जयसेना—( प्रविश्य ) देव धुवसिद्धी विण्णवेदि । इह एव्व आणीअदु गोदमोत्ति । [ देव ध्रुवसिद्धिर्विज्ञापयति । इहैवानीयतां गौतम इति । ]

the form of a serpent issuing out of its hollow—why, here are the two marks of its fangs. ( *Shows them.* )

Parivrājikā. Then, indeed, they say that the first thing to be done, is the excision of the bitten part. Let that be done to him.

Excision of the bitten part, or the burning of it, or letting off blood from the wound, these are the remedies to save the lives of persons just when they are bitten. (4)

King. Now it is the work of a doctor who specialises in the treatment of poison. Jayasenā, quickly fetch Dhruvasiddhi.

Door-keeper. As my lord commands. ( *Exit* )

Vidūsaka. Ah! How accursed death has seized me!

King. Don't lose heart. May be, the bite is without poison.

Vidūsaka. How can I help being afraid? How all my limbs are tingling with pain! ( *Gesticulates the working of poison.* )

Queen. Alas! alas! the bite shows itself to be fatal. Help him, ho!

( *The attendants hurriedly support him.* )

Vidūsaka. ( *Looking at the king* ) I have been your friend since childhood. You will therefore have no hesitation in looking after the welfare of my old mother.

King. Do not be afraid. The poison-doctor will speedily cure you. Be composed.

( *Entering* )

Jayasenā. Your majesty, Dhruvasiddhi requests that Gautama should be removed to his place.

राजा—तेन हि वर्षवरपरिगृहीतमेनं तत्रभवतः सकाशं प्रापय ।

जयसेना—तह । [तथा ।]

विदूषकः (देवीं विलोक्य)—भोदि जीवेअं वा ण वा । जं मए अत्तभवन्तं सेवन्तेण दे अवरद्धं तं मरिसेहि । [ भवति जीवेयं वा न वा । यन्मया अत्रभवन्तं सेवमानेन तेऽपराद्धं तन्मर्षय । ]

देवी—दीहाऊ होहि । [ दीर्घायुर्भव । ]

( निष्क्रान्तो विदूषकः प्रतीहारी च । )

राजा—प्रकृतिभीरुस्तपस्वी । ध्रुवसिद्धेरपि यथार्थनाम्नः सिद्धिं मन्ये ।

जयसेना—( प्रविश्य ) जेदु भट्टा । धुवसिद्धी विण्णवेदि । उअकुम्भविहाणे सप्पमुद्दिअं किं वि कप्पइदव्वं । ता अण्णेसीअदु त्ति । [जयतु भर्ता । ध्रुवसिद्धिर्विज्ञापयति । उदकुम्भविधाने सर्पमुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति । ]

देवी—इदं सप्पमुद्दिअं अंगुलीअअं । पच्छा मह एव्व हत्थे देहि णं । [ इदं सर्पमुद्रितमङ्गुलीयकम् । पश्चान्ममैव हस्ते देह्येतत् । ]

( इति प्रयच्छति । जयसेना नाट्येन गृह्णाति । )

राजा—जयसेने कर्मसिद्धावाशु प्रतिपत्तिमानय ।

जयसेना—जं देवो आणवेदि । [ यद्देव आज्ञापयति । ] ( इति निष्क्रान्ता । )

परिव्राजिका—देव यथा मे हृदयमाचष्टे तथा निर्विषो गौतमः ।

राजा—भूयादेवम् ।

जयसेना—( प्रविश्य ) देव णिउत्तविसवेओ अज्जगोदमो मुहुत्तेण पइदित्थो संवुत्तो । [ देव निवृत्तविषवेग आर्यगौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः । ]

देवी—दिट्ठिआ वअणीआदो मुत्तम्हि । [ दिष्टया वचनीयान्मुक्तास्मि । ]

King. Well, then, take him into his presence borne by the eunuchs of the harem.

Jayasenā. As your majesty orders.

Vidūsaka. (*Looking at the queen*) Queen, I may or may not live; I beg (therefore) to be forgiven whatever offence I may have given you while serving the king.

Queen. May you live on to a good old age.

(*Exeunt Vidūṣaka and door-keeper.*)

King. The poor fellow is nervous by nature. I hope Dhruvasiddhi-rightly named the infallible one-will succeed.

( *Entering* )

Jayasenā. Victory to the king! Dhruvasiddhi requests that something bearing a serpent-seal should be found out for putting on the water-pitcher. Do, therefore, make a search.

Queen. Here is a ring with a serpent-seal. Later on give it back to me only. (*Offers it, Jayasenā makes as if she takes it.*)

King. Jayasenā, quickly bring word that success has been attained.

Jayasenā. As the king commands. ( *Exit* )

Parivrājikā. King, as my heart tells me, Gautama is cured of poison.

King. I hope so.

(*Entering*) Jayasenā—My lord, cured of the effect of poison, the noble Gautama after a while became quite his usual self.

Queen. Happily I am free from blame.

जयसेना—एसो उण अमच्चो वाहदओ विण्णवेदि। राअकज्जं ४८बहु मन्तिदव्वं। ता दंसणेण अणुग्गहं इच्छामित्ति। [ एष पुनरमात्यो वाहतको विज्ञापयति। राजकार्यं बहु मन्त्रयितव्यम्। तद्दर्शनेनानुग्रहमिच्छामीति। ]

५१देवी—गच्छदु अज्जउत्तो कज्जसिद्धीए। [ गच्छत्वार्यपुत्रः कार्यसिद्धये। ]

राजा ( उत्थाय )—देवि आतपाक्रान्तोऽयमुद्देशः। शीतक्रिया ५४चास्य प्रशस्ता। तदन्यत्र नीयतां शयनीयम्।

देवी—बालिआ अज्जउत्तवअणं अणुचिट्ठह। [ बालिकाः आर्यपुत्रवचनमनुतिष्ठत। ]

५७परिजनः—तह। [ तथा ]

( इति निष्क्रान्ता देवी परिव्राजिका परिजनश्च। )

राजा—जयसेने गूढपथेन मां प्रमदवनं प्रापय।

६०जयसेना—इदो इदो देवो। [ इत इतो देवः। ]

राजा ( परिक्रम्य )—जयसेने ननु समाप्तकृत्यो गौतमः।

जयसेना—अह इं। [ अथ किम्। ]

६३राजा—

इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाधुमपि मत्वा।
सन्दिग्धमेव सिद्धौ कातरमाशङ्कते चेतः॥ ५॥

विदूषकः—( प्रविश्य ) जेदु भवं। सिद्धाइं मे सव्वमङ्गलकम्माइं। [ जयतु भवान्। सिद्धानि मे सर्वमङ्गलकर्माणि। ]

३राजा—जयसेने त्वमपि नियोगमशून्यं कुरु।

जयसेना—जं देवो आणवेदि। [ यद्देव आज्ञापयति ]

( इति निष्क्रान्ता। )

६राजा—वयस्य क्षुद्रा माधविका। न खलु किंचिद्विचारितमनया।

Jayasenā. The minister Vāhataka now requests : I have to discuss a good many affairs of the state, and so I seek to be favoured with an audience.

Queen. May my lord leave and attain success in his undertakings.

King. *(Rising)* My queen, this place is exposed to the sun, while this requires a cooling remedy; so let the bed be removed to a different place.

Queen. Girls, carry out the command of my lord.

Servants. As you bid.

*( Exeunt queen, Parivrājikā and retinue. )*

King. Jayasenā, take me to the Pramadavana by the secret way.

Jayasena. This way, this way, king.

King. (*moving about*) Jayasenā I hope Gautama has finished his work.

Jayasenā. Just so.

King. Although I think the devise to be decisively the best for the accomplishment of my purpose, yet my timid heart feels dubious about its attainment. (5)

*( Entering )*

Vidūsaka. Victory to your highness. Success attends all our auspicious undertakings.

King. Jayasenā, you too attend to your duty.

Jayasenā. As the king commands.

*( Exit )*.

King. Friend, Mādhavikā is such a dullard; did not she hesitate a bit?

विदूषकः—देवीए अंगुलीअअमुद्दिअं पेक्खिअ कहं विआरेदि ।
[ देव्या अङ्गुलीयकमुद्रिकां दृष्ट्वा कथं विचारयति ।]

राजा—न खलु मुद्रामधिकृत्य ब्रवीमि । तयोर्बद्धयोः किंनिमित्तोऽयं मोक्षः । किं वा देव्या परिजनमतिक्रम्य भवान्सन्दिष्टः । इत्येवमनया प्रष्टव्यम् ।

विदूषकः—णं पुच्छिदोम्हि । पच्चुप्पण्णबुद्धिणा मए कहिदम् ।
[ ननु पृष्टोऽस्मि । प्रत्युत्पन्नबुद्धिना मया कथितम् । ]

राजा—कथ्यताम् ।

विदूषकः—भणिदं मए । देव्वचिन्तएहिं विण्णाविदो राआ । सोवसग्गं वो णक्खत्तं । सव्वबन्धमोक्खो करीअदुत्ति । [ भणितं मया । दैवचिन्तकैर्विज्ञापितो राजा । सोपसर्गं वो नक्षत्रम् । सर्वबन्धमोक्षः क्रियतामिति । ]

राजा ( सहर्षम् ) —ततस्ततः ।

विदूषकः—तं सुणिअ देवीए इरावदीए चित्तं रक्खन्तीए राआ किल मोएदित्ति तुमं एव्व णं मोएहित्ति अहं सन्दिट्ठोम्हित्ति । तदो जुज्जइत्ति ताए सम्पादिदो अत्थो । [ तच्छ्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या राजा किल मोचयतीति त्वमेवैनां मोचयेत्यहं सन्दिष्टोऽस्मि इति । ततो युज्यत इति तया सम्पादितोऽर्थः । ]

राजा ( विदूषकं परिष्वज्य )—सखे प्रियोऽहं तव ।

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ ६ ॥

विदूषकः—तुवरदु भवं । समुद्दघरए पिअसहीसहिअं मालविअं ठाविअ भवन्तं पच्चुग्गदोम्हि । [ त्वरतां भवान् । समुद्रगृहके प्रियसखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि । ]

राजा—अहमेनां सम्भावयामि । गच्छाग्रतः ।

Vidūṣaka. How could she hesitate at sight of the Queen's ring ?

King. I do not talk of the ring. But she should certainly have asked as to why these prisoners were to be liberated; and why to the exclusion of all her attendants, the queen commissioned you to bring the message.

Vidūsaka. Indeed, she asked me; and I immediately with a ready wit told her.

King. Tell me.

Vidūsaka. I said—the astrologers told the king that the constellation presiding over the king's fortunes was possessed of a malignant influence. Therefore let all prisoners be set free.

King. What then ?

Vidūsaka. On hearing that, the queen with a view to spare the feelings of Irāvatī ordered me to release them and give out that the king wanted them set at liberty; she granted my request, saying that it was quite all right.

King. *( Embracing the Vidūṣaka )* Friend, you, indeed, love me.

> For not only by force of intellect does one see how to promote a friend's interest; love too points out the narrow path to success in one's undertaking. ( 6 )

Vidūsaka. Let your highness make haste. I have put Mālavikā and her dear friend in the Ocean-pavilion and have come to meet you.

King. Well, I will honour her. Do you go ahead.

विदूषकः—एदु भवं। (परिक्रम्य) एदं समुद्दघरअं। [एतु भवान्। इदं समुद्रगृहम्। ]

राजा (साशङ्कम्) —वयस्य एषा कुसुमापचयव्यग्रहस्ता सख्यास्ते इरावत्याः परिचारिका चन्द्रिका समागच्छति। इतस्तावदावां भित्तिनिगूढौ भवावः।

विदूषकः—अहो कुम्भीलएहिं कामुएहिं अ पलिहलणिज्जा खु चन्दिआ। [अहो कुम्भीलकैः कामुकैश्च परिहरणीया चन्द्रिका। ]

(उभौ यथोक्तं कुरुतः। )

राजा—गौतम कथं नु ते सखी मां प्रतिपालयति। एह्येनां गवाक्षमाश्रित्यावलोकयावः।

विदूषकः—तह। तथा। (इति विलोकयन्तौ स्थितौ। )

(ततः प्रविशति मालविका बकुलावलिका च। )

बकुलावलिका—हला पणम भट्टारं। [हला प्रणम भर्तारम्। ]

राजा—मन्ये प्रतिकृतिं मे दर्शयतीति।

मालविका (सहर्षम्) णमो दे (द्वारमवलोक्य सविषादम्) कहिं भट्टा। हला विप्पलम्भेसि मं। [नमस्ते। कुत्र भर्ता। हला। विप्रलम्भयसि माम्। ]

राजा—सखे हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि।

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे॥ ७॥

बकुलावलिका—णं एसो चित्तगदो भट्टा। [नन्वेष चित्रगतो भर्ता। ]

उभे (प्रणिपत्य) जेदु भट्टा। [जयतु भर्ता। ]

मालविका—हला तदा अहं सम्मुहट्ठिदा भट्टिणो रूवस्स तह ण वितिण्हम्हि जह अज्ज मए विभाविदो चित्तगदो भट्टा। [हला

Vidūsaka. Come, your highness. (*moving about*) Here is the Ocean-pavilion.

King. ( *Apprehensively* ) Friend, here comes Candrikā, the maid of your friend Irāvatī, her hands engaged in gathering flowers. Let us, therefore, hide ourselves behind this wall here.

Vidūsaka. Ah, thieves and lovers have to avoid the moon-light.

( *Both do what was said.* )

King. Gautama how must your friend be awaiting me? Come, let us watch her from the window.

Vidūṣaka. Well.

( *They stand looking in.* )

( *Enter Mālavikā and Bakulāvalikā.* )

Bakulāvalikā. Come, friend, salute the king.

King. I think she is showing her my likeness.

Mālavikā. (*With joy*) I salute you. (*Looking at the door, with disappointment*) Where is the king? Friend, you deceive me.

King. Friend I feel delighted at the lady's joy and disappointment both.

For in a moment the face of the lovely faced one has assumed the two appearances of the lotus—that which it wears at sun-rise and that other which it wears at sunset. (7)

Bakulāvalikā. Well, I say, here is the king in the picture.

Both (*Saluting*) Victory to the king!

Mālavikā. Friend, at that time when I stood face to face with the king, I was not so well satisfied with

तदाहं सम्मुखस्थिता भर्तू रूपस्य तथा न वितृष्णास्मि यथाद्य मया विभावितश्चित्रगतो भर्ता । ]

विदूषकः—सुदं भवदा । अत्तहोदीए जह दिट्ठो चित्ते ण तह दिट्ठो भवं ति मंतिदं । मुहा दाणिं मञ्जूसा विअ रअणभण्डं जोव्वणगव्वं वहेसि । [ श्रुतं भवता । अत्रभवत्या यथा दृष्टश्चित्रे न तथा दृष्टो भवानिति मन्त्रितम् । मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि । ]

राजा—सखे कुतूहलवानपि निसर्गशालीनः स्त्रीजनः । पश्य—

कात्स्न्र्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागतानाम् ।
न च प्रियेष्वायतलोचनानां
समग्रपातीनि विलोचनानि ॥ ८ ॥

मालविका—हला का एसा ईसिपरिवत्तिदवअणा भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाईअदि । [ हला कैषा ईषत्परिवर्तितवदना भर्त्रा स्निग्धया दृष्टया निध्यायते । ]

बकुलावलिका—णं इअं भट्टिणो पासगदा इरावदी । [ नन्वियं भर्तुः पार्श्वगतेरावती । ]

मालविका—हला भट्टा अदक्खिणो विअ पडिभादि । जो सव्वं देवीजणं उज्झिअ एक्काए मुहे बद्धलक्खो । [ हला भर्ता अदक्षिण इव प्रतिभाति । यः सर्वं देवीजनमुज्झित्वा एकस्या मुखे बद्धलक्ष्यः । ]

बकुलावलिका (आत्मगतम्)—चित्तगदं भट्टारं परमत्थं गेह्णिअ असूअदि इअं । होदु कीलिस्सं दाव एदाए । (प्रकाशम्) हला भट्टिणो वल्लहा एसा । [ चित्रगतं भर्तारं परमार्थं गृहीत्वाऽसूयतीयम् । भवतु क्रीडिष्यामि तावदेतया । हला भर्तुर्वल्लभैषा । ]

मालविका—तदो किं दाणिं अत्ताणं आआसेमि । [ ततः किमिदानीमात्मानमायासयामि । ] ( इति सासूयं परावर्तते । )

his beauty as at the present moment with looking at him in the picture.

Vidūṣaka. Has your honour heard? The lady says you did not look as you do here in the picture. Vainly do you bear the pride of youth as a casket a store of gems.

King. Friend, women, though filled with curiosity, are yet by nature so bashful. Observe,

they do desire to study completely the features
of those whom they meet for the first time and
yet the long-eyed ones will not allow their eyes
to fall full upon the beloved persons. (8)

Mālavikā. Friend, who is this with her slightly averted face whom the king is regarding with an affectimate gaze?

Bakulāvalikā. Surely this is Irāvatī at his side.

Mālavikā. Friend, the king seems to me to be somewhat rude, that he should neglect all his queens and fix his glance on her face alone.

Bakulāvalikā. (To *herself*) She takes the king's picture for the king himself and exhibits jealousy towards it. Well, then, let me chaff her a bit. (*Aloud*) friend, she is beloved of the king.

Mālavikā. If that be so, why should I trouble myself in vain? (*Turns away pettishly*).

१५ राजा—पश्य सख्या मुखम् ।

भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
साभ्यसूयमाननमितः परिवर्तयन्त्या ।
कान्तापराधकुपितेष्वनया विनेतुः
सन्दर्शितेव ललिताभिनयस्य शिक्षा ॥९॥

विदूषकः—अणुणअसज्जो दाणिं होहि । [ अनुनयसज्ज इदानीं भव । ]

३ मालविका—अज्जगोदमो वि एत्थ एव्व सेवदि णं । [ आर्यगौतमोऽप्यत्रैव सेवत एनम् । ] (पुनः स्थानान्तराभिमुखी भवितुमिच्छति)

बकुलावलिका—( मालविकां रुद्ध्वा )—ण खु कुविदा दाणिं तुमं । [ न खलु कुपितेदानीं त्वम् । ]

मालविका—जइ मं चिरं कुविदं मण्णासि एसो पच्चाणीअदि कोवो । [ यदि मां चिरं कुपितां मन्यसे एष प्रत्यानीयते कोपः । ]

९ राजा ( उपसृत्य )—

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेवमयि ।
ननु तव साक्षादयमहमनन्यसाधारणो दासः ॥ १० ॥

बकुलावलिका—जेदु भट्टा । [ जयतु भर्ता । ]

मालविका ( आत्मगतम् ) कहं चित्तगदो भट्टा मए असूइदो । [ कथं चित्रगतो भर्ता मयासूयितः । ] ( सव्रीडवदना अञ्जलिं करोति । राजा मदनकातर्यं रूपयति । )

विदूषकः—किं भवं उदासीणो विअ । [ किं भवानुदासीन इव । ]

६ राजा—अविश्वसनीयत्वात्सख्यास्ते ।

विदूषकः—मा दाव । अत्तहोदी तुह अविस्ससणीआ । [ मा तावत् । अत्रभवती तवाविश्वसनीया । ]

King. Observe the face of your friend.

As in anger she turned her face away from the (picture) so that the tilaka mark on the forehead was blurred, and the lower lip was made to quiver, she seemed to exhibit the graceful expression taught her by her teacher as being appropriate in the fits of anger caused by the faults of a lover. (9)

Vidūsaka. Prepare yourself now to propitiate her.

Mālavikā. And the noble Gautama too is waiting upon her in this place. (*She again desires to turn away in another direction.*)

Bakulāvalikā. (*Preventing Mālavikā*) Surely you are not angry now.

Mālavikā. If you desire me to be angry for long, here I recall my anger.

King. (*Advancing*)

Oh Lotus-eyed one, why should you be angry thus at an action represented in the picture? Do I not here stand in my own person, a slave devoted to you alone? (10)

Bakulāvalikā. Victory to the king!

Mālavikā. (*To herself*) What? Did I get angry with the king in the picture?

(*With an apologetic expression, she folds her hands together.*)

(*The king acts as if he is distracted with love.*)

Vidūsaka. Why do you appear to be so apathetic?

King. Because your friend is so unreliable.

Vidūsaka. How! Do you distrust the lady?

९ राजा—श्रूयताम्।

पथि नयनयोः स्थित्वा स्वप्ने तिरोभवति क्षणात्
सरति सहसा बाह्वोर्मध्यं गताप्यबला सती।
मनसिजरुजा क्लिष्टस्यैवं समागममायया
कथमिव सखे विस्रब्धं स्यादिमां प्रति मे मनः ॥११॥

बकुलावलिका—सहि बहुसो किल तुए विप्पलद्धो भट्टा। ता दाव अत्ता विस्ससणिज्जो करीअदु। [ सखि बहुशः किल त्वया
३ विप्रलब्धो भर्ता। तत्तावदात्मा विश्वसनीयः क्रियताम् ]

मालविका—सहि मम उण मन्दभाइणीए सिविणसमागमो वि भट्टिणो दुल्लहो आसि। [ सखि मम पुनर्मन्दभागिन्याः स्वप्नसमा-
६ गमोऽपि भर्तुर्दुर्लभ आसीत्। ]

बकुलावलिका—भट्टा देउ से उत्तरं। [ भर्तः दीयतामस्या उत्तरम्। ]

९राजा—

उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम्।
तव सख्यै मया दत्तो न सेव्यः सेविता रहः ॥ १२॥

बकुलावलिका—अणुग्गहिदम्हि। [ अनुगृहीतास्मि। ]

विदूषकः ( परिक्रम्य ससंभ्रमम्।)—बउलावलिए एसो बालासो-
३अरुक्खस्स पल्लवाइं हरिणो लङ्घिदुं आअच्छदि। एहि णिवारेम णं। [बकुलावलिके एष बालाशोकवृक्षस्य पल्लवानि हरिणो लङ्घयितुमागच्छति। एहि निवारयाव एनम्। ]

६बकुलावलिका—तह। [ तथा। ] ( इति प्रस्थिता। )

राजा—एवमस्मद्रक्षणे वयस्येनावहितेन भवितव्यम्।

विदूषकः—एदं वि गोदमो णं सन्दिस्सीअदि। [ एतदपि गौतमो
९ ननु सन्दिश्यते। ]

King. Listen: your friend appears before me and yet in a moment she vanishes from my sight; and though clasped between my arms, she suddenly slips away from them; how can my mind repose any trust in her while I am afflicted by the anguish of love caused by a delusive union? (I1)

Bakulāvalikā. Friend, often has the king been deceived; so now prove yourself to be a person worthy of trust.

Mālavikā. But, my friend, unluckly that I am, I find union with the king even in a dream so hard to obtain.

Bakulāvalikā. King, please now to give her answer.

King.

What is the use of making any answer? For in the very presence of the fire of love have I given myself over to your friend. I am not her master, but her servant in secret. (12)

Bakulāvalikā. I am beholden to you for this answer.

Vidūṣaka. ( *Walking round* ) Bakulāvalikā, here is a deer, cropping the shoots of the young Aśoka tree; let us drive it off.

Bakulāvalikā. Very well. ( *Starts off.* )

King. Friend, even thus must you be on the look-out at this moment when we deserve to be guarded.

Vidūṣaka. Does Gautama require to be instructed thus?

**बकुलावलिका**—अज्ज गोदमो अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि । [ आर्य गौतम अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव । ]

**विदूषकः**—जुज्जइ । [ युज्यते । ] ( निष्क्रान्ता बकुलावलिका । )

**विदूषकः** ( परिक्रम्यावलोक्य च ।)—इदं दाव फलिहत्थलं । आसीणो होमि । ( तथा कृत्वा । ) अहो सुहप्फरिसदा सिलाविसेसस्स । [ इदं तावत्स्फाटिकस्थलम् । आसीनो भवामि । अहो सुखस्पर्शता शिलाविशेषस्य । ] (निद्रायते)

( मालविका ससाध्वसा तिष्ठति । )

**राजा**—

विसृज सुन्दरि सङ्गमसाध्वसं
तव चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥ १३ ॥

**मालविका**—देवीए भएण अत्तणो वि पिअं कादु ण पारेमि । [ देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि । ]

**राजा**—अयि न भेतव्यं न भेतव्यम् ।

**मालविका**—जो ण भाएदि सो मए भट्टिणीदंसणे दिट्ठसमवत्थो भट्टा णं । [ यो न बिभेति स मया भट्टिनीदर्शने दृष्टसमवस्थो भर्ता ननु । ]

**राजा**—

दाक्षिण्यं नाम बिम्बोष्ठि बैम्बिकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ १४ ॥

तदयमनुगृह्यतां चिरानुरक्तो जनः । ( इति संश्लेषमभिनयति । मालविका नाट्येन परिहरति । )

**Bakulāvalikā.** *(Walking about)* Noble Gautama, I shall remain hidden from sight, and you will guard the entrance.

**Vidūṣaka.** That is quite proper. *( Exit Bakulāvalikā.)*

**Vidūṣaka.** In the meanwhile I shall lean against this crystal column. *(Doing as he says.)* How pleasant the feel of this delicious stone ! *(Falls asleep.)*

*( Mālavikā is overcome with fear. )*

**King.** Give up, Oh sweet one, this fear of union, and now that I, who have for long been devoted to you, have become like the Mango-tree, do you assume the part of the Atimukta creeper towards me. (13)

**Mālavikā.** For fear of the queen, I cannot do what even my heart approves.

**King.** Well, you need have no fear.

**Mālavikā.** I have witnessed the courage of the king, who is now so fearless, in the presence of the queen.

**King.** Politeness indeed, Oh Bimba-lipped one, is the family tradition of the descendants of Bimbaka ; nevertheless what life I possess depends entirely on the hope of thy favour. (14)

So favour me who am for long enamoured of thee. *(Goes close to her ; Mālavikā averts him.)*

३राजा ( आत्मगतम् )—रमणीयः खलु नवाङ्गनानां मदनविषयावतारः। एषा हि।

हस्तं कम्पवती रुणद्धि रशनाव्यापारलोलाङ्गुलिं
हस्तौ स्वौ नयति स्तनावरणतामालिङ्ग्यमाना बलात्।
पातुं पक्ष्मलचक्षुरुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ १५ ॥

( ततः प्रविशति इरावती निपुणिका च ।)

इरावती—हञ्जे निउणिए सच्चं तुए संदिट्ठं चन्दिआए समुद्दघरआलिन्दए अज्जगोदमो एआई दिट्ठोत्ति । [ हञ्जे निपुणिके सत्यं त्वया सन्दिष्टं चन्द्रिकया समुद्रगृहालिन्दे आर्यगौतम एकाकी दृष्ट इति । ]

निपुणिका—अण्णहा कहं भट्टिणीए विण्णएमि । [अन्यथा कथं भट्टिन्यै विज्ञापयामि । ]

इरावती—तेण हि तहिं एव्व गच्छम्ह । संसआदो मुत्तं भट्टिणो पिअवअस्सं पेक्खिदुं अ । [ तेन हि तत्रैव गच्छावः । संशयान्मुक्तं भर्तुः प्रियवयस्यं प्रेक्षितुं च । ]

निपुणिका—सविसेसं विअ भट्टिणीए वअणं । [ सविशेषमिव भट्टिन्या वचनम् । ]

इरावती—आम् । चित्तगदं भट्टारं पसादेदुं । [आम् । चित्रगतं भर्तारं प्रसादयितुम् । ]

निपुणिका—अह दाणिं भट्टा एव्व किं ण पच्चणुणीअदि । [ अथेदानीं भर्तैव किं न प्रत्यनुनीयते । ]

इरावती—मुद्धे जारिसो चित्तगदो भट्टा ण तारिसो एव्व । अण्णसङ्कन्तहिअओ अज्जउत्तो । केवलं उवआरादिक्कमं पमज्जिदुं अम्हाणं अअं आरम्भो । [मुग्धे यादृशश्चित्रगतो भर्ता न तादृश एव । अन्यसङ्क्रान्तहृदय आर्यपुत्रः । केवलमुपचारातिक्रमं प्रमार्ष्टुमस्माकमयमारम्भः । ]

King. (*To himself*) How sweet the stepping of young women into the province of love; for

she moves about her hand, and stops my fingers as they move about the girdle; she covers her breasts with her hands as perforce I embrace her; she turns aside her face with its eyes possessed of long eyelashes, as I try to raise it that I may sip it; thus does she grant me the happiness of enjoying the fulfilment of my desire even under a pretext. (15)

*( Then enter Irāvatī and Nipuṇikā. )*

Irāvatī. Nipuṇikā, my girl, did Candrikā really tell you that she saw the noble Gautama alone on the terrace of the ocean-pavilion?

Nipuṇikā. How otherwise should I have ventured to tell your highness so?

Irāvatī. Let us then proceed there that we might inquire after the health of our dear friend rescued from imminent peril—

Nipuṇikā. Your highness seems to have something further to say.

Irāvatī. And also to beg of my husband in the picture to forgive me.

Nipuṇikā. But how even now you don't endeavour to gain him over?

Irāvatī. Silly girl, a husband who has transferred the devotion of his heart to another woman is no better than the picture of a husband. My present purpose is therefore to atone for my transgression of the proper decorum.

**निपुणिका**—इदो इदो भट्टिणी। [ इत इतो भट्टिनी। ]

( उभे परिक्रामतः। )

**चेटी** ( प्रविश्य )—जेदु भट्टिणी। देवी भणादि। ण मे एसो मच्छरस्स कालो। केवलं तुह खु बहुमाणं वड्ढेदुं वअस्सिआए सह णिअलबन्धणे किदा मालविआ। जइ अणुमण्णेसि अज्जउत्तं वि तुह किदे विण्णविस्सं। जं तुह इच्छिदं तं भणाहि त्ति। [ जयतु भट्टिनी। देवी भणति—न मे एष मत्सरस्य कालः। केवलं तव खलु बहुमानं वर्धयितुं वयस्यया सह निगलबन्धने कृता मालविका। यद्यनुमन्यसे आर्यपुत्रमपि तव कृते विज्ञापयिष्यामि। यत्तवेष्टं तद्भण इति। ]

**इरावती**—णाअरिए, विण्णवेहि देविं। का वअं भट्टिणिं णिओएदुं। परिअणणिग्गहेण मइ दंसिदो सिणेहो। कस्स वा अण्णस्स पसादेण अअं जणो वड्ढदि त्ति। [ नागरिके, विज्ञापय देवीम्। का वयं भट्टिनीं नियोजयितुम्। परिजननिग्रहेण मयि दर्शितः स्नेहः। कस्य वान्यस्य प्रसादेनायं जनो वर्धत इति। ]

**चेटी**—तह। [ तथा। ] (इति निष्क्रान्ता।)

**निपुणिका** ( परिक्रम्यावलोक्य च। )—भट्टिणी एसो दुवारुच्छङ्गे समुद्दघरस्स विवणिगदो विअ वुसहो अज्जगोदमो आसीणो एव्व णिद्दाअदि। [ भट्टिनी एष द्वारोत्सङ्गे समुद्रगृहस्य विपणिगत इव वृषभ आर्यगौतम आसीन एव निद्रायते। ]

**इरावती**—अच्चाहिदं। ण क्खु सावसेसविसविआरो भवे। [ अत्याहितम्। न खलु सावशेषविषविकारो भवेत्। ]

**निपुणिका**—पसण्णमुहो दीसइ। अवि अ धुवसिद्धिणा चिइच्छिदो। ता से असङ्कणिज्जं पावं। [ प्रसन्नमुखो दृश्यते। अपि च ध्रुवसिद्धिना चिकित्सितः। तदस्य अशङ्कनीयं पापम्। ]

Nipuṇikā. This way, your highness, this way.

*( Both walk round. )*

*( Entering )*

A female servant. Victory to your highness! The queen says " My time of showing jealousy is past and therefore only with a view to increase the great respect ( in which you are held ) that I put in fetters Mālavikā and her friend; if you give me leave, I will request my husband on your behalf. Let me therefore know your wish. "

Irāvatī. Nāgarikā, tell the queen: who am I that I should commission the queen to do my bidding? She has shown great favour to me by punishing her servants; indeed what other person has shown me such favours?

Servant. I will do so. *( Exit )*

Nipuṇikā. *( Walking round and looking )* Your highness, here is the noble Gautama sleeping even in a sitting posture on the threshold of the ocean-pavilion like an ox in the market-place.

Irāvatī. What a pity! Surely it cannot be that the effects of the poison still remain.

Nipuṇikā. The expression of his face is serene. Besides Dhruvasiddhi has ministered to him. Therefore we need not be afraid that his life is in peril.

**विदूषकः** ( उत्स्वप्नायते । )—होदि मालविए । [ भवति मालविके । ]

**निपुणिका**—सुदं भट्टिणीए । कस्स वि एसो अत्तणीणो हदासो किदवो । सव्वकालं इदो एव्व सोत्थिवाअणमोदएहिं कुक्खिं पूरिअ सम्पदं मालविअं उस्सिविणावेदि । [ श्रुतं भट्टिन्या । कस्याप्येष आत्मनीनो हताशः कितवः । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा साम्प्रतं मालविकां उत्स्वप्नायते । ]

**विदूषकः**—इरावदिं अदिक्कमन्ती होहि । [ इरावतीमतिक्रामन्ती भव । ]

**निपुणिका**—सुदं एदं अच्चाहिदं । भुअङ्गभीरुअं बम्हबन्धुं इमिणा भुअङ्गकुडिलेण दण्डकट्ठेण थम्भन्तरिदा भविअ भीसआम्हि । [ श्रुतमेतदत्याहितम् । भुजङ्गभीरुकं ब्रह्मबन्धुमनेन भुजङ्गकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भूत्वा भीषयिष्ये । ]

**इरावती**—एसो अरुहदि किदवो सप्पदंसस्स । [ एषोऽर्हति कितवः सर्पदंशस्य । ]

( निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति । )

**विदूषकः**— ( सहसा प्रतिबुध्य । ) अविहा अविहा । भो दव्वीअरो मे उवरि पडिदो । [ अविहा अविहा । भो दर्वीकरो मे उपरि पतितः । ]

**राजा** ( सहसोपसृत्य । )—सखे न भेतव्यं न भेतव्यम् ।

**मालविका**—( अनुसृत्य ) भट्टा मा दाव सहसा णिक्कम । सप्पोत्ति भणादि । [ भर्तः मा तावत्सहसा निष्काम । सर्प इति भणति । ]

**इरावती**—हद्धि हद्धि भट्टा इदो एव्व धावइ । [ हा धिक् हा धिक् भर्ता इत एव धावति । ]

**विदूषकः** ( सप्रहासम् )—कहं दण्डकट्ठं एदं । अहं उण जाणे जं मए केदईकण्टएहिं दंसं करिअ सप्पस्स विअ दंसो किदो तं फलिदंति।

Vidūṣaka. ( *Talks in his sleep* ) Lady Mālavikā—

Nipuṇikā. Did your highness hear? Who can ever trust him to do anything commissioned to him? This accursed wretch, constantly filling his belly with complimentary sweetmeats given here, is now talking in his sleep about Mālavikā!

Vidūṣaka. May you supplant Irāvatī.

Nipuṇikā. Heard this piece of ill luck? I will hide behind the pillar and with this stick of mine, which is crooked like a snake, frighten this vile Brahmin who is afraid of serpents.

Irāvatī. Surely the traitor deserves some misfortune.

( *Nipuṇikā hurls her stick at the body of the Vidūṣaka.* )

Vidūṣaka. *(Suddenly waking up)* Woe is me! Friend, a serpent has fallen upon me.

King. *(Rushing out immediately)* Do not be afraid, my friend, do not be afraid.

Mālavikā. *(following)* Husband, do not rush out all of a sudden; he says there is a snake there.

Irāvatī. Alas! alas! my lord is running in this very direction.

Vidūṣaka. *(Laughing aloud)* How now? This is a mere stick. But I think this is the just reward for the blame I had the presumption to cast upon a serpent by imitating its bite with Ketakī thorns.

७२ [ कथं दण्डकाष्ठमेतत् । अहं पुनर्जाने यन्मया केतकीकण्टकाभ्यां दंष्ट्रां कृत्वा सर्पस्येव दंशः कृतः तत्फलितमिति । ]

( ततः प्रविशति पटाक्षेपेण बकुलावलिका । )

७८ **बकुलावलिका**—मा दाव भट्टा पविसदु । इह कुडिलगई सप्पो विअ दीसइ । [ मा तावत् भर्ता प्रविशतु । इह कुटिलगतिः सर्प इव दृश्यते । ]

८१ **इरावती** ( राजानं सहसोपसृत्य )—अवि णिव्विग्घमणोरहो दिवासङ्केदो मिहुणस्स । [ अपि निर्विघ्नमनोरथो दिवासङ्केतो मिथुनस्य । ]

( सर्वे इरावतीं दृष्ट्वा सम्भ्रान्ताः । )

८४ **राजा**—प्रिये अपूर्वोऽयमुपचारः ।

**इरावती**—बउलावलिए दिट्ठिआ दोच्चाहिआरविसआ संपुण्णा दे पडिण्णा । [ बकुलावलिके दिष्ट्या दूत्यधिकारविषया सम्पूर्णा ते प्रतिज्ञा । ]

८७ **बकुलावलिका**—पसीददु भट्टिणी । किं णु खु दद्दुरा वाहरन्तित्ति देवो पुढविं विसुमरेदि । किं मए किदंति देवो पुच्छिदव्वो [ प्रसीदतु भट्टिनी । किं नु खलु दर्दुरा व्याहरन्तीति देवः पृथिवीं विस्मरति ।
९० किं मया कृतमिति देवः प्रष्टव्यः । ]

**विदूषकः**—मा दाव । होदीए दंसणमेत्तेणं अत्तभवं पणिवादलङ्घणं विसुमरिदो । होदी उण अज्ज वि पसादं ण गेह्णादि । [ मा तावत् ।
९३ भवत्या दर्शनमात्रेणात्रभवान् प्रणिपातलङ्घनं विस्मृतः । भवती पुनः अद्यापि प्रसादं न गृह्णाति । ]

**इरावती**—कुविदा वि दाणिं किं करिस्सं । [ कुपितापीदानीं किं
९६ करिष्यामि । ]

**राजा**—अस्थाने कोप इत्येतदनुपपन्नं त्वयि । तथा हि—

**कदा मुखं वरतनु कारणादृते**
**तवागतं क्षणमपि कोपपात्रताम् ।**

*(Then enter Bākulavalikā with a hurried toss of the curtain.)*

Bakulāvalikā. Do not enter, Oh king; for it seems it is a serpent going in a zigzag course.

Irāvatī. *(concealing herself behind the pillar and advancing towards the king)* Did the couple find their mid-day meeting yield them the desire of their heart without any obstruction?

*(All are confused at sight of Irāvatī.)*

King. Darling, this is indeed a novel form of greeting.

Irāvatī. Bakulāvalikā, I congratulate you upon your making good the promise of acting as a go-between.

Bakulāvalikā. Let your highness have compassion on me; for does Indra cease to shower rain on the divine earth because the frogs croak?

Vidūṣaka. Please, don't go on in this way. For merely on beholding you his honour forgot your repudiation of his humble prostration; but you would not be friendly with him even now.

Irāvatī. What can I do now even though I am angry?

King. It is not proper for you to be angry without cause. For

fair one, when did your face exhibit anger without cause? Would the night have the orb

अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ॥ १६ ॥

इरावती—अट्ठाणेत्ति सुट्ठु वाहरिदं अज्जउत्तेण । अण्णसङ्कन्तेसु
अम्हाणं भाअहेएसु जइ उण कुप्पेअं अहं हस्सा हविस्सम् ।
३[अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसङ्क्रान्तेष्वस्माकं भाग-
धेयेषु यदि पुनः कुप्येयम् ततोऽहं हास्या भवेयम् ]
राजा—त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेवात्र कोपस्थानं
६न पश्यामि । कुतः

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो दण्डम् ।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥ १७ ॥

इरावती—णिउणिए गच्छ देविं विण्णवेहि । दिट्ठं देवीए पक्ख-
वाइत्तणं अज्ज त्ति । [निपुणिके गच्छ देवीं विज्ञापय । दृष्टं देव्याः
३ पक्षपातित्वमद्येति ।]
निपुणिका—तह । [तथा ।] (इति निष्क्रान्ता ।)
विदूषकः (आत्मगतम्)—अहो अणत्थो संवुत्तो । बन्धणब्भट्ठो
६घरकवोदओ बिडालिआलोए पडिदो । [अहो अनर्थः संवृत्तः ।
बन्धनभ्रष्टो गृहकपोतको बिडालिकालोके पतितः ।]
निपुणिका—(प्रविश्य) भट्टिणि जदिच्छादिट्ठाए माधविआए आच-
९क्खिदं । एवं खु एदं णिव्वुत्तं । (इति कर्णे कथयति ।) [भट्टिनि
यदृच्छादृष्टया माधविकयाख्यातम्—एवं खल्वेतन्निर्वृत्तमिति ।]
इरावती (आत्मगतम्)—उववण्णं सव्वं । बम्हबन्धुणा उज्झिण्णो
१२दुप्पओओ । (विदूषकं विलोक्य प्रकाशम् ।) इअं इमस्स कामतन्त-
सइवस्स णीदी । [उपपन्नं सर्वम् । ब्रह्मबन्धुनोज्झितो दुष्प्रयोगः । इय-
१५मस्य कामतन्त्रसचिवस्य नीतिः ।]
विदूषकः—होदि जइ णीदीए एक्कं वि अक्खरं पढेअं तदो णं

of the moon obscured by Rāhu except on the full-moon day? (16)

Irāvatī. 'Not proper'—that is a proper expression used by my husband. For now that my good fortune has passed on to another, I should only be making myself ridiculous if I were to get angry again.

King. You take it differently; but I, on my part, really do not see any cause for anger.

> For it was in obedience to the precept that on festive days attendants ought not to be punished even when they have committed an offence, that I let them free and now they come to pay me their respects. (17).

Irāvatī. Nipuṇikā, go and inform the queen that I have to-day witnessed her partiality.

Nipuṇikā. Very well. (*Exit.*)

Vidūṣaka. (*To himself*) Alas! a calamity has befallen: the house-pigeon has escaped from confinement (only) to come within sight of the cat.

(*Entering*)

Nipunikā. (*Aside*) Queen, Mādhavikā whom I happened to meet informed me that it happened thus.

(*Whispers in her ear.*)

Irāvatī. (*To herself*) I have it now. Surely this must be an intrigue of that scoundrelly Brahmin's planning. (*Looking at the Vidūṣaka.*) This is the policy of this minister versed in the treatises on love.

गाअत्तिं वि विसुमरेअं। [ भवति यदि नीत्यां एकमप्यक्षरं पठेयं ततो ननु गायत्रीमपि विस्मरेयम्। ]

**राजा** ( स्वगतम् )—कथं नु खलु सङ्कटादस्मादात्मानं मोचयिष्यामि।

( प्रविश्य ) **जयसेना** ( सावेगम् )—देव कुमारी वसुलच्छी कन्दुअं अणुधावन्ती पिङ्गलवाणरेण बलिअं उत्तासिदा अङ्कणिसण्णा देवीए पवादकिसलअं विअ वेवमाणा दाणिं वि पकिदिं ण पडिवज्जइ। [ देव कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवदुत्त्रासिताङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना इदानीमपि प्रकृतिं न प्रतिपद्यते। ]

**राजा**—कष्टम् कष्टम्। कातरो बालभावः।

**इरावती** ( सावेगम् )—तुवरदु तुवरदु अज्जउत्तो णं समासासइदुं। मा दाव से सन्तासजणिओ विआरो वड्ढदु। [त्वरतां त्वरतामार्यपुत्र एनां समाश्वासयितुम्। मा तावदस्याः सन्त्रासजनितो विकारो वर्धताम्। ]

**राजा**—अहमेनां सञ्ज्ञापयामि। ( सत्वरं परिक्रामति। )

**विदूषकः** ( आत्मगतम् )—साहु रे पिङ्गलवाणर साहु। सुट्ठु परित्तादो तुए सङ्कडादो सपक्खो। [ साधु रे पिङ्गलवानर साधु। सुष्ठु परित्रातस्त्वया सङ्कटात् सपक्षः। ]

( निष्क्रान्तः सवयस्यो राजा इरावती निपुणिका चेटा च। )

**मालविका**—हला देवि चिन्तिअ वेवदि मे हिअअं। ण जाणे अदो वरं किं अणुहोदव्वं हविस्सादित्ति। [ हला देवीं चिन्तयित्वा वेपते मे हृदयम्। न जाने अतः परं किमनुभवितव्यं भविष्यतीति। ]

( नेपथ्ये )

अच्छरिअं अच्छरिअं। अपुण्णे एव्व पञ्चरत्ते दोहलस्स मुउलेहिं सण्णद्धो तवणीआसोओ। जाव देवीए णिवेदेमि। [ आश्चर्यमाश्च-

Vidūṣaka. Lady, if I were to read but one syllable of policy, I shall forget the Gāyatrī.

King. ( *To himself* ) How on earth may I get out of this sad pickle!

( *Entering* )

Jayasenā. *(Excitedly)* King,princess Vasulakṣmī while running after her ball was terribly frightened by the ape Pingalaka; and now although reclining in the lap of the queen is trembling like a spray in the breeze and does not regain consciousness in the least.

King. Alas! How very timid are children!

Irāvatī. ( *In consternation*) Let my husband hasten to console her. Let not the illness produced by the fright be aggravated.

King. I will soon bring her to consciousness. (*Moves about quickly.*)

Vidūsaka. Bravo! Pingala ape, bravo! You have indeed saved your side.

( *Exeunt king, the Vidūṣaka, Irāvati and the female door-keeper.* )

Mālavikā. Friend, I am all in a flutter as I think of the queen. I do not know what I shall have to endure next.

*(Behind the scenes.)*

A Marvel! A Marvel! Even before five nights have passed from the time of the Dohada ceremony, the

र्थम् । अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः समद्धस्पनीयाशोकः । यावद्देव्यै निवेदयामि । ]

४५ ( उभे श्रुत्वा प्रहृष्टे भवतः । )

बकुलावलिका—समस्ससदु पिअसही । सच्चपडिण्णा देवी । [ समाश्वसितु प्रियसखी । सत्यप्रतिज्ञा देवी । ]

४८ मालविका—तेण हि पमदवणपालिआए पिट्ठदो होम्म । [ तेन हि प्रमदवनपालिकायाः पृष्ठतो भवावः । ]

बकुलावलिका—तहा । [ तथा । ]

५१ ( इति निष्क्रान्ताः सर्वे । )

॥ इति चतुर्थोऽङ्कः ॥

golden Aśoka tree is covered over with buds. So I will inform the queen.

( *Both are delighted on hearing this.* )

Bakulāvalikā. Cheer up, my friend, the queen will be true to her word.

Mālavikā. Well then, let us follow the keeper of the pleasure-garden close at her heels.

Bakulāvalikā. All right. ( *Exeunt.* )

Here ends the Fourth Act.

# पञ्चमोऽङ्कः ।

( ततः प्रविशत्युद्यानपालिका । )

**उद्यानपालिका**—उवक्खित्तो मए किदसक्कारविहिणो तवणीआसोअस्स वेदिआबन्धो । जाव अणुचिट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । ( परिक्रम्य ) अहो देव्वस्स अणुकम्पणिज्जा मालविआ । जं तस्सिं तह चण्डीकिदा देवी इमिणा असोअकुसुमउत्तंतेण पसादसुमुही भविस्सदि । कहिं णु खु देवी भवे । ( विलोक्य ) अम्मो एसो देवीए परिजणब्भंदरो किं वि जदुमुद्दालंछिदं चीवरबन्धं करे गेह्णिअ चउस्सालादो कुज्जो सारसओ णिक्कामदि । पुच्छिस्सं दाव णं । [ उपक्षितो मया कृतसत्कारविधेस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगामात्मानं देव्यै निवेदयामि । अहो दैवस्यानुकम्पनीया मालविका । यत् तस्यां तथा चण्डीकृता देवी अनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र नु खलु देवी भवेत् । अम्मो एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितं चीवरबन्धं करे गृहीत्वा चतुःशालात् कुब्जः सारसको निष्क्रामति । प्रक्ष्यामि तावदेनम् । ]

( ततः प्रविशति यथानिर्दिष्टः कुब्जः । )

**उद्यानपालिका**—( उपसृत्य )—सारसअ कहिं पत्थिदोसि । [ सारसक कुत्र प्रस्थितोऽसि । ]

**सारसकः**—महुअरिए वेअपारआणं बम्हणाणं णिच्चदक्खिणा दादव्वा । ता अज्जपुरोहिदस्स हत्थं पावइस्सं । [ मधुकरिके वेदपारगाणां ब्राह्मणानां नित्यदक्षिणा दातव्या । तदार्यपुरोहितस्य हस्तं प्रापयिष्यामि । ]

**मधुकरिका**—किंणिमित्तं । [ किंनिमित्तम् । ]

**सारसकः**— जदप्पहुदि सुदं सेणावइणा जण्णतुरअरक्खणे णिउत्तो भट्टिदारओ वसुमित्तो त्ति तदापहुदि तस्स आउसो णिमित्तं अट्ठा-

## ACT V.

( *Enter the female keeper of the garden.* )

The keeper. I have got constructed an alter round the gold Aśoka-tree which has been duly honoured. So I will inform the queen that I have executed her order. ( *Moving about.* ) Ah! Fate should really take pity on Mālavikā, so that although the queen is highly incensed against her, yet she might be inclined to favour her on account of this incident of the Aśoka putting forth flowers. Where is the queen? ( *Observing* ) Ah! the hunchback Sārasaka, one of the servants of the queen, is just issuing out of the quadrangle with a cloth-covered box sealed with a lac seal. I will ask him.

( *Enter the hunch-back as described.* )

The keeper. ( *Approaching* ) Sārasaka, where are you going?

Sārasaka. Madhukarikā, the Brahmins versed in the sacred lore are to be given their daily dole. So I will put ( it ) into the hands of the revered priest.

Madhukarikā. What for?

Sārasaka. Ever since the queen learnt that prince Vasumitra was appointed by the general to guard the sacrificial horse, she has been bestowing on those who

दससुवण्णप्पमाणं दक्खिणं देवी दक्खिणीएहिं पडिग्गाहेदि । [ यदाप्रभृति श्रुतं सेनापतिना यज्ञतुरगरक्षणे नियुक्तो भर्तृदारको वसुमित्र इति तदाप्रभृति तस्यायुषो निमित्तमष्टादशसुवर्णप्रमाणां दक्षिणां देवी दक्षिणीयैः प्रतिग्राहयति ।]

**मधुकरिका**—जुज्जइ । अह कहिं देवी । किं वा अणुचिट्ठदि । [ युज्यते । अथ कुत्र देवी । किं वानुतिष्ठति । ]

**सारसकः**—मङ्गलघरए आसणत्था विअब्भविसआदो भादुणा वीरसेणेण पेसिदं लिपिअरेहिं वाचीअमाणं लेहं सुणादि । [ मङ्गलगृहे आसनस्था विदर्भविषयात् भ्रात्रा वीरसेनेन प्रेषितं लिपिकारैर्वाच्यमानं लेखं शृणोति । ]

**मधुकरिका**—को उण विअब्भराअवुत्तन्तो । [ कः पुनर्विदर्भराजवृत्तान्तः । ]

**सारसकः**—वसीकिदो किल वीरसेणप्पमुहेहिं भट्टिणो विअअदण्डेहिं विअब्भणाहो । मोइदो अ से दाआदो माहवसेणो । तेण महासाराइं रअणवाहणाइं सिप्पआरिआभूइट्ठं परिअणं अ उवाअणीकरिअ भट्टिणो सआसं पेसिदो दूदो सुवो किल भट्टारं पेक्खिस्सदि । [ वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः । मोचितश्चास्य दायादो माधवसेनः । तेन महासाराणि रत्नवाहनानि शिल्पकदारिकाभूयिष्ठं परिजनं चोपायनीकृत्य भर्तुः सकाशं प्रेषितो दूतः श्वः किल भर्तारं द्रक्ष्यति । ]

**मधुकरिका**—गच्छ अणुचिट्ठ अत्तणो णिओअं । अहं वि देविं पेक्खिस्सं । [ गच्छ अनुतिष्ठ आत्मनो नियोगम् । अहमपि देवीं द्रक्ष्यामि । ]

( इति निष्क्रान्तौ । )

**प्रवेशकः ।**

( ततः प्रविशति प्रतीहारी । )

**प्रतीहारी**—आणत्तम्हि देवीए असोअसक्कारव्वावुदाए-विण्णवेहि

are worthy of the dole, eighteen golden pieces in order to secure him (long) life.

Madhukarikā. That is as it should be. Where is the queen? How is she engaged?

Sārasaka. Sitting in the holy house, she is listening to a letter sent by her brother Vīrasena from the country of the Vidarbhas, read out to her by the scribes.

Madhukarikā. What could be the news from the king of the Vidarbhas?

Sārasaka. It is reported that the victorious army of our king led by Vīrasena and others has subjugated the king of the Vidarbhas, and his relative Mādhavasena is set free. He has sent many presents of very valuable jewelled vehicles, and some attendants, mostly maidens accomplished in the arts; and has dispatched a messenger who is to see his majesty tomorrow.

Madhukarikā. Go, attend to your business; I for my part will see the queen.

*( Exeunt. )*

*Here ends the introductory scene.*

*( Enter the female door-keeper. )*

Door-keeper—the queen who is engaged in doing honour to the Aśoka tree has given me this order: tell my lord I desire to witness for myself in the company of my lord the Asoka tree in its glory of flowers. So I

अज्जउत्तं । इच्छामि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छिं
५४पच्चक्खीकरेदुंत्ति । ता जाव धम्मासणगदं देवं पडिवालेमि ।
[ आज्ञप्तास्मि देव्या अशोकसत्कारव्यापृतया—'विज्ञापयाम्यार्यपुत्रम् । इच्छाम्यार्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुम्' इति तद्यावद्धर्मासनगतं देवं प्रतिपालयामि । ]

( इति परिक्रामति । )

( नेपथ्ये ) वैतालिकौ—दिष्ट्या दण्डेनैवारिशिरःसु वर्तते देवः

प्रथमः—परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।
विजयकरिणामालानाङ्कैरुपोढबलस्य ते
वरद वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १॥

द्वितीयः—विरचितपदं वीरप्रीत्या सुरोपम सूरिभि-
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिः शौरेः प्रसह्य च रुक्मिणीम् ॥२॥

प्रतीहारी—एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि ।
अहंवि दाव इमस्स पमुहादो किंवि ओसरिअ एदं मुहालिन्दतोरणं
३समस्सिदा होमि । [एष जयशब्दसूचितप्रस्थानो भर्ता इत एवागच्छति । अहमपि तावदस्य प्रमुखात्किमप्यपसृत्य एतन्मुखालिन्दतोरणं समाश्रिता भवामि । ] ( एकान्ते स्थिता । )

६ ( ततः प्रविशति सवयस्यो राजा । )

राजा—

कान्तां विचिन्त्य सुलभेतरसम्प्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च ।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते च हृदयं सुखमश्नुते च ॥ ३ ॥

will now await the king who has been occupying the judgment-seat.

*( Moves about. )*

*( Behind the scenes. )*

Two Bards—Hail to our king who by the mere strength of his army tramples the heads of his enemies.

First Bard—In the gardens on the banks of
the Vidiśā, vocal with the sweet warblings of
the cuckoo, delighted, you spend the spring like
the god of love assuming a body; while your
power ever waxing, O giver of boons, the enemies
have been bent down together with the trees
on the banks of the Varadā, which are used as
the tying posts for your victorious elephants.(1)

Second bard—O god-like (king), the acts of
these two, sung in verse by the wise out of their
love for heroes, have been well known all over
the Kratha-kaiśikas—of you who by means of
your forces took away the glory of the king of
the Vidarbhas, and of Śrikṛṣṇa who by his
arms as puissant as iron has forcibly carried
away Rukmiṇī. (2)

Door-keeper. The king is coming here, his setting forth being announced by the shouts of victory; I will now step aside from his direct path and stand under the arch of the main terrace. *(Stands aside.)*

*(Enter king with his companion.)*

King. As I think how difficult it is to secure
my beloved and as I hear of the subjugation
of the king of the Vidarbhas by my forces,
my heart feels both happy and sad, like a lotus
in the sun when it is struck by the streams (of
a rain shower.) (3)

**विदूषकः**—जह अहं पेक्खामि तह एक्कन्तसुहिदो भवं भविस्सदि। [ यथाहं पश्यामि तथैकान्तसुखितो भवान् भविष्यति । ]

**राजा**—कथमिव ।

**विदूषकः**—अज्ज किल देवीए धारिणीए पण्डिदकोसिई भणिदा । भअवदि जइ तुमं पसाहणगव्वं वहेसि ता दंसेहि मालविआए सरीरे वेदब्भं विवाहणेवत्थं ति । ताए वि सविसेसालंकिदा मालविआ । तत्तहोदी कदाचि पूरेइ भवदो मणोरहं । [ अद्य खलु देव्या धारिण्या पण्डितकौशिकी भणिता । 'भगवति यदि त्वं प्रसाधनगर्वं वहसि तद्दर्शय मालविकायाः शरीरे वैदर्भं विवाहनेपथ्यम्' इति । तयापि सविशेषालङ्कृता मालविका । तत्रभवती कदाचित् पूरयति भवतो मनोरथम् । ]

**राजा**—सखे मदपेक्षानुवृत्त्या निवृत्तेर्ष्याया धारिण्याः पूर्वचरितैः सम्भाव्यमेतत् ।

**प्रतीहारी** ( उपगम्य )—जेदु भट्टा । देवी विण्णवेदि—तवणीआसोअस्स कुसुमसोहादंसणेण मह आरम्भो सफलीकरीअदु त्ति । [ जयतु भर्ता । देवी विज्ञापयति—'तपनीयाशोकस्य शोभादर्शनेन ममारम्भः सफलीक्रियताम्' इति । ]

**राजा**—ननु तत्रैव देवी ।

**प्रतीहारी**—अह इं । जहारुहसम्माणसुहिदं अन्देउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण सह देवं पडिवालेदि । [ अथ किम् । यथार्हसम्मानसुखितं अन्तःपुरं विसृज्य मालविकापुरोगेणात्मनः परिजनेन सह देवं प्रतिपालयति । ]

**राजा** ( सहर्षम् । विदूषकं विलोक्य । )—जयसेने गच्छाग्रतः ।

**प्रतीहारी**—इदो इदो देवो । [ इत इतो देवः । ]

( सर्वे परिक्रामन्ति । )

**विदूषकः** ( विलोक्य )—भो वअस्स किंचि परिवुत्तजोव्वणो

Vidūṣaka. As I see it, you will surely be blessed with perfect happiness.

King. How do you mean ?

Vidūṣaka. To day queen Dhāriṇī said to the learned Kausikī : Revered lady, if you pride yourself upon your skill in decorating, then put on Mālavikā's person the wedding-attire used by the people of the Vidarbha country ; and she too got Mālavikā splendidly decked. It is, therefore, likely that her highness grants you your desire.

King. Friend, this is quite possible, to judge from the former actions of Dhāriṇī who has always followed my inclinations and has been utterly free from jealousy.

Door-keeper. *(Approaching)* Victory to the king! The queen makes this request: please to make my undertaking fruitful by coming to witness the beauty of the gold Aśoka-tree in flowers.

King. Surely the queen is there, is she not ?

Door-keeper. Yes. After dismissing the ladies of the harem who are pleased by being honoured according to their deserts, she is waiting for my lord with her own attendants headed by Mālavikā.

King. *(Joyfully looking at the Vidūṣaka)* Jayasenā, do you go ahead

Door-keeper. This way, this way, king.

*( All move about. )*

Vidūṣaka. *(Observing)* My friend, in this Pramada-

२६ वसन्तो पमदवणे लक्खीअदि । [ भो वयस्य किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते । ]

**राजा**—यथाह भवान् ।

**अग्रे विकीर्णकुरवकफलजालविभिद्यमानसहकारम् ।**
**परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥ ४ ॥**

**विदूषकः** ( परिक्रम्य )—अहो अअं सो दिण्णणेवत्थो विअ
३ कुसुमत्थवएहिं तवणीआसोओ । ओलोएदु भवं । [ अहो अयं स दत्तनेपथ्य इव कुसुमस्तवकैस्तपनीयाशोकः अवलोकयतु भवान् । ]

**राजा**—स्थाने खल्वयं प्रसवमन्थरोऽभूत् । यदयमिदानीमनन्य-
६ साधारणां शोभां उद्वहति । पश्य

**सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम् ।**
**निर्वृत्तदोहदेऽस्मिन्सङ्क्रान्तानीव कुसुमानि ॥ ५ ॥**

**विदूषकः**—भो विस्सद्धो होहि । अम्हेसु सण्णिहिदेसु वि धारिणी पस्सपरिवट्टिणिं मालविअं अणुमण्णेदि । [ भो विश्रब्धो
३ भव । अस्मासु सन्निहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते । ]

**राजा** ( सहर्षम् )—पश्य सखे

**मामियमभ्युत्तिष्ठति देवी विनयादुपस्थिता प्रियया ।**
**विस्मृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥**

( ततः प्रविशति देवी मालविका परिव्राजिका विभवतश्च परिवारः । )

**मालविका** ( आत्मगतम् )—जाणामि णिमित्तं कोदुआलङ्का-
३ रस्स । तह वि भिसिणीपत्तगदं सलिलं विअ वेवइ मे हिअअं । दक्खिणेदरं वि णअणं बहुसो फुरइ । [ जानामि निमित्तं कौतुकालङ्कारस्य । तथापि बिसिनीपत्रगतं सलिलमिव वेपते मे हृदयम् ।
६ दक्षिणेतरदपि नयनं बहुशः स्फुरति । ]

vana-garden here, spring seems to be somewhat past his youth.

King. It is even as you say.

Here before ( us ) the youth of spring now attaining its ripeness, with the Kurabakā flowers scattered, and the mango tree bursting with fruit, fills the mind with longing. ( 4 )

Vidūṣaka. *(Moving about)* O, this gold Aśoka-tree appears to be attired in a vesture of clustering flowers. Look, your highness.

King. It was quite proper that it was tardy to blossom. For now it stands matchless in its loveliness. See,

it appears as if the flowers of all other Aśoka-trees that first exhibited the wealth of spring, have been transferred to this tree, now that its longing is fulfilled. ( 5 )

Vidūṣaka. Be quite at ease; for even when we are near, Dhāriṇī allows Mālavikā to attend her.

King. ( *With joy* ) See, my friend,

the queen rises to greet me respectfully, attended by my beloved, like the Earth waited upon by royal Glory who has forgotten to hold a flower in her hand. ( 6 )

*( Then enter The queen, Mālavikā, Parivrājikā and the attendants at a respectful distance.)*

Mālavikā. *( To herself )* I know the reason of this nuptial attire ; and yet, how my heart quivers like water on a lotus-leaf ! And my left eye, too, is throbbing frequently.

**विदूषकः**—भो वअस्स किं त्रि वेवाहिअणेवत्थेण सविसेसं खु सोहदि तत्तहोदी मालविआ । [ भो वयस्य किमपि वैवाहिकनेपथ्येन
९ सविशेषं खलु शोभते तत्रभवती मालविका । ]

**राजा**—पश्याम्याभरणालङ्कृतामेनाम् । यैषा

अनतिलम्बिदुकूलनिवासिनी
लघुभिराभरणैः प्रतिभाति मे
उडुगणैरुदयोन्मुखचन्द्रिका
गतहिमैरिव चैत्रविभावरी ॥ ७ ॥

**धारिणी**—( उपेत्य ) जेदु अज्जउत्तो । [ जयत्वार्यपुत्रः । ]

**विदूषकः**—वड्ढदु होदी । [ वर्धतां भवती । ]

२ **परिव्राजिका**—विजयतां देवः ।

**राजा**—भगवति अभिवादये ।

**परिव्राजिका**—अभिमतसिद्धिरस्तु ।

६ **धारिणी** ( सस्मितम् )—अज्जउत्त, एसो दे अम्हेहिं तरुणीअणसहाअस्स असोओ सङ्केदघरअं सङ्कप्पिदो । [ आर्यपुत्र, एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः सङ्केतगृहं सङ्कल्पितः । ]

९ **विदूषकः**—भो आराहिओसि । [ भो आराधितोऽसि । ]

**राजा**—( सव्रीडमशोकमभितः परिक्रामन् । )

नायं देव्या भाजनत्वं न मेयः
सत्काराणामीदृशानामशोकः ।
यः सावज्ञो माधवश्रीनियोगे
पुष्पैः शंसत्यादरं पत्ययत्ने ॥ ८ ॥

**विदूषकः**—भो विस्सद्धो भविअ इमं जोव्वणवदिं पेक्ख । [ भो विश्रब्धो भूत्वेमां यौवनवतीं पश्य । ]

२ **धारिणी**—कं । [ काम् । ]

Vidūṣaka. My friend, the lady Mālavikā looks so lovely in that nuptial dress.

King. I see her decked in those ornaments–she who

wearing a short silk dress and with scanty ornaments, appears to me like a night in the month of Caitra when moonlight is imminent, with the clusters of stars free from mists. (7)

Dhāriṇī. (*advancing*) Victory to my lord!

Vidūṣaka. May your highness be prosperous!

Parivrājikā. May the king be victorious!

King. Revered lady, I salute thee!

Parivrājikā. May you attain the object you desire!

Dhāriṇī. *(Smiling)* my noble lord, here have we turned this Aśoka-tree into a trysting bower for you to enjoy the company of young ladies.

Vidūsaka. Come, friend, a great favour has been conferred upon you.

King. *(Bashfully walking round the Aśoka-tree.)*

This Aśoka-tree really deserves to be made the recipient of such favours inasmuch as it disregarded the command of the goddess of vernal beauty and evinced its respect for your exertions by bursting into flowers. (8)

Vidūsaka. Come, be confident, and look at this blooming young—

Dhāriṇī. Whom do you mean?

विदूषकः—तवणीआसोअस्स कुसुमसोहं । [ तपनीयाशोकस्य कुसुमशोभाम् । ]

( सर्वे उपविशन्ति । )

राजा ( मालविकां विलोक्यात्मगतम् । )—कष्टं खलु ममाद्य सान्निधिविप्रयोगः ।

अहं रथाङ्गनामेव प्रिया सहचरीव मे ।
अननुज्ञातसम्पर्का धारिणी रजनीव नौ ॥ ९ ॥

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—जयतु देवः । अमात्यो विज्ञापयति 'तस्मिन्विदर्भराजोपायने द्वे शिल्पदारिके मार्गपरिश्रमादलसशरीरे इति कृत्वा न प्रवेशिते । सम्प्रति देवोपस्थानयोग्ये । तत्राज्ञां देवो दातुमर्हति' इति ।

राजा—प्रवेशय ते ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रम्य ताभ्यां सह पुनः प्रविश्य । ) इत इतो भवत्यौ ।

प्रथमा ( जनान्तिकम् )—हला रअणिए, अपुव्वं वि एदं राअउलं पविसन्तीए पसीददि मे अब्भन्तरगदो अप्पा । [ हला रजनिके अपूर्वमप्येतद्राजकुलं प्रविशन्त्याः प्रसीदति ममाभ्यन्तरगत आत्मा । ]

द्वितीया—जोसणिए मह वि एव्वं । अत्थि खु लोअवाओ । आआमि सुहं वा दुक्खं वा हिअअं समत्थीकरेदित्ति । [ ज्योत्स्निके ममाप्येवम् । अस्ति खलु लोकवादः । आगामि सुखं वा दुःखं वा हृदयं समर्थीकरोतीति । ]

प्रथमा—सो दाणिं सच्चो होदु । [ स इदानीं सत्यो भवतु । ]

कञ्चुकी—एष देव्या सह देवस्तिष्ठति । उपसर्पतं भवत्यौ ।

Vidūsaka. Beauty of the flowers of the golden Aśoka.

*(All sit down.)*

King. *(Looking at Mālavikā, to himself)* Alas! I am at the present moment separated though near.

I am like the Cakravāka bird, and my beloved like his mate, while Dhāriṇī who does not permit our union, is like the night. (9)

*( Then enter a chamberlain.)*

Chamberlain. Victory to the king. The minister says that in that present sent by the king of Vidarbha were included two accomplished maidens who, as they were fatigued with the journey, were not then presented. Now they are in a fit state to appear before the king. Let the king, therefore, direct in regard to this matter.

King. Introduce them.

Chamberlain. As the king commands. *(He goes out and then reappears along with them.)* This way, this way, ladies.

First. *( Aside )* Ah, Rajanikā, although I am stepping into this palace quite unknown to me before, yet my inner self is filled with delight.

Second. Jyotsnikā ! I have exactly the same feeling. You know indeed the well known proverb : the state of the heart foretells approaching happiness or misery.

First. May it come true on the present occasion.

Chamberlain. Here are the king and the queen; may you advance, ladies.

( उभे उपसर्पतः । मालविका परिव्राजिका च चेट्यौ दृष्ट्वा परस्परमवलोकयतः । )

उभे ( प्रणिपत्य )—जेदु भट्टा । जेदु भट्टिणी । [ जयतु भर्ता । जयतु भट्टिनी । ]

राजा—निषीदतम् ।

( उभे उपविष्टे । )

राजा—कस्यां कलायामभियोगो भवत्योः ।

उभे—भट्टा सङ्गीदए अब्भंतरम्ह । [ भर्तः सङ्गीते अभ्यन्तरे स्वः । ]

राजा—देवि गृह्यतामनयोरन्यतरा ।

देवी—मालविए इदो पेक्ख । कदरा दे सङ्गीदसहाइणी रुच्चइ । [ मालविके इतः पश्य । कतरा ते सङ्गीतसहायिनी रोचते ।]

उभे—( मालविकां विलोक्य )—अम्मो भट्टिदारिआ । जेदु भट्टिदारिआ । [ अम्मो भर्तृदारिका । जयतु भर्तृदारिका ।]

( तया सह बाष्पं विसृजतः । )

( सर्वे सविस्मयमालोकयन्ति । )

राजा—के भवत्यौ । का वेयम् ।

प्रथमा—देव इअं अम्हाणं भट्टिदारिआ । [ देव इयमस्माकं भर्तृदारिका । ]

राजा—कथमिव ।

उभे—सुणादु भट्टा । जो सो भट्टिणा विअअदण्डेहिं विअब्भणाहं वसीकरिअ बन्धणादो मोइदो कुमारो माहवसेणो णाम तस्स इअं कणीअसी भइणी मालविआ णाम । [ शृणोतु भर्ता । योऽसौ भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम तस्येयं कनीयसी भगिनी मालविका नाम । ]

धारिणी—कहं राअदारिआ इअं । चन्दणं क्खु मए पादुआपरि-

*( Both advance, Mālavikā and the Parivrājikā exchange glances on seeing these two attendants. )*

Both. *( Prostrating themselves )* Victory to the king! Victory to the queen!

King. Sit down.

*( Both sit down. )*

King. Ladies, which art have you practised?

Both. We are well versed in music, your majesty.

King. Queen, take one of these ladies.

Queen. Look here, Mālavikā. Which would you like to have to accompany you in singing?

Both. *( Seeing Mālavikā )* Ah! The princess! *( Prostrating before her)* Victory to our princess! *( They weep with her.)*

*( All look on in bewilderment.)*

King. Who are you, ladies? And who is this?

First. King, this is our princess.

King. What do you mean?

Both. Listen, king! This is Mālavikā the younger sister of prince Mādhavasena who was rescued from prison by you by conquering the king of Vidarbha with your victorious army.

Dhāriṇī. She is a princess! How have I been de-

होएण दूसिदं । [ कथं राजदारिकेयम् । चन्दनं खलु मया पादुकापरिभोगेण दूषितम् । ]

राजा—अथात्रभवती कथमित्थंभूता ।

मालविका ( निःश्वस्यात्मगतम् । )—विहिणो णिओएण । [ विधेर्नियोगेन ।]

द्वितीया—सुणादु भट्टा । दाआदवसं गदे अम्हाणं भट्टिदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अम्हारिसं परिअणं उज्झिअ गूढं अवणीदा एसा । [ शृणोतु भर्ता । दायादवशं गतेऽस्माकं भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिना अस्मादृशं परिजनं उज्झित्वा गूढमपनीतैषा । ]

राजा—श्रुतपूर्वं मयैतावत् । ततस्ततः ।

उभे—एत्तिअं एव्व आणीमो । अदो वरं ण आणीमो । [ एतावदेव जानीवः । अतः परं न जानीवः । ]

परिव्राजिका—अतः परमहं मन्दभागिनी कथयिष्यामि ।

उभे—भट्टिदारिए अज्जकोसिईए विअ सरसंजोओ पडिभादि । [ भर्तृदारिके आर्यकौशिक्या इव स्वरसंयोगः प्रतिभाति । ]

मालविका—अह इं । [ अथ किम् । ]

उभे—जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि । भअवदि वन्दामो । [ यतिवेषधारिणी आर्यकौशिकी दुःखेन विभाव्यते । भगवति वन्दावहे । ]

परिव्राजिका—स्वस्ति भवतीभ्याम् ।

राजा—कथमाप्तवर्गोऽयं भवत्याः ।

परिव्राजिका—एवमेतत् ।

विदूषकः—तेण हि कहेदु दाणिं भअवदी अत्तहोदीए उत्तन्तसेसं । [ तेन हि कथयत्विदानीं भगवती अत्रभवत्या वृत्तान्तशेषम् । ]

परिव्राजिका ( सवैक्लव्यम् )—श्रूयतां तावत् । माधवसेनसचिवं

filing sandalwood by using it as a slipper!

King. Well, then, how was this lady reduced to this state?

Mālavikā. *(Sighing, to herself)* By the decree of fate.

Second Maiden. Listen, your majesty. When our prince Mādhavasena was captured by his kinsmen, his minister, the noble Sumati, secretly carried her away, leaving behind attendants like us.

King. I have heard this before. What happened next?

Both. This is all we know. We do not know what happened afterwards.

Parivrājikā. I will now relate, wretched woman that I am, what happened next.

Both. Princess, we seem to hear the voice of the noble Kauśikī.

Mālavikā. Surely.

Both. It is difficult to recognize the noble Kauśikī in the garb of an ascetic. Revered lady, we salute you.

Parivrājikā. Blessings on you!

King. What, are these your kinsfolk?

Parivrājikā. Yes, it is so.

Vidūṣaka. Please, revered lady, relate to us the rest of her story.

Parivrājikā. *(Painfully)* Listen then. Know that

६९सुमतिं ममाग्रजमनवेक्ष्य ।

राजा—उपलभ्यते । ततस्ततः ।

परिव्राजिका—स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भर्तृ-
७२सम्बन्धाकाङ्क्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः ।

राजा—ततस्ततः ।

परिव्राजिका—ततश्च

तूणीरपट्टपरिणद्धभुजान्तराल-
मापार्ष्णिलम्बिशिखिबर्हकलापधारि ।
कोदण्डपाणि निनदत्प्रतिरोधकाना-
मापातदुष्प्रसहमाविरभूदनीकम् ॥ १० ॥

( मालविका भयं रूपयति । )

विदूषकः—भोदि मा भआहि । अदिक्कन्तं खु भअवदी कहेदि ।
१[ भवति मा भैषीः । अतिक्रान्तं खलु भगवती कथयति । ]

राजा—ततस्ततः ।

परिव्राजिका—ततो मुहूर्तं बद्धयुद्धास्ते पराङ्मुखीकृताः सार्थवाह-
६योद्धारः तस्करैः ।

राजा—भगवति अतः परमिदानीं कष्टं श्रोतव्यम् ।

परिव्राजिका—ततः स मत्सोदर्यः

इमां परीप्सुर्दुर्जातेः पराभिभवकातराम् ।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥ ११ ॥

प्रथमा—हा हदो सुमदी । [ हा हतः सुमतिः । ]

द्वितीया—अदो खु भट्टिदारिआए एआरिसी समवत्था संवुत्ता ।
२ [ अतः खलु भर्तृदारिकाया एतादृशी समवस्था संवृत्ता । ]

( परिव्राजिका बाष्पं विसृजति । )

Mādhavasena's minister, Sumati, is my elder brother.

King. We understand ; pray, go on.

Parivrājikā. He carried off along with myself, this lady whose brother was reduced to such a state, and desiring to marry her to your majesty joined a caravan that was going to the Vidiśā country.

King. What next?

Parivrājikā. And then

there appeared a host of yelling bandits, armed with bows, whose breasts were crossed by the quiver-straps, and who wore tufts of peacock-tails hanging down to their heels, and whose on-slaught was so irresistible. (10)

*( Mālavikā gesticulates fright.)*

Vidūṣaka. Lady, do not be afraid; for the revered lady is relating something that is past.

King. What happened next?

Parivrājikā. Then the warriors employed by the leader of the caravan joined battle for a moment with the robbers, but were soon put to flight.

King. Revered lady, the sequel to this, which we have now to hear, must be painful.

Parivrājikā. Then my brother

endeavouring to save from the ruffians this lady who was afraid of violence at their hands —my brother who loved his king so well—paid with his dear life his debt to his king. (11)

First maiden. Alas! Sumati is killed!

Second maiden. That is how our princess is reduced to this state.

*( The Parivrājikā sheds tears. )*

राजा—भगवति तनुभृतामीदृशी लोकयात्रा । न शोच्यस्तत्रभवान् सफलीकृतभर्तृपिण्डः । ततः ।

परिव्राजिका—ततो मोहं गताहं यावत्संज्ञामुपलभे तावदियं दुर्लभदर्शना संवृत्ता ।

राजा—महत् खलु कृच्छ्रमनुभूतं भगवत्या ।

परिव्राजिका—ततो भ्रातुः शरीरमग्निसात्कृत्वा पुनर्नवीकृतवैधव्य-दुःखया मया त्वदीयं देशमवतीर्य इमे काषाये गृहीते ।

राजा—युक्तम् । सज्जनस्यैष पन्थाः । ततस्ततः ।

परिव्राजिका—सेयमाटविकेभ्यो वीरसेनं वीरसेनाद्देवीं गता देवीगृहे लब्धप्रवेशया मया पुनर्दृष्टेत्येतदवसानं कथायाः ।

मालविका (आत्मगतम्)—किं णु खु संपदं भट्टा भणादि । [किं नु खलु साम्प्रतं भर्ता भणति ।]

राजा—अहो परिभवोपहारिणो विनिपाताः । कुतः ।

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।
स्नानीयवस्त्रक्रियया पत्रोर्णं वोपयुज्यते ॥ १२ ॥

धारिणी—भअवदि तुए अहिजणवदिं मालविअं अणाचक्खन्तीए असम्पदं किदं । [भगवति त्वयाभिजनवतीं मालविकामनाचक्षाणया असाम्प्रतं कृतम् ।]

परिव्राजिका—शान्तं पापं शान्तं पापम् । कारणेनैव खलु मया नैष्ठुर्यमवलम्बितम् ।

धारिणी—किं विअ कारणं । [किमिव कारणम् ।]

राजा—यदि वक्तव्यं कथ्यताम् ।

King. Revered lady, that is the lot of mortals. You must not lament for your noble brother who showed he had not eaten his master's salt in vain. Well, what next?

Parivrājikā. Then I fainted, and by the time I had recovered myself this lady was nowhere to be seen.

King. The revered lady has indeed passed through a severe calamity.

Parivrājikā. Then I burned the body of my brother, and with the sorrow of my widowhood renewed I came to your country and assumed these two red garments.

King. Quite proper; this is the way of life that pious men adopt. What happened next?

Parivrājikā. This lady came from the power of the foresters into that of Vīrasena, who sent her on to the queen; and so was again seen by me when I obtained admission into the queen's palace. This is the end of my story.

Mālavikā. *( To herself )* I wonder what the King will say now.

King. Alas! How indignities are heaped on those that suffer calamities. For

> this lady having a right to the title of queen
> has been treated by us as a slave, as a silken
> garment is used for the purposes of a bathing-
> cloth. (12)

Dhārinī. Revered lady, you did wrong in not telling me that Mālavikā was of noble birth.

Parivrājikā. Heaven forbid! I had indeed a very good reason for adopting secrecy.

Dhāriṇī. What is the reason like?

King. If it is proper to tell, then do tell us.

**परिव्राजिका**—श्रूयताम् । इयं पितरि जीवति केनापि देवयात्रागतेन सिद्धादेशेन साधुना मत्समक्षमादिष्टा । 'संवत्सरमात्रं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यति' इति । तमेनमवश्यंभाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि ।

**राजा**—युक्तोपेक्षा ।

**कञ्चुकी** (प्रविश्य)—देव कथान्तरेणान्तरितमिदममात्यो विज्ञापयति । 'विदर्भगतमनुष्ठेयमवधारितमस्माभिः । देवस्य तावदभिप्रायं श्रोतुमिच्छामि' इति ।

**राजा**—मौद्गल्य तत्रभवतोर्भ्रात्रोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमवस्थापयितुकामोऽस्मि ।

> **तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।**
> **नक्तंदिवं विभज्योभौ शीतोष्णकिरणाविव ॥ १३ ॥**

**कञ्चुकी**—देव एवममात्यपरिषदे विज्ञापयामि ।

(राजा अङ्गुल्यानुमन्यते । निष्क्रान्तः कञ्चुकी ।)

**प्रथमा** (जनान्तिकम्)—भट्टिदारिए दिट्ठिआ भट्टिदारओ अद्धरज्जे पदिट्ठं गमिस्सदि । [भर्तृदारिके दिष्ट्या भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमिष्यति ।]

**मालविका**—एत्तिअं दाव बहुमन्तव्वं जं जीवितसंसआदो मुत्तो । [एतावत्तावद्बहु मन्तव्यं यज्जीवितसंशयान्मुक्तः ।]

**कञ्चुकी** (प्रविश्य)—विजयतां देवः । अमात्यो विज्ञापयति । अहो कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽप्येवमेव दर्शनम् । कुतः

> **द्विधा विभक्तां श्रियमुद्वहन्तौ**
> **धुरं रथाश्वाविव संग्रहीतुः ।**
> **तौ स्थास्यतस्ते नृपती निदेशे**
> **परस्परावग्रहनिर्विकारौ ॥ १४ ॥**

Parivrājikā. Listen. This lady, while her father was still living, was told in my presence by an infallible and saintly seer, at a fair held in honour of a deity, that she would have to endure the position of a slave for just a year, and would then get a husband of equal rank. Seeing that the inevitable prophecy was being fulfilled by her continuing to serve your feet, I waited for the appointed time and I think I acted rightly.

King. It was quite proper to wait patiently.

*( Entering )* A chamberlain. King, the minister sends the following message which I could not deliver before, as another matter had cropped up in the meanwhile: we have considered what ought to be done with reference to Vidarbha. But I would like to know the view of the king.

King. Maudgalya, I wish to appoint the two brothers Yajnasena and Mādhavasena as joint rulers:

let them rule separately the north and south banks of the Varadā like the Sun and the Moon that divide between them and rule the night and day. (13)

Chamberlain. King, I will communicate this your view to the council of ministers.

*( The King shows his assent by a movement of his finger. Exit Chamberlain. )*

First maiden. *( aside )* fortunately the prince will be established in half of the Kingdom.

Mālavikā. Even this I ought to consider as a great thing that he has been rescued from peril of his life.

*( Entering )* The chamberlain. Victory to the King! The minister says 'How auspicious the King's view! The council of ministers too hold the same view; for

bearing up their fortune divided between them, like the horses of a chariot the yoke put upon them by the charioteer, these two kings will be ruled by you, not being distracted by mutual conflict. (14)

राजा—तेन हि मन्त्रिपरिषदं ब्रूहि । सेनापतये वीरसेनाय लिख्यतामेवं क्रियतामिति ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य ।) अनुष्ठिता प्रभोराज्ञा । अयं पुनरिदानीं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सप्राभृतको लेखः प्राप्तः । प्रत्यक्षीकरोत्वेनं देवः ।

(राजा सहसोत्थाय प्राभृतकं सोपचारं परिगृह्य शिरसि कृत्वा परिजनायार्पयति। लेखं च नाट्येन उद्वेष्टयति । )

धारिणी—अम्महे तदोमुहं एव्व मे हिअअं । सुणिस्सं दाव गुरुअणकुसलाणन्तरं पुत्तस्स वसुमित्तस्स उत्तन्तं । अदिभारे खु सेणावइणा णिउत्तो मे पुत्तओ [ अम्महे ततोमुखमेव मे हृदयम् । श्रोष्यामि तावद् गुरुजनकुशलानन्तरं पुत्रस्य वसुमित्रस्य वृत्तान्तम् । अतिभारे खलु सेनापतिना नियुक्तो मे पुत्रकः । ]

राजा—( उपविश्य वाचयति । ) स्वस्ति । यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्यानुदर्शयति । विदितमस्तु । योऽसौ राजसूययज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं गोप्तारं वसुमित्रमादिश्य संवत्सरोपावर्तनीयो निरर्गलस्तुरगो विसृष्टः स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन यवनानां प्रार्थितः । तत उभयोः सेनयोर्महानासीत्सम्मर्दः ।

( धारिणी विषादं रूपयति । )

राजा—कथमीदृशं संवृत्तम् । ( शेषं पुनर्वाचयति । )

**ततः परान्पराजित्य वसुमित्रेण धन्विना ।**
**प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ॥ १५ ॥**

King. Tell the council then that written orders to the effect should be sent to Vīrasena, the commander-in-chief.

Chamberlain. As the king commands. *(Goes out and re-enters with a letter accompanied by a present)* The king's order is carried out. But this letter along with a present has arrived from the commander-in-chief, king Puspamitra; let the king look at it.

*(The king rises quickly, puts the present respectfully upon his head and then hands it to the attendants; he then makes as if he opens the letter.)*

Dhāriṇī. Ha, how my heart is eager to learn the contents of the letter! I would learn, after the news of the health of my father-in-law, how my son Vasumitra has been doing. Surely the commander has put a very heavy duty on my son.

King. *(Sits down and reads)* May fortune attend thee! From the sacrificial enclosure, the commander-in-chief Puṣpamitra sends this mesage to his long-lived son Agnimitra who is in the Vidiśā country, affectionately embracing him: be it known to thee: I, having been consecrated for the Rājasūya sacrifice, let loose a horse, free from all restraint, which was to be brought back at the end of a year, and appointed Vasumitra as its defender, girt round by a hundred princes; the same horse while wandering on the right bank of the Indus, was claimed by a cavalry squadron of the Yavanas. Thereafter ensued a fierce struggle between the two armies.

*(Dhāriṇī wears an expression of despondency.)*

King. How could it be so? *(Reads the rest of the letter.)*

And then Vasumitra, the mighty bowman,
having repulsed his foemen, brought back my
excellent horse which was being forcibly carried
off by them. (15)

धारिणी—इमिणा दाणिं अस्ससइ मे हिअअं। [ अनेनेदानी-माश्वसिति मे हृदयम्। ]

राजा ( लेखशेषं वाचयति। ) सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो वक्ष्ये। तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति।

राजा—अनुगृहीतोऽस्मि।

परिव्राजिका—दिष्ट्या पुत्रविजयेन दम्पती वर्धेते। ( देवीं विलोक्य। )

भर्त्रासि वीरपत्नीनां श्लाघ्यायां स्थापिता धुरि।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः॥ १६॥

विदूषकः—होदि परितुट्ठोम्हि पिदरं अणुगदो वच्छोत्ति। [ भवति परितुष्टोऽस्मि पितरमनुगतो वत्स इति। ]

राजा—मौद्गल्य कलभेन खलु यूथपतिरनुकृतः।

कञ्चुकी—

नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मयमादधाति।
यस्याप्रधृष्यः प्रभवस्त्वमुर्वै-
र्वह्नेरपां दग्धुरिवौर्वजन्मा॥ १७॥

राजा—मौद्गल्य यज्ञसेनश्यालमुररीकृत्य मुच्यन्तां सर्वे बन्धनस्थाः।

कञ्चुकी—यदाज्ञापयति देवः। [ इति निष्क्रान्तः ]

धारिणी—जअसेणे गच्छ इरावदीपमुहाणं अन्देउराणं पुत्तस्स विअअउत्तन्तं णिवेदेहि। [ जयसेने गच्छ इरावतीप्रमुखानामन्तः-पुराणां पुत्रस्य विजयवृत्तान्तं निवेदय। ]

प्रतीहारी—तह। [ तथा। ] ( इति प्रस्थिता। )

धारिणी—एहि दाव। [ एहि तावत्। ]

प्रतीहारी—( प्रतिनिवृत्य ) इअम्हि [ इयमस्मि। ]

Dhārinī. Now, that relieves my heart.

King. ( *Reads the rest of the letter.* ) So that now I will offer a sacrifice, having had my horse brought back to me by my grandson, even as Anśumat brought back the horse to Sagara. So, now, dismissing anger from your mind, you must forthwith come with my daughter-in-law to witness the sacrifice.

King. I am indeed favoured.

Parivrājikā. I congratulate the couple on the victory of their son. ( *Looking at the queen* )

By your husband you have been established
in the commendable position of the foremost of
the wives of heroes; but it is your son that gives
you the title of the mother of heroes. ( 16 )

Vidūsaka. Your highness, I am well pleased that the son takes after his father.

King. Maudgalya, indeed, the young elephant has imitated the leader of the herd.

Chamberlain.

Not even by such great display of valour does
he produce astonishment in our minds, whose
irresistible and lofty source you are as (the sage)
Aurva is of the fire that consumes water. (17)

King. Maudgalyā, let all prisoners including the brother-in-law of Yajnasena, be set at liberty.

Chamberlain. As the king commands. *(Exit)*

Dhārinī. Jayasenā, go and give the news of my son's victory to Irāvatī and other ladies of the harem.

Door-keeper. As the queen orders. ( *She sets off* )

Dhārinī. Come here a moment.

Door-keeper. ( *Turning back* ) Here I am

